# PREFACE.

The play Tapatîsamvarana (तपतीसंवरण) derives its name from Tapati and Samvarana, the heroine and hero. The plot of the play is taken from the story of Samvarana, the father of Kuru and husband of Tapatî described in chapters 171–173 of the Âdiparva of the Mahâbhârata.

The edition of the drama is based on four manuscripts 2 or 3 centuries old obtained from the Palace Library. The variants of the manuscripts which are denoted by the letters क. ख. ग. and घ. are shown at the foot of the pages. The commentary published along with the text is based on one manuscript which is almost correct and like the text is noted for its high literary excellences. In fact, we may safely assert that, of the many commentaries of Kâvyas that we know of, there is none that can compare with this

The King Kulasekhara Varma, ruler of Mahodayapura and "the best of the descendants of the Kerala family" is, as stated in the prelude, the author of this drama. He was an ardent admirer of "the Paramahamsas" (ascetics of the highest order). That the author was a staunch devotee of God Vishnu is evident from the last verse of the play expressing a longing for complete devotion towards God "Srîdhara" as well as from the commentator's reference to him as "Paramabhâgavata". There is another commentary to this drama and to Subhadra-dhananjaya, another work of the same author. Its function is merely to explain the suggestive significances (व्यङ्ग्यार्थ) of the expressions and passages of the play. The latter commentary (व्यङ्ग्यव्याख्या) is alluded to in the second verse of the above mentioned commentary, thus:—

'ग्रन्थकारसमकालभवेन व्यङ्ग्यरूप इह चान्तरोऽर्थः ।
व्याकृतः सुमतिना पदवाक्ये मोपयोगमधुना स्फुटयामि ॥'

The author of the Vyangyavyakhya (व्यङ्ग्यव्याख्या) makes the following observation by way of introduction, —

'कालेऽथेति वर्तमाने कस्मिंश्चिदह्नि प्रातरुपाय चूर्णिकासरिद्वारि अनुष्ठितपूर्वसन्ध्येन दृष्टपरमेश्वरमङ्गलस्थपरमपुरुषेण प्रासादमन्दिरालिन्ददेशप्रक्षालितकरचरणेन हसन्तिकोचलच्छशानुशमितशीतरुजेन जपध्यानपरेण मया केरलेश्वरवचनकारी कश्चिद् ब्रह्मबन्धुः समलक्ष्यत ।

स च सत्कृतसत्कारो यथाविधि सुमानितः ।
सपृष्टकुशलप्रश्नः सादरं स्थापितो भुवि ॥
पृष्टागमनहेतुः स मामवोचदिदं वचः ।
भवन्तमधुना राजा संदिदृक्षुरिति स्म सः ॥

अथ मयामुना सहारूढसन्वाशय्यासम्पादितस्वादुवस्तुसाख्यया नावा चूर्णिकासरिदावाह्यमानया सत्वरं महोदयाख्यं पुरं गम्यते स्म ।

अथ तत्र तथा गच्छन्नपश्यं केरलाधिपम् ।
समासीनं विराजन्तं मध्येनागारिविष्टरम् ॥
किरीटमकुटप्रोद्यन्मणिश्चालिसवर्णकम् ।
उन्नम्रभालघोणासबाहुमूलोदरान्वितम् ॥
दूरदार्वाक्षिदोर्नड्वायुगलाञ्चितविग्रहम् ।

अङ्कविक्षिप्तनखरं सर्वलोकप्रियं नृपम् ॥
सप्रश्रयमहं तत्र सदस्यवहितोऽगमम् ।
निःस्यन्दमानसुधया वाचा सत्कुरुते स्म माम् ॥
मुहूर्तं स्थितवत्यस्मिन् मय्यत्र स महीपतिः ।
श्रितप्रसादया दृष्ट्या वीक्षमाणः सभासदः ॥
अनुज्ञाप्योदगात् तस्मान्निरगच्छं मया सह ।

रहो नर्म वदन् प्रायान्मन्त्रशालामनन्यगाम् ॥
अथावदत् सुखासीनं मां नरेशः प्रहृष्टवान् ।
रचिताद्य मया विद्वन् कथञ्चिन्नाटकद्वयी ॥
एकं सवरणं नाम धनञ्जयमितीतरत् ।
ध्वनिलक्षणयुक्ता सा रचिता नाटकद्वयी ॥

ध्वनियुक्तकाव्यसरणिः शस्तेति प्रोच्यते बुधैः ।
एतस्माद् ध्वनियुक्ता सा रचिता नाटकद्वयी ॥
द्रष्टव्या भवता सेयं नाट्यलक्षणवेदिना ।
ता [पश्यन्नवधार्यैषा?] सदसद्वेति कथ्यताम् ॥
साधुश्चेत् प्रेक्षको भूयाद् भवानस्मि नटस्तथा
प्रयोगमार्गं भवते दर्शयिष्यामि तत्त्वतः ॥
भूयश्चारोपयिष्यामि रङ्गमेतत्कुशीलवैः ।
इति तेन प्रोक्तस्तद्दर्शितप्रयोगमार्गोऽहम्

From the above remarks it is evident that our author was a king of the country of Kerala and that Mahodayapura was a city that could be reached from Parameswaramangalam by a river called Churni. It is generally known that what is called Mahodayapura is none other than the present 'Tiruvanchikkulam', a village near Kodungallur in the Cochin State and that the river Churni is what is now known as Periyar. As for the place Parameswaramangalam mentioned in the introductory stanzas of the Vyangyavyakhya (व्यङ्ग्यव्याख्या) it might have been the home of the Brahmin author of the said Vyangyavyakhya (व्यङ्ग्यव्याख्या) for the homes of the Nambudiri Brahmins of high descent have been known under such appellations, for example Desamangalam, Narayanamangalam &c. Where that place is now to be found, what other name it has now assumed and if any descendant of the commentator still lives from whom perhaps the date of his ancestor the contemporary of Kulasekhara Varma, might be ascertained — these have been much inquired after but no definite information has been obtained * but from the

* My friend [illegible] of Kodungallur to whom a reference was made [illegible] the story [illegible] as follows — According to local tradition [illegible] and a Brahmin by name T[illegible] who was no better than a court jester flourished in the reign of King Kulasekhara [illegible] that the latter is also said to have composed a [illegible] It is possible that [illegible] might have been the author of the Vyangyavyakhya.

Vyangyavyâkhya (व्यङ्ग्यव्याख्या); we can see that its author was a confidant of the king Kulasekhara, but not very learned. From these facts, we can infer that the author of Tapatisamvarana is the same as the king Kulasekhara who is known in the Srî Vaishnavait Tamil literature as Kulasekharâlwar and honoured as one of the greatest of the Vaishnava Saints; for the reason that both of them were kings of the same country as well as devotees of God Vishnu. That Vanchikkalam was the mother-land of Kulasekharâlwar is testified by the following quotations taken from the Tamil Prabandha of Srî Vedântadesika.

> 'பொன்புரையும் வேறகுலசேகரனே மாசிப்புனர்பூசத்தெழு
> ல் வஞ்சிக்களத்திறசேருளறி அன்புடனே நமபெருமாள் செ
> மபொற கோயிலினைத்தலமா பெருவாழ்வுமுடியார் தஙகள
> இன்பமிகுபெருஙகுழு உடகர்ள மன் மேவிருளிய வென்
> றெடுத்த விசையிற சொன்ன நன்பொருள் சேர் திருமொழி
> .பாறறைநது பாடடு நன்றாக வெனக்கருள் செய் நல்லி நீயே'
>
> (பிரபநத சாரம் அ)

The same Vanchikkalam with the prefix "Tiru" for Sri becomes Tiruvanchikkalam identified with the ancient Mahodayapura.

The date of the author is not exactly known; but this much is certain that he flourished later than Dhananjaya, the author of Dasarûpaka, who lived in the latter part of the 10th century A. D., for the author of the Vyangyavyâkhya (व्यङ्ग्यव्याख्या), who was a contemporary of Kulasekhara, makes references to Dasarûpaka in his commentary. The prelude discloses that our author has written a kind of prose work (कथा) called Âscharyamanjari. From this work, the passage "उरःस्थित कुशलमालिभिः" is quoted in the commentary of Amarakosa named Tikâsarvasva (टीकासर्वस्व) when the word; Kusala (कुशल) is annotated in the First Kanda. The author of Tikâsarvasva viz. Vandyaghatiya Sarvânanda, (वन्द्यघटीयसर्वानन्द) in the course of treating the passage, "द्वे कुशलके द्वे सात." gives the

number of the Saka and Kali year as follows :—

"इदानीं चैतान्येकत्रिंशदधिकसहस्र(1031)पर्यन्तेन शकाब्दकालेन
षष्ट्यधिकद्विशताधिकचतुस्सहस्राणि(4260) कलिगताब्दा भूतानि"

This date corresponds to the year 1159 of the Christian Era. So the date of our author must be somewhere between the latter part of the 10th century and the early part of the 12th century.

Tradition assigns the Kali-year 1680 (1422. B. C.) as the date of Kulasekharalwar mentioned in the Tamil Prabandhas. If this date is to be accepted, our author Kulasekhara Varma cannot be the same as the Kulasekharalwar but might be his descendant.

As regards the date and home of Sivarâma, the author of the commentary published in this volume, very little is known, except that he has written a commentary of equal merit on Subhadrâdhananjaya also, which, with the commentary, will be published as one of this Sanskrit Series.

Trivandrum. T. GANAPATI SÂSTRÎ.

# निवेदना ।

इदं नाटकं तपतीसंवरणावधिकुर्वत् तपतीसंवरणमित्याख्यातम् । कुरु-पितुस्तपतीपतेः संवरणस्योपाख्यानं यत्तद् महाभारते आदिपर्वणि (अध्या. १७२-१७३) वर्णितं, तदिह प्रतिपाद्यं वस्तु । अत्र यावती, व्याख्यानेऽप्यस्यानेन सह प्रकाशिते तावती रसानुगुणैकान्तहृदयङ्गमा गुणानां समृद्धिः । अस्मद्विदिते काव्यव्याख्यानवर्गेऽनेन व्याख्यानेन सह गणनामर्हन् व्याख्यानग्रन्थ एव कश्चिन्नास्तीति शक्यं वक्तुम् ।

अस्य नाटकस्य संशोधनाधारतया चत्वार आदर्शाः शुद्धप्राया द्विशतवर्षवृद्धा राजकीयग्रन्थशालायामुपलब्धाः, व्याख्यानस्य त्वेकः । स च शुद्धः प्रायः । तेषां च पाठभेदाः क.ख.ग.घ. चिह्नकरणेन तत्तत्पृष्ठेषु निवेशिताः ।

कविः पुनरस्य नाटकस्य 'महोदयपुरपरमेश्वरः परमहंसपादपद्माराधकः केरलकुलचूडामणिः कुलशेखरवर्मा' नाम कश्चिद् राजेति प्रस्तावनायामुक्तम् । भरतवाक्याच्च श्रीधरविषयभक्तिपरिपाकप्रार्थनपरात् तस्य विष्णुभक्तत्वं गम्यते । व्याख्याता चैनम् 'अथ परमभागवतः श्रीकुलशेखर' इति वदन् विष्णुभक्तोत्तमं मन्यते । अस्ति एतस्य नाटकस्यैतत्कविकृतेः सुभद्राधनञ्जयस्य च व्यङ्ग्यार्थमात्रप्रतिपादनपरा काचिद् व्याख्या, या प्रकृतस्य व्याख्यानस्य द्वितीयश्लोके —

'ग्रन्थकारसमकालभवेन व्यङ्ग्यरूप इह चारुतरोऽर्थः ।
व्याकृतः सुमतिना पदवाक्ये सोपयोगमधुना स्फुटयामि ॥'

इति स्मृता । तस्या उपोद्घाते तत्कर्ता वदति —

"कालेऽथेति वर्तमाने कस्मिंश्चिदह्नि प्रातरुत्थाय पुत्रापहृतग हस्तेनोत्थाय चूर्णिकासरिद्वारि अनुष्ठितपूर्वसन्ध्येन दृष्टपरमेश्वरमङ्गलस्थपरमपुरुषेण प्रासादमन्दिरालिन्ददेशप्रक्षालितकरचरणेन हसन्तिकोल्मुकशानुशमितशीतरुग्णेन जपध्यानपरेण मया केरलेश्वरवचनकारी कश्चिद् ब्रह्मबन्धुः समलक्ष्यत ।

स च सत्कृतसत्कारो यथाविधि सुमानितः ।
संपृष्टकुशलप्रश्नः सादरं स्थापितो भुवि ॥

पृष्टागमनहेतुं स मामवोचदिदं वचः ।
भवन्तमधुना राजा संदिदृक्षुरिति स्म सः ॥

अथ मयामुना सहारूढखट्वाशय्यासम्पादितस्वादुचम्तुसौख्यया नावा चूर्णिकासरिदावाह्यमानया सत्वरं महोदयाख्यं पुरं गम्यते स्म ।

अथ तत्र तदा गच्छन्नपश्यं केरलाधिपम् ।
समासीनं विराजन्तं मध्येनागारिविष्टरम् ॥
किरीटमकुटप्रोद्यन्मणिश्रीलिप्तवर्णकम् ।
उन्नम्रभालघोणांसबाहुमूलोदरान्वितम् ॥
दूरदीर्घाक्षिदोर्जङ्घायुगलाञ्चितविग्रहम् ।
... .... .... ... .... ...
अङ्कविक्षिप्तनखरं सर्वलोकप्रियं नृपम् ॥
सप्रश्रयमहं तत्र सदस्यबहितोऽगमम् ।
निष्यन्दमानसुधया वाचा सत्कुरुते स्म माम् ॥
मुहूर्तं स्थितवत्यस्मिन् मय्यत्र स महीपतिः ।
श्रितप्रसादया दृष्ट्या वीक्षमाणः सभासदः ॥
अनुज्ञाप्योदगात् तस्मान्निरगच्छन्मया सह ।
रहो नर्म वदन् प्रायान्मन्त्रशालामनन्यगाम् ॥
अथावदत् सुखासीनं मां नरेशः प्रहृष्टवान् ।
.. .... .... .... .... ....
रचिताद्य मया विद्वन्! कथञ्चिन्नाटकद्वयी ॥
एकं संवरणं नाम धनञ्जयमितीतरत् ।
ध्वनिलक्षणयुक्ता सा रचिता नाटकद्वयी ॥
ध्वनियुक्काव्यसरणिः शस्तेति प्रोच्यते बुधैः ।
एतस्माद् ध्वनियुक्ता सा रचिता नाटकद्वयी ॥
द्रष्टव्या भवता सेयं नाट्यलक्षणवेदिना ।
तां पश्यन्नवधार्यैषा सदसद्वेति कथ्यताम् ॥
साधुश्चेन्प्रेक्षको भूयाद् भवानस्मि नटस्तथा ।
प्रयोगमार्गं भवते दर्शयिष्यामि तत्त्वतः ॥

भूयश्चारोपयिष्यामि रङ्गमेतत् कुशीलवैः ।
इति तेन प्रोक्तस्तद्दर्शितप्रयोगमार्गोऽहम् ..............."

इति । तेनास्मत्कविः केरलेश्वर इत्यपि विज्ञायते, महोदयपुरं च परमेश्वरमङ्गलाचूर्णीनदीजलपथेन प्राप्यमिति- । इदं च महोदयपुरं 'तिरुवञ्चिक्कळम्' इत्यधुना देश्यभाषया व्यपदिश्यमान ग्राममभियुक्ता आहुः, यो गोश्रीराज्यान्तःपातिनः 'कुरुम्बालयनगरस्या'न्तिके सन्निविष्टः । चूर्णी च 'पेरियार्' इत्याहुः । यत्तु परमेश्वरमङ्गलमुदाहृतोपोद्घातोक्तं, तद् व्यङ्गयव्याख्याकारस्य ब्राह्मणस्य निवासस्थानं भवेद् 'देशमङ्गला'दिकमिवाभिजातब्राह्मणानाम् । तस्य पुनः किं नामधेयं, परमेश्वरमङ्गलं क निविशते, केन नाम्नाद्यत्वे व्यपदिश्यते, तत्र व्यङ्गयव्याख्याकारवंश्यः क इदानीं वर्तते — यत्सकाशात् तत्पूर्वपुरुषस्य कुलशेखरवर्मसमकालिकस्य कालविज्ञानं प्रत्युपायलाभप्रत्याशा स्याद्; इत्यादिकं तु कृतप्रयत्नेनापि मया न विज्ञातु पारितम्* । केवलमस्माद् व्यङ्गयव्याख्याग्रन्थात् तत्कर्ता राजरहोविस्रम्भपात्रं कश्चित् पण्डितबन्धुरिति प्रतीयते । स एष एवंगुणस्तपतीसंवरणकविः श्रीवैष्णवप्रबन्धेषु परमभागवतत्वेन गणितः कुलशेखराळ्वार् इति कीर्तितः कुलशेखरभूपतिरेव कामं संभाव्यते, यस्माद् राजत्वम्, अभिजनदेश', परमभागवतत्वं च द्वयोः समानमवगतम् । तस्याभिजनभूमिर्हि 'वञ्चिकळम्' इत्युच्यते श्रीवेदान्तदेशिककृते द्रमिलप्रबन्धे, यथा —

'பொன்புரையும் வேற்குலசேகரனே மாசிப்புனர்பூசத்தெ
ழில் வஞ்சிக்களத்திற்றோன்றி அன்புடனே நம்பெருமான்
செம்பொற் கோயிலினைத்தலையின் பெருவாழ்வு மடியா
தங்கள் இன்பமிகுபெருங்குழு உங்காணமன் பேசிருளிய
வென்றெடுத்த விசையிற் சொன்ன நன்பொருள சோதிரு
மொழி தாறறைந்த பாட்டு நன்குக வெணக்கருள் செய் நல்
கி நீயே'

(பிரபந்த சாரம்—அ)

---

* मत्प्रियमित्र (कोदुङ्गल्लूर्) कुञ्जिक्कुट्टापरनामा श्रीरामवर्मराजमहाशय इममर्थमनुयुक्त आह — 'कदा स राजासीत्; केके वा तस्य सदस्या विद्वांसः; इत्यादिकं सूक्ष्मतो विज्ञातु न शक्यत एव । युधिष्ठिरविजयनामयमकाव्यकर्ता वासुदेवभट्टः तोलाभिधो विदूषकनिर्विशेषो ब्राह्मणश्च कुलशेखरवर्मसदस्यावास्तामित्यनुश्रूयते । परमेश्वरमङ्गलालयश्चैतयोर्द्वितीयो विद्वान् सम्भाव्येत, तत्रासमीचीन स्यादिति मन्ये । एष किल केवल वंशक्रमेण माहोदयपुराधीशचरितकाव्य व्यरचयदिति प्रसिद्धम् । न तु दृष्टचरोऽयं ग्रन्थ' इति ।

इति । तदेव श्रीवाचकतिरुशब्दपूर्वं 'तिरुवञ्चिकुळं' भवति महोदयपुरशब्दितम्।

अस्य कवेर्जीवितसमयो न निश्चितः । तथाप्ययं दशरूपककर्तुः कैस्ताब्दीयदशमशतकजीविनो धनञ्जयादर्वाचीन इत्यत्र न सन्देहः, यतोऽस्मत्कविसमकालिकः पूर्वोक्तो व्यङ्ग्यार्थव्याख्याकारो दशरूपकं स्मृतवान् । आश्चर्यमञ्जरीनामधेयः कथालक्षणो गद्यकाव्यविशेषोऽप्यनेन प्रणीत इति प्रस्तावनातो विज्ञायते । तस्याश्च कश्चित् प्रयोगः "कुरङ्गैरिव कुशलवादिभिरित्याश्चर्यमञ्जरी च" इत्येवं प्रमाणितोऽमरकोशव्याख्याने टीकासर्वस्वनाम्नि "भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्" इत्यत्र कुशलशब्दव्युत्पादने । टीकासर्वस्वकारो वन्द्यघटीयः सर्वानन्दस्तु "दैवे युगसहस्रे द्वे ब्राह्मः" इत्येतद्विवरणप्रसङ्गात् —

"इदानीं चैकाशीतिवर्षाधिकसहस्रैक(१०८१)पर्यन्तेन शकाब्दकालेन षष्टिवर्षाधिकद्विचत्वारिंशच्छतानि(४२६०)कलिसन्ध्याया भूतानि"

इति तादात्विकं शकाब्दं कल्यब्दं च वदन् स्वस्य ११५९ तमे कैस्तवर्षे सत्तां प्रकाशयति । तेनास्मत्कविस्तस्मात् प्राचीन इत्यप्यवधार्यते । यदि तु देशिकप्रबन्धायुक्तस्य कुलशेखरस्य कवेरष्टाविंशं पराभववर्षं तथा च— ११८० तमं कलिवर्षं — जन्मसमय इति तत्प्रसिद्धेः प्रामाण्यमुपगम्यते, तर्हि मा भूदस्मत्कवेस्तदभेदः, तद्वंश्यता तु तत्रभवतो वक्तुं शक्या ।

व्याख्यानकारः शिवरामः कुत्र कदा जात इति न ज्ञातम् । एतद्व्याख्यानसदृशं 'सुभद्राधनञ्जय'स्यापि व्याख्यानमनेन निर्मितमस्ति, यत् तेन सहास्यां ग्रन्थावलौ प्रथयिष्यामः ॥

अनन्तशयनम्.

त. गणपतिशास्त्री.

श्रीः ।

श्रीकुलशेखरवर्मभूपालविरचितं

# तपतीसंवरणं

विवरणसमेतम् ।

---

## प्रथमोऽङ्कः ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

**सूत्रधारः**—

लक्ष्मीर्घर्मजलच्छलेन सुधया दन्तच्छदच्छद्मना
सोदर्येण च कौस्तुभेन शकलेनेन्दोर्ललाटात्मना ।

---

प्रणिपत्य चन्द्रचूडं श्रीमत्कुलशेखरावनीन्द्रकृतम् ।
तपतीसंवरणाख्यं नाटकमधिकृत्य विवरणं क्रियते ॥
ग्रन्थकारसमकालभवेन व्यङ्ग्यरूप इह चारुतरोऽर्थः ।
व्याकृतः सुमतिना पदवाक्ये सोपयोगमधुना स्फुटयामि ॥

इह खलु परमभागवतेन श्रीकुलशेखरवर्मणा नाटकमुखेन प्रयुक्तं मङ्गलाश्रयं लक्ष्मीशब्दं तदनुगुणं गणं च इतिवृत्तसूचनप्रविष्टनटमुखेन प्रयुञ्जताविघ्नसमाप्त्यादिसकलसमीहितसाधनं मङ्गलाचरणमासूत्रितम् । ततः प्रविष्टः सूत्रकृत् साम्मुख्यसम्पादनाय सामाजिकान् प्रत्याशिषं प्रयुङ्क्ते—लक्ष्मीरित्यादि । लक्ष्मीः भवतां कामप्रसूः कल्पताम् । लक्ष्मीः निजकटाक्षपातमात्रजनितविश्वोदयलक्ष्यवैभवा भुवनमाता । भवताम् अर्थात् सामाजिकानां पूज्यतमानां युष्माकम् । कामप्रसूः काम्यन्त इति कामाः सकलपुरुषार्थतत्साधनरूपाः तेषां यथापेक्षं सम्पादयित्री । कल्पतां सम्पद्यताम् । देवतान्तराणां प्रतिनियतफलसम्पादन एव सामर्थ्यम् इयं सर्वकामान् प्रसूते । युष्माकं यथारुचि यथाधिकारं सर्वसाध्यभरसहिष्णुत्वं चास्ति । तत्र इदमेवाशास्यत इति भावः । तत्र परदेवतां साध्यानुगुणं विशिनष्टि—

पाणिस्पर्शविधावमीभिरुचितैर्नीतेव दातुं विभो-
रालम्ब्याङ्गमधोक्षजस्य भवतां कामप्रसूः कल्पताम्॥ १ ॥

पाणिस्पर्शविधौ उचितैरमीभिः विभोरधोक्षजस्य दातुमङ्गमालम्ब्य नीतेव । पाणिस्पर्शविधिः परिणयनानुष्ठानम् । पुरा किल भगवती पुरुषोत्तमशक्तिरविनाभूतापि लोकानुग्रहाय प्रादुर्भावं प्रकाशयन्ती अपर्णेव हिमवन्तं क्षीरार्णवं पितृत्वेनाङ्गीकृत्य अमृतमथनमध्ये कौस्तुभादिभिः सह प्रादुर्भूय सकलसुरसमाजसभाजितं चतुर्भुजं स्वयंवरितुं करकमलविमलमालालङ्कृता यदा समुद्यता, तदा लोकोत्तरेणाङ्गोपाङ्गसौन्दर्येण समुचितकान्तविषयरतिसमुल्लसितेन सात्त्विकानुभावेन च शोभमाना तामवस्थामेव विवाहत्वेनाङ्गीकृत्य प्रकृतसौरूप्यविकारापह्नवेन एवमुत्प्रेक्ष्यते । अमीभिरिति विवरणं हृदि निधाय समष्ट्या कथनम् । उचितैः सहजत्वेन नयनयोग्यैः । विभोः अपरिच्छिन्नव्याप्तिकस्य 'अधो न क्षीयते जातु' इति व्युत्पत्त्या नित्यस्य निर्विकारस्य पुरुषोत्तमस्य । अत एव गौरवेण सम्बन्धिनयनयोग्यत्वम् । दातु समर्पयितुम् । नित्याया विष्णुशक्तेर्न कदाचिद् विनाभावः, अतो नित्य एव सम्बन्धः, पृथग्भावः कल्पनाकृत एव । अत एव प्रकाशितपृथग्भावायाः समर्पणमेव दानम् । अत एव सम्प्रदानत्वेनानिर्देशः । अधोक्षजस्य लक्ष्मीरिति च सम्बन्धः स्फुरति । अङ्गमालम्ब्य सौहार्देनापृथग्भावमालम्ब्य । नीतेव समीपं प्रापितेव । यथा लोके लोभनीया कन्या महते पुरुषाय दातुं सहजादिभिः करचरणादीन्यङ्गान्यालम्ब्य सादरमुद्धृत्य नीयते, तथेहापि नयनमुत्प्रेक्ष्यते । अमीभिरिति नापुंसकः संस्कारः । अमीभिरिति समष्टिकथने केन कया वा इत्याकाङ्क्षायामाह—सुधया घर्मजलच्छलेन कपोलमणिदर्पणादिषु समुद्भूतस्वेदबिन्दुव्याजेन । अत्र स्थूलधियामेव घर्मजलबुद्धिः । तत्र, सुधैव इति प्रकृतापह्नवः । दन्तच्छदच्छद्मना कौस्तुभेन अत्रापि 'परिणमति रोमावलिवपुरि'त्यादिवदपह्नवः । अत्र सोदरत्वं सर्वसाधारणम् । अत्र घर्मजलस्य सुधया दन्तच्छदस्य कौस्तुभेन ललाटस्येन्दुशकलेन च हृद्यतादिना साम्ये प्रतिपाद्ये प्रकृतं निषिध्याप्रकृतसाधनरूपयापह्नुत्या तदनुगृहीतयोत्प्रेक्षया च लोकमातुः प्रियतमसन्निधिसमुचितविकारस्फुरणं तदानन्दावहं लोकोत्तरमङ्गचातुर्यं च प्रकाशितम् । तेन समुचितालङ्कारसमेधितस्य वाक्यार्थस्य देवताविषयरतिरूपं भावं प्रति जागरणं प्रतिपादितम् । अत्र दिव्यमिथुनप्राथमिकसम्बन्धप्रतिपादनेन उत्तमप्रकृतिनायकाश्रयः शृङ्गाररसोऽत्र प्राधान्येन प्रतिपाद्यत इत्यासूत्रितम् ॥ १ ॥

(विचिन्त्य)

अलं प्रविस्तरेण । अधुनातनमभ्युदयप्रमोदातिभारमात्मकुटुम्बिन्यै संविभजामि (परिक्रम्य नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

नटी— (क) अय्य! इअह्मि ।

सूत्रधारः—आर्ये! अद्याहमार्यमिश्रैराज्ञप्तः यथा—भवता तावद् अपूर्वेऽस्मिन्नादिराजकथासनाथे तपतीसंवरणनाम्नि नाटके

---

(क) आर्य! इयमस्मि ।

---

एवमाशिषं प्रयुज्य सूच्यसूचनप्रस्तावाय समापयति—अलमिति । वर्णनीयस्य गौरवेणास्माकं भक्त्या च पुनः पुनर्वर्णयितुमेव युक्तम् । अस्माकमन्यत्र संरम्भाद् इयतैवाभीष्टस्योक्तत्वाच्च प्रचुरप्रशंसनस्य नाय काल इति भावः । कुत्र पुनरुद्यम इत्यत्राह—अधुनातनमिति । अधुनातनमित्यनेनापेक्षितकालसिद्ध्या औत्सुक्यं प्रतिपादितम् । अभ्युदयप्रमोदातिभारम् अभ्युदयनिमित्तप्रमोदरूपमतिभारम् । अभ्युदयः वक्ष्यमाणो हृदयस्थापितः सामाजिकाज्ञालाभः, तस्य प्रयोगेण ख्यातिलाभपूजाहेतुत्वात् प्रमोदः, तस्य प्राचुर्येणातिभारत्वमारोपितं, तम् आत्मकुटुम्बिन्यै संविभजामि । आत्मशब्देन गुणवत्तया कुटुम्बिन्यां पक्षपातातिशयः प्रकाश्यते । अत एव संविभागयोग्यत्वम् । लोके दुर्भरस्य भारस्य इष्टजनविभजने वोढव्यत्वं दृष्टम् । तत एवमुक्तिः । ततश्श्रेष्ठतया आह्वानम् । आर्ये! इति अन्योन्यसमुदाचारप्रकारः । इतस्तावदिति तस्याः स्वाधीनतातिशयेन शेषानिर्देशः । अभीष्टस्य नोच्चैः कथनीयत्वमितीतस्तावदित्युक्तम् ॥

झटिति समागतां तामाह—अद्येति । अद्य विश्रान्तप्रयोगैरस्माभिरपेक्षिते काले । आर्यमिश्रैः सामाजिकैः, न तु तन्नियुक्तेनान्येन । आज्ञप्तः सादरं नियुक्तः । भवतेत्यादि इतीत्यन्तं नियोगप्रकारः । भवता नटवर्गपूज्येन । तावत् प्रथम, पुनः प्रयोगान्तरनिरूपणम् । अपूर्वे नूतने तेन च रुचिहेतुत्वम् । आदिराजस्य संवरणाख्यस्य कथया इतिवृत्तेन सनाथे वैशिष्ट्यं प्रापिते । अनेन तस्य नायकत्वं तच्चरितस्याधिकारिकत्वं च प्रकाशितम् । तपतीसंवरणनाम्नीति प्रबन्धनामकर-

---

१. पदमिदं ख.ग.घ पुस्तकेषु न दृश्यते.

नवरसानि प्रयोगामृतान्तराणि वयं पाययितव्या इति ।

नटी—(क) अय्य! सुद्दअकाळिदासहरिसदण्डिप्पमुहाणं महाकईणं अण्णदमस्स कस्स कविणा इदं णिवन्धणं, जेण अय्यमिस्साणं एत्तिअं कोदुअं वड्ढावेइ ।

सूत्रधारः—आर्ये! मा मैवम्[2] । यस्य परमहंसपादपङ्केरुहपांसु-

(क) आर्य! शूद्रककालिदासहर्षदण्डिप्रमुखाणां महाकवीनामन्यतमस्य कस्य कवेरिदं निबन्धनं, येनार्यमिश्राणामेतावत्कौतुकं वर्धयति ।

---

णस्यौचित्यम् । नाटकम् इत्यनेन रूपकविशेषश्च प्रकाशितः । प्रयोगामृतान्तराणि अतिसम्बद्धचतुर्विधाभिनयप्रयोगरूपाणि अमृतान्तराणि अमृतविशेषान् वयं पाययितव्याः । प्रयोगस्य हृद्यतया अमृतत्वारोपः तच्छेषतया पेयत्वम् । अत्र विशेषवाचिना अन्तरशब्देन पूर्वामृताद् व्यतिरेकः सूचितः । तं प्रकाशयति—नवरसानीति अमृतविशेषणम् । अत्र प्रयोगामृतस्य नायकेतिवृत्ताश्रयत्वाद् अङ्गाङ्गिभावेन नव रसाः सन्ति । तेषां खलु प्राधान्येनाभिनेयत्वम् । पुराणस्यामृतस्य एकरसत्वमेवेति विशेषः । अस्मिन् नाटके परमानन्दकन्दभूते नवरसाभिनयेन भवता वयं प्रीणनीया इत्यर्थः ॥

इति सामाजिकनियोगं श्रुत्वा एकदेशस्य निश्चयदर्शनद्वारेण सा पृच्छति—शूद्रकेति । शूद्रकादीनामन्यतमस्य कस्य कवेरिदं निबन्धनम् । तेषामन्यतमस्येति निश्चयम् । तेषु कस्य इत्येव जिज्ञासा । कथं निश्चय इति चेत् तत्राह—येनेति । येनान्यतमस्यैवेदं निबन्धनम् आर्यमिश्राणामियत् कौतुकं 'प्रयोगामृतान्तराणि वयं पाययितव्या' इति प्रार्थनापर्यन्तं वर्धयति । तेष्वन्यतमस्यैव निबन्धन एव कौतुकयोग्यतेति भावः ॥

इति तदुक्तिमसहमान आह—मा मैवमिति । वादीरिति शेषः । पुरातनकविनिबन्धनमेवेदं सहृदयकौतुकावहम् इति इदमपर्यं मा कृथा इति तदुक्तिमाक्षिप्य कविनामप्रकटने—यस्येत्यादि । यस्य [illegible] [illegible] आश्चर्यमञ्जरीनामधेया कथा [illegible] [illegible] । [illegible] [illegible] [illegible] [illegible] । आत्मेति

पटलपवित्रीकृतमुकुटतटस्य वसुधाविबुधधनायान्धकार-
मिहिरायमाणकरकमलस्य मुखकमलादगलद् आश्चर्य-
मञ्जरीकथामधुद्रवः ।

अपि च—

उत्तुङ्गघोणमुरुकन्धरमुन्नतांस-
मंसावलम्बिमणिकर्णिककर्णपाशम् ।
आजानुलम्बिभुजमञ्चितकाञ्चनाभ-
मायामि यस्य वपुरार्त्तिहरं प्रजानाम् ॥ २ ॥

---

प्रतिभाया अयत्नप्रसरः प्रकाशितः । अनेन पूर्वमेव प्रबन्धनिर्माणस्याभ्यासः स्पष्टीकृतः । परमहंसेत्यादिना महत्सेवया चित्तसंस्कारः प्रतिपाद्यते । यतीन्द्राणां पादपङ्केरुहपांसुपटलेन नमस्कारसंक्रान्तेन पवित्रीकृतं मुकुटतटं यस्य । अत्र राजलाञ्छनस्यापि मुकुटस्य परमयतिपादपांसुसम्बन्धेनैव शुद्धिरिति तद्बुद्धिकल्पनाश्चित्तशुद्धेरप्युपलक्षणमेतत् । अन्यथा मुकुटमात्रपवित्रीकरणेन किं प्रयोजनम् । एवं सत्सेवामुक्त्वा वदान्यत्वं प्रकाशयति—वसुधेत्यादिना । वसुधाविबुधानां भूसुराणां ब्राह्मणोत्तमानाम् इष्टापूर्त्ताद्यपेक्षया या धनाया धनश्रद्धा सैवान्धकारः व्यामोहकरत्वेन, तं प्रति मिहिरायमाणं झटित्येव निरसनात् करकमलं यस्य । अत्र मिहिरायमाणस्येत्यौपम्यात् पूर्वत्रापि सादृश्यं युक्तम् । एवं धनस्य सत्पात्रप्रतिपत्ति समर्थ्य गुणान्तरवचनाय द्वारमुद्घाटयति—अपि चेति । इतोऽप्यधिकं श्रूयतामित्यर्थः ॥ उत्तुङ्गेत्यादि । यस्य वपुः प्रजानामार्त्तिहरं दर्शनसन्निधानादिना प्रजानां सर्वपीडाविनाशकरम् । तत्र हेतुं विशेषणद्वारा प्रकटयति—उत्तुङ्गेत्यादि । घोणस्योत्तुङ्गत्वं महापुरुषलक्षणं 'महोग्रहनुनास' इत्यत्र प्रकाशितम् । कन्धराया उरुत्वं 'दशबृहद्' इत्यत्र प्रकाशितम् । अंसस्योन्नतत्वं सर्वत्र प्रसिद्धम् । अंसावलम्बिनी मणिमयी कर्णिका अलङ्कारो यस्मिन् तादृशः कर्णपाशो यस्येति बहुव्रीहिगर्भो बहुव्रीहिः । आजानुलम्बिभुजं जानुनी अभिव्याप्य लम्बमानभुजम् । अभिविधावाङ् । अञ्चितं शुद्धं यत् काञ्चनं तस्येव आभा यस्य तप्तसुवर्णवर्णमित्यर्थः । आयामि चतुर्हस्तप्रमाणम् । लक्षणान्तरोपलक्षणमेतत् । अङ्गोपाङ्गप्रत्यङ्गेषु सामुद्रादिशास्त्रोक्तमहापुरुषलक्षणसम्पूर्णम् । कियद्वा पृथगुच्यताम् । अत एवार्त्तिहरत्वं सम्भवति । अत्र "यत्राकृतिस्तत्र गुणा वसन्ति" इत्याकृतिसौष्ठवेन सर्वे गुणाः प्रकटिताः ॥ २ ॥

तस्य राज्ञः केरलकुलचूडामणेर्महोदयपुरपरमेश्वरस्य श्रीकुलशेखरवर्मणः कृतिरियमधुना प्रयोगविषयमवतरति।

**नटी** — (क) अय्य! अणवच्चस्स अवच्चुप्पत्तिणिबन्धणेण तुज्झ परिणयणन्तरब्भुदएण जणिदो पमोदो इमिणा अय्यमिस्ससासणेण विउणिओ।

**सूत्रधारः**—आर्ये! तत् प्रस्तूयतां सङ्गीतकम्।

**नटी**—(खेदमभिनीय) (ख) अय्य! एत्तिअं कालं णिअमकिलेसिअसरीरा तणअदुरासाए ण पारेमि अत्तणो अहिआरं कादुं।

---

(क) आर्य! अनपत्यस्यापत्योत्पत्तिनिबन्धनेन तव परिणयनान्तराभ्युदयेन जनितः प्रमोदोऽनेनार्यमिश्रशासनेन द्विगुणितः।

(ख) आर्य! एतावन्तं कालं नियमक्लेशितशरीरा तनयदुराशया न पारयाम्यात्मनोऽधिकारं कर्तुम्।

---

तस्येति, यस्य मुखकमलाद् आश्चर्यमञ्जरीकथामधुद्रवः अगलत् अपि च यस्य वपुः प्रजानामार्तिहरं तस्य कृतिरियम् अधुना प्रयोगविषयमवतरतीति महावाक्यसम्बन्धः। राज्ञ इत्याधिराज्यस्थितिः प्रकाशिता। केरलेत्यादिना वंशोन्नतिकरत्वम्। महोदयपुरेत्यादिना दुर्गवैशिष्ट्यम्। श्रीकुलशेखरवर्मण इति प्रसिद्धनामधेयकथनम्। कृतिरियं प्रस्तुता। अधुना सामाजिकनियोगानन्तरम्। प्रयोगविषयमवतरति प्रयोगविषयमिति क्रियाविशेषणं प्रयोगस्य विषयो यथा भवति तथा अवतरति प्रसरति इदमिदानीं प्रयोज्यमित्यर्थः। अतः शूद्रकादिप्रणीतमेव सामाजिकानां कौतुकावहमिति बुद्धिं मा कृथाः॥

एवं कविगौरवश्रवणेन प्रीयमाणा सूच्यानुगुणं स्वार्थं प्रस्तौति—अणवच्चस्स इत्यादिना। अपत्योत्पत्तिनिबन्धनेन अपत्योत्पत्तिनिमित्तेन॥

एवं तदङ्गीकारमालक्ष्य प्रयोगोपक्रमाय प्रोत्साहयति—तत् प्रस्तूयतामिति। तदिति सामाजिकनियोगस्यादरणीयत्वात् महाकविप्रबन्धस्य प्रयोगयोग्यत्वात् तस्मिन् प्रीतिप्रकर्षाच्च नृत्तवादित्रगीतरूपं सङ्गीतकमारभ्यतां त्वदधिकारोचितं प्रबन्धस्य अन्यानपि नियोजय॥

इत्युक्ते अनपत्यतया पुत्रार्थं व्रतोपवासादिकमाचरन्त्याः राजभार्यायाः परिक्लेशसूचनानुगुणं खेदाभिनयपूर्वं स्वार्थं निर्दिशति—एत्तिअं कालमिति। तनय-

सूत्रधारः—(नेपथ्याभिमुखमवलोक्य) अये अयं मम शिष्यः शिवदासो विदूषकभूमिकामादायेत एवाभिवर्त्तते । श्रान्ता च त्वम् । अहमपि शिष्यगुणसङ्क्रान्तमात्मप्रयोगप्रतिबिम्बं द्रष्टुं कुतूहली । तदावां प्रेक्षकौ भवावः ।

अपि च—

तनयसमुद्भवहेतोरमुतो नियमान्निवर्त्तितासि मया ।
संवरणेन यथेयं साल्वसुता सार्वभौमेन ॥ ३ ॥

(इति निष्क्रान्तौ)

## स्थापना ।

---

दुराशयेति फलादर्शनेनालभ्यत्वबुद्ध्या वैराग्येण दुराशयेति कथनम् । आत्मनोऽधिकारः गानपात्रप्रवेशादिः ॥

अथ प्रयोगातिशयेन सूच्यसूचनेनोपसंहाराय अनन्तरोचितपात्रभूमिकावलम्बिनं शिष्यमालोक्याह—अये इत्यादि । उचितकाले अविलम्बितं प्रयोगारम्भेण प्रहर्षः । मम शिष्य इति वात्सल्यं सूचितम् । विदूषकभूमिकामादायेत एवाभिवर्त्तते राज्ञो नर्मसचिवस्य वेषमवलम्ब्य यवनिकान्तरमलङ्करोति । अतः प्रयोगस्यारब्धत्वाद् आवां सामाजिकवत् प्रेक्षकौ भवावः । कथं प्रयोक्तॄणां प्रेक्षकत्वाङ्गीकार इत्यत्र हेतुमाह—त्वं श्रान्ता । श्रान्तिः प्रस्तुतेन नियमक्लेशादिना । अह निजप्रयोगप्रतिबिम्बमालोकयितुं कुतूहली चेति शिष्यजनसंक्रान्तं चतुर्विधाभिनयशिक्षया निर्मले मुकुरे मुखादिप्रतिबिम्बमिव एकरूपतया परिस्फुटमात्मप्रयोगस्य प्रतिबिम्बमालोकयितुं तत्प्रयोगचातुर्यमनुभवितुं परीक्षितु चौत्सुक्यवान् । दार्ष्टान्तिकत्वेन प्रस्तुतं स्वार्थं घटयति—तनयेत्यादि । अमुतः नियमात् त्वया प्रस्तुतात् फलाभावनिश्चयेन केवल क्लेशावहात् । अतः दुराशयेति त्वया वैराग्यप्रकाशनाच्च मया निवर्त्तिता । अतः परं न क्लेशः सोढव्यः । पुत्रोत्पत्त्युपायस्त्वयैव सूत्रितः । अतस्तूष्णीमास्स्व । अस्मद्वृत्तान्तस्य सब्रह्मचारी अयं महाराजः संवरणः, अनेन

(ततः प्रविशति विह्वलाङ्गो विदूषकः)

विदूषकः— (अङ्गानि संवाहयन् शूत्कृत्य) (क) अज्ज खु अहं पच्चूसे एव्व 'देविं सळ्ळराअपुत्तिं पुत्तीआदो णिअमादो णिवत्तिअ सिविणसवणत्थं सिग्घं आअच्छ'त्ति वअस्सेण कञ्चुइमुहेण णिउत्तो अस्सआणेण गदुअ अणुट्ठिअणिओओ अहं आअच्छंतो राअवीहीअं तेण दुव्विणीदतुरएण पल्लत्थोह्मि। देण अविहेआणि मे गत्ताणि। तह वि वअस्सस्स पस्सं उवसप्पिउं घेत्तिस्सम्। (नीचिकया परिक्रामन् पुरतो विलोक्य) अहो मम प्पहावो, जं सव्वो एव्व हत्थिणपुरवत्थव्वो

(क) अद्य खलु अहं प्रत्यूष एव 'देवीं साल्वराजपुत्रीं पुत्रीयान्नियमान्निवर्त्य स्वप्नश्रवणार्थं शीघ्रमागच्छे'ति वयस्येन कञ्चुकिमुखेन नियुक्तोऽश्वयानेन गत्वानुष्ठितनियोगोऽहमागच्छन् राजवीथ्यां तेन दुर्विनीततुरगेण पर्यस्तोऽस्मि। तेनाविधेयानि मे गात्राणि तथापि वयस्यस्य पार्श्वमुपसर्पितुं ग्रही-

यथा इयं साल्वराजपुत्री अलाभनिश्चयेन तनयसमुद्भवहेतोः षण्मुखसेवनादिनियमात् नर्मसचिवप्रेषणेन निवर्तिता तथा इति ॥

एवं कविप्रशंसनं तन्नामकथनं तपतीसंवरणशब्देन रूपकनामधेयं नायकस्वरूपं पूर्वनायिकायामपत्यालाभनिश्चयेन व्रतादिनिवर्तनं भाविनं परिणयनोद्यमम् अनन्तरप्रवेक्ष्यमाणपात्रस्वरूपं नायकस्य सार्वभौमत्वसुखमं च सूचयित्वा पात्रदर्शनपूर्वकं कथास्थापनं कृत्वा तयोर्निर्गतयोरङ्कादौ प्रमेयौचित्येन प्रथमं विदूषकप्रवेशः। अत्र स्वल्पतया विष्कम्भाविषयं देवीनिवर्तनस्वप्नादिकं सूचयितुमङ्कार्थानुगुण्येन अश्वगमनाश्वारोहगमनप्रार्थनादिकं केवलं स्वार्थं प्रहसनं राजमहोत्सवादि प्रकटयितुं चास्य प्रथमप्रवेशः। अत एव अद्येत्यादिना सूच्यार्थमनूद्य प्रहसनप्रस्तावः। तच्छेषतयाङ्गसंवाहनशूत्कारादिकम्। अद्येत्यादि। पुत्रीयात् पुत्रोदयविहितात्। मध्य-

१. 'दर्शने' इति क ख पाठ.
२. 'गुं पे' इति ख पाठः.
३. 'समणो' इति ख पाठ.
४. 'प्पभावो' इति ख. पाठः.

जणो अस्सो पारासरिओ त्ति अप्फुडं आळवंतो हास-णिरोहदुप्पेक्खमुहो हसिदुं अहसिदुं अ अपारअन्तो प-ज्जाउळो होइ । (नेपथ्याभिमुखमवलोक्य) एसो वअस्सो प-रिसमाविअपडिकम्मविहाणो इदो एव्व आअच्छदि । ता कीस अत्ताणं खेदइस्सं । एत्थ एव्व चिट्ठिस्सं । (स्थित)।

---

प्यामि । अहो मम प्रभावो, यत्सर्व एव हस्तिनपुरवास्तव्यो जन अश्व पाराशर्य इत्यस्फुटमालपन् हासनिरोधदुष्प्रेक्षमुखो हसितुमहसितु चापारयन् पर्याकुलो भवति । एष वयस्य परिसमापितप्रतिकर्मविधान इत एवागच्छति । तत् किमर्थमात्मान खेदयिष्यामि । अत्रैव स्थास्यामि ॥

---

यानेन अश्वरूपेण यानेन वाहनेन । पल्लत्थो हि पर्यस्तोऽस्मि । घेत्तिस्स ग्रहीष्यामि अविधेयत्वादाकृष्य नेष्यामि । नीचिकया वञ्चीकृताङ्गत्वमवलम्ब्य । हत्थिणपुरवत्थव्वो हस्तिनपुरवास्तव्य हस्तिनपुरवासी, कर्तरि तव्यप्रत्यय । अस्मत्प्रभावेण हसितुमसामर्थ्य हास्यप्रकर्षेण अहसितुम् । अत एव वाक्यस्यापूर्णतया अस्फुटालाप । परिसमापितप्रतिकर्मविधान प्रतिकर्म प्रसाधनम् अलङ्करणम् । उपलक्षणमिद प्राभातिकानुष्ठानस्य । आत्मान निवश देहम् । चिट्ठिस्स स्थास्यामि ॥

अथ नायकप्रवेश । अत्र नायकस्वरूपे निरूप्यमाणे सान्तस्लाप इत्युक्त्या अपुत्रत्वेनाकृतार्थतया च नैश्चिन्त्याद्यभावेन सचिवायत्तसिद्धित्वेऽपि नास्य ललितत्वम् । अत उदात्तत्वमेव । नायिकान्तरपरिग्रहभोगोत्सुकत्वादिक पुत्रोत्पत्तिशेषतया । अत एवादावपत्यमाहिमसमर्थन, 'न सुतसमुद्भवलाभादपर' (अङ्क. १ श्लो ९) इति सुतस्य प्रीतिहेतुत्वकथनम्, अन्ते 'किं वा दत्तो न वशकर सुत' (अङ्क ६ श्लो १४) इति सुतस्य परमप्रयोजनत्वकथन च । रसश्च शृङ्गारोऽङ्गी । सोऽपि कामानुबद्धधर्मप्रधान । हास्यादीनि तदङ्गभूतानि । तत्र दक्षिणस्योत्तमाधममध्यमभेदेन त्रैविध्य तेष्वेकोऽयम् । एव प्रविष्टस्य चिन्ताप्रकार । स्वप्ने सूर्यवचनेन नायिकाया तनयोत्पत्त्यभावनिश्चयेन खिन्न मातरेव कृत्य निर्वर्त्य स्वप्ननिवेदनार्थमाहूत वयस्यमनालक्ष्य कथनत्वरया सपरिवार स्वय निर्गत पितृविषयम् ऋणबन्ध निरूप्य पुत्रविषयेण ममताति-

(ततः प्रविशति सान्तस्तापः सपरिवारो राजा)

राजा — (सविमर्शम्) अहोनुखलु अपत्याभिधानस्य पदार्थान्तरस्य महिमा। कुतः —

प्रियतनयवियोगे पुत्रिणां खेदवृत्ते-
स्त्रिगणयितुमियत्तां कः पुमानुत्सहेत।
प्रसवगुणवियुक्तां मन्यमानस्य देवी-
मपि मम हृदि तापो जृम्भते दुर्निवारः॥ ४॥

---

शयेन तस्य महत्त्वं विमृशन्नाह — अहोनुखल्वित्यादि। अपत्याभिधानस्य अपत्यनामधेयस्य अभिधानमेवास्यायतनमिति तथोक्तम्। पदार्थान्तरस्य महिमा हृद्यत्वादिभिर्गुणैर्वैशिष्ट्यं चित्ताकर्षकत्वं च। लोके गुणोत्तराणां मणिहिरण्यादीनां गजाश्वादीनां प्रियतमासुहृत्प्रभृतीनाम् एतत्पङ्क्तिनिवेशोचितं न सौभाग्यम् अत एव पदार्थान्तरस्येत्युक्तम्। अहोनुखल्विति निपातसमुदाय आश्चर्यद्योतकः। आश्चर्यविषयमहिमोपाधित्वेनात्र सम्बध्यते। महिमा आश्चर्यभूत इत्यर्थः। किमस्याश्चर्यत्वमिति समर्थनाय कुत इत्याकाङ्क्षामुद्भाव्य कथयति—प्रियतनयेत्यादि। देवीं प्रसवगुणवियुक्तां मन्यमानस्य ममापि हृदि दुर्निवारस्तापो जृम्भते। देवीं सौशील्यादिना द्योतमानां गृहिणीम्। प्रसवगुणवियुक्तां प्रसवोचितगुणवियुक्तां वन्ध्याम्। मन्यमानस्य इदानीमेवासन्नवचनेन निश्चिन्वानस्य। ममापि अजातपुत्रस्येत्यर्थः। दुर्निवारः विचारादिभिर्निवारयितुमशक्यः। तापः मनोज्वरः। जृम्भते ममापि विषयस्यादर्शनेऽपि सङ्कल्पमात्रेण प्रतिक्षणं वर्द्धते। एवं स्थिते पुत्रिणां पुत्रवतां पित्रादीनाम्। प्रियतनयस्य गुणबाहुल्येन प्रियस्य पुत्रस्य वियोगे आत्यन्तिके आन्तरालिके वा। खेदवृत्तेः खेदे वृत्तिः खेदवृत्तिः खेदानुभवः। खेदस्य वृत्तिर्वा। खेदः सन्तापः। तस्या इयत्ताम्। त्रिगणयितुं ईदृशीति परिच्छेत्तुम्। कः पुमान् सर्वज्ञोऽपि। उत्सहेत उत्साहमवलम्बितुं शक्नुयात्। न कोऽपीत्यर्थः। अत्र अन्येषां पदार्थानां मणिहिरण्यादीनां विनाशो तत्स्वामिनः व्यथयतितरां, न तु तनुदयः इति युक्त्या सिद्धस्य नाश एव व्यथाकरः न तनूद्भवः। अस्य त्वजन्मैवात्यन्ततापकरं तु, किं पुनर्नाशस्यापाये इत्यस्य विशेषः। अत एव महिमा आश्चर्यकर-

मया हि प्रातरेव स्वप्नप्रतिष्ठापनप्रयोजनायाहूतः प्रियवयस्यः पाराशर्यो नाद्याप्यायातः । (समन्तादवलोक्य) अये अनुन्मिषितबालातपोऽयं दिवसावतारः । तथा हि—

शालीनां परिपच्यमानकणिशश्रेणीशिखापाटलै-
रप्रौढैरतिमात्रमर्कमहसामग्रैरनालीढया ।
सङ्कोचादधिपश्चिमाशमपरिध्वस्तावकाशं दृशा-
मद्यापि स्थितमम्बुराशिलहरीतन्व्या तमोमात्रया ॥ ५ ॥

---

स्वम् । अपिशब्दो भिन्नक्रम ॥ ४ ॥ एवमपत्यमहत्त्व समर्थ्य स्वप्ननिवेदने त्वरमाणो वयस्यस्य विलम्बनेन खिन्न आह—मया हीत्यादि । स्वप्नप्रतिष्ठापनप्रयोजनाय प्रतिष्ठापनम् इद मया दृष्टमिति श्रोतरि समर्पण तेन प्रयोजनमनन्तरकर्तव्यादिनिरूपण तदर्थं, केवलप्रतिष्ठापनस्य निरुपयोगत्वात् । प्रतिष्ठापनस्यापि साध्यत्वमनुक्तसिद्धम् । यथेव न योज्यते प्रतिष्ठापनाय इत्येवालम् । प्रियवयस्य इत्यन्तरङ्गत्वेन स्वप्नसमर्पणयोग्यत्व प्रकाशितम् । अद्यापीति प्रतिपालनेनाल्पस्यापि कालस्य दैर्घ्यं कल्पयितृत्वोक्ति । हिशब्दस्य स्वस्थान विमुच्य नञा समन्वय एव शरण न हीति । अथ प्राभातिकीं शोभामवलोक्य कथयति—अये इत्यादि । अये इति स्मरणे । मया कालातिपातो निरूपित । दिवसस्य तथा न प्रौढत्व जातम् । यत अनुन्मिषितबालातप बालातपस्यापि व्याप्ति व्याप्यदेशव्यापित्व न परिपूर्णम् । तत्साधनायोपक्रमते—तथा हीति । दृश्यत इति शेष । शालीना मित्यादि । तमोमात्रया अद्यापि अधिपश्चिमाश स्थितमित्यन्वय । मात्रा लेश । अद्यापि प्रभाते प्रकटेऽपि । अधिपश्चिमाश पश्चिमाशापर्यन्तेषु, दिगन्तरेषु तेज - प्रसरेण निरस्तत्वाद् अधिपश्चिमाशमित्युक्तम् । तत्रापि तुच्छत्व मात्रयेत्यनेनोक्तम् । तमोंऽशस्य प्रमाणमाह—अम्बुराशिलहरीतन्व्या सन्निहितस्य अम्बुराशेस्तरङ्गकणवत् स्वल्पया । अद्यापि स्थीयत इति वक्तव्ये स्थितमित्युक्त्या निर्वाणोन्मुखप्रदीपवत् स्थित्यामपि कार्याक्षमत्व सूचितम् । अत एवोक्त सङ्कोचाद् दृशामपरिध्वस्तावकाशमिति । सङ्कोचात् नष्टशेषत्वेनाल्पतया । दृशा नयनरश्मीनाम् । अवकाश विषयप्रसरमार्ग यथा न परिध्वस्तो भवति तथेति क्रियाविशेषणम् ।

(पुरतो विलोक्य)

अये असौ वयस्यः पाराशर्यः किमप्युद्विग्न इव तिष्ठति ।
तत् को नु खल्वस्यायासहेतुः ।

**विदूषकः**— (उपसृत्य कथमपि दक्षिणं पाणिमुन्नमयन्) (क) जेदु भवं ।

(क) जयतु भवान् ।

सङ्कोचेन नयनरश्मिनिरोधाभावे स्थितेऽपि न कार्यकरत्ववत्तयावस्थितिर्निर्विवक्षिता इति अद्यापि स्थितमित्यनेन प्रकाशितम् । दिनोदये एवमपि कथं स्थितमित्यत्र हेतुमाह — अर्कमहसामग्रैरनालीढया अर्कमहसाम् अरुणकिरणानाम् । अग्रैः प्रान्तभागैः । अनालीढया ईषदप्यस्पृष्टया । तत्र सति कथं लेशस्यापि स्थितिरिति भावः । भुवनतमःसंहारसरलानामर्कमहसां कथं तमोलेशनिरसनापाटवमित्यत्राह—अतिमात्रमप्रौढैः उदयसमनन्तरप्रसरणेन बालतया अतितरामनुद्धतैः अत एव मण्डलोपान्तमजहद्भिः झटिति दिगन्तव्याप्तिमनवलम्बमानैः । अप्रौढतायां हृद्यतामाह—शालीनामित्यादि । शालीनां 'क्षुण्णः सितः स्मृतः शालिः' इति लक्षितानां तुषापनयने धवलतण्डुलानां शूकधान्यविशेषाणाम् । परिपच्यमानाः स्वयमेव पाकं प्रतिपद्यमानाः याः कणिशश्रेण्यः तासां शिखावत् शूकवत् पाटलैः । अग्राणां बहुत्वात् श्रेणीत्युक्तम् । अनेन कोमलत्वं दृश्यत्वं चोक्तम् । रश्मिव्याप्तौ सत्यां बालातपोन्मेष इति तदव्याप्तिकथनेनानुन्मिषितबालातपत्वं समर्थितम् । अत्र दिनावस्थामवेक्ष्य स्ववृत्तान्तस्मरणं व्यज्यते । मम जन्म सन्तत्यनुदयेन सिद्धमपि न फलवत् । तत्र समीहितप्रतिबन्धकतया दुरितशेषो वर्तते । पुण्योपचयेन तदुन्मूलने साध्यसिद्धिर्भवेद् इति ॥ ५ ॥ उप.कालावस्थां वर्णयित्वा अन्विष्यमाणं सहसा दृष्ट्वा तद्वैवर्ण्यदर्शनेन साशङ्कमाह — असौ इत्यादि । किमप्युद्विग्न इव तिष्ठति केनापि हेतुना उद्विग्न इव पीडित इव । हेत्वनिश्चयेन इवेत्युक्तिः । उद्वेगश्चित्तपीडा । तिष्ठतीत्यनेन देहपीडा कल्प्यते । पूर्वं दर्शने झटिति समीपोपसर्पणमेव दृष्टम् । इदानीं तिष्ठत्येव । अतो देहस्य वैवश्यं ज्ञायते । उभयमपेक्ष्य हेतुशङ्का । आयासः देहमनसोः परिश्रमः ॥

अथ विदूषकः प्रहसनार्थं पुरस्कृत्य स्ववृत्तिं निवेदयति वैवश्यद्योतनाय— कथमपीति । दक्षिणहस्तोन्नयनम् आशीर्वादरूपतया ॥

१ 'परिक्रम्य' इति क पाठः.

राजा— सखे! कथमयथापुरस्तत्रायमवयवव्यापारः ।

विदूषकः—(क) पसादादिसओ ।

राजा—कोऽभिप्रायः ।

विदूषकः— (सहासम्) (ख) अणक्खरं अणाआरसूइदं पि अत्थं उप्पेक्खिअ भणन्तो तुमं एह्णिं अक्खरळक्खिअं आआरसूइदं पि एदं जाणिदुं अकुसळो होहि। ता कहिं दे गअं पण्डिच्चं ।

राजा – ननु भवादृशामम्भोधिगम्भीरचेतसामतिदुरवबोधाश्चित्त-

(क) प्रसादातिशयः ।

(ख) अनक्षरमनाकारसूचितमप्यर्थमुत्प्रेक्ष्य भणन् त्वमिदानीमक्षरलक्षितमाकारसूचितमप्येतद् ज्ञातुमकुशलो भवसि । तत् क्व ते गत पाण्डित्यम् ।

तद्वैवश्यं दृष्ट्वा पूर्वं शङ्कितस्य प्रश्नः—सखे! कथमित्यादि । सखे! इति समसुखदुःखत्वं हि सख्यम् । तत् कथं मत्संविभागं विना त्वया देहवैवश्यदुःखमनुभूयते तन्निमित्तकथनेन व्यसनसंविभागी भवेत्यर्थः ॥

(प्रसादातिशय इति) प्रसादातिशयस्य मूलकारणत्वं हृदि निधाय एवमुक्तिः ॥

एवं प्रसादवैवश्ययोर्हेतुहेतुमद्भावस्यापरिस्फुटत्वेन कोऽभिप्रायः इति प्रश्नः॥

तत्र प्रहसनेनाक्षिपति—अनक्षरम् अनुक्तम् । अनाकारसूचितं नयनविकारादिभिरप्रकाशितम् अर्थम् । उत्प्रेक्ष्य विचारदृष्ट्या निश्चित्य । भणन् सर्वदा व्यवहरन् । इदानीम् अक्षरलक्षितं "प्रसादातिशय" इति शब्देन प्रकाशितप्रायम् । आकारेण शरीरसन्निवेशेन सूचितं च ज्ञातुमकुशलो भवसि । तत् क्व गतं ते पाण्डित्यम् इति तन्मनोवैवश्यमनवधाय प्रहसनाक्षेपः ॥

तत्रालीकप्रशंसया तत् प्रहसनमनुसृत्य परिस्फुटोक्तिं प्रार्थयते—नन्वित्यादिना । आत्मनो हृदयव्याक्षेपमनिरूप्य तेनाङ्गीकृतं प्रहसनार्थमनिच्छन्नपि दाक्षिण्येनाङ्गीकृतवान् । अत एवमुक्तिः ॥

१. 'दातिस' इति घ. पाठ. २. इद पद क ख. पुस्तकयोर्नास्ति. ३. इद पद क ख. पुस्तकयोर्नास्ति.

वृत्तयः । प्रस्पष्टमभिधीयताम् ।

विदूषकः— (क) जइ एव्वं कहइस्सं । अहं आरूढहयो गेदुअ णिवत्तिअ देविं णियमादो आअच्छन्तो राजवीहीअं तेण दुट्ठतुरएण कंदुअक्कीळं मए कीळन्तेण कहिं पि पक्खित्तो[2] ह्मि । तदो[3] चिन्तिअं च मए । अज्ज आसणस्स अत्थिरदाए अस्सारोहणेण गअणगमणस्स अद्धमेत्तं सिक्खिअं, ता देवासुरविमद्दपरिइदम्बरगमणस्स वअस्सस्स सआसादो सअळं सिक्खिस्सं त्ति । ता उवदिसदु मे वअस्सो ।

राजा—मूर्ख! अस्यां क्रियायामकिञ्चित्करा मादृशामुपदेशाः । पश्य—

(क) यद्येवं कथयिष्यामि । अहमारूढहयो गत्वा निवर्त्य देवीं नियमादागच्छन् राजवीथ्यां तेन दुष्टतुरगेण कन्दुकक्रीडं मया क्रीडता क्वापि प्रक्षिप्तोऽस्मि । ततश्चिन्तितं च मया । अद्यासनस्यास्थिरतयाश्वारोहणेन गगनगमनस्यार्धमात्रं शिक्षितम् । तद् देवासुरविमर्दपरिचिताम्बरगमनस्य वयस्यस्य सकाशात् सकलं शिक्षिष्य इति । तदुपदिशतु मे वयस्य ।

एवं नृपबुद्धिमविज्ञाय स्वनियोगानुष्ठानमनूद्य पुनरपि प्रश्नशेषतया तुरगपतनेन शिक्षस्याम्बरगमनस्य शेषोपदेशः प्रार्थ्यते—उपदिशतु मे वयस्य इति ॥

इमं प्रश्नार्थं जानन्नपि तदनुबन्धस्य प्रश्नानुपयोगेन विच्छेदमवेक्ष्य तत्प्रार्थनाया वस्तुतो भावयित्वा अधिक्षेपेन प्रतिक्षिपति—मूर्खेत्यादि । त्वया मदभिप्रायमविज्ञायास्थाने प्रश्नन्यासः क्रियते, मयापि त्वत्प्रश्नस्य सत्य भावयितुमुत्तरं कथ्यते इत्यभिप्राय । तदनुगुणं प्रतिक्षिपति—अस्यामित्यादि । अस्यामम्बरगमनक्रियायाम् । अकिञ्चित्करा निष्प्रयोगा । मादृशा राजधर्मसुदृढ़ताम् ।

१ इदं पदं च पुस्तके नास्ति  २ 'ह्मि ।' इति क ख ग पुस्तकेषु पाठः  ३ इदं पदं क ख-पुस्तकयोर्नास्ति

पवनविजयमार्गा मन्त्रसिद्धिप्रकारा
मुनिवरवचनं वा देवतानां प्रसादाः ।
उपचयिभिरुदर्कस्वादुभिः पुण्यपूरै-
रपगतदुरितौघानम्बरे वर्तयन्ति ॥ ६ ॥

विदूषकः—(क) अळं एदिणा । अणुप्फुळ्ळं दे वदणकमळं सन्दावगब्भं पिसुणेइ हिअअं । को एत्थ हेदू ।

(क) अलमेतेन । अनुत्फुल्लं ते वदनकमलं सन्तापगर्भं पिशुनयति हृदयम् । कोऽत्र हेतुः ।

केन पुनस्तत् सिध्यतीत्यत्राह—पवनेत्यादि । योगशास्त्रेषु बहुप्रकारमुक्तत्वात् मार्गा इति बहुवचनम् । मन्त्राणां सिद्धिः मन्त्रैः सिद्धिर्वा । मुनिवरवचनं 'तवैतद् भवत्वि'ति मुनिवराणामनुग्रहः । देवतानां प्रसादाः । तत्र न वचनापेक्षा । अधिकारिसापेक्षमेतेषां स्वातन्त्र्यमित्याह—उपचयिभिरित्यादि । उपचयिभिः पुनः पुनरार्जनेन प्रवृद्धैः । उदर्कस्वादुभिः रसावहैः । पुण्यपूरैः इष्टापूर्त्तादिपुण्यसञ्चयैः । अपगतदुरितौघान् स्वयमेव दूरीभूतदुरितसञ्चयान् । अत्र पुण्यपूराणामुपचयः न केवलं पुण्यमात्रस्येत्यतिप्राचुर्यं विवक्षितम् । अत्रैवम्भूतानामधिकारः । अधिकारिणां वर्तन एव पूर्वोक्तानां प्रयोजकत्वम् । ततः परस्परापेक्षायामेव साध्यसिद्धिरित्येतानम्बरे वर्तयन्तीत्युक्तम् ॥ ६ ॥

एवं प्रहसनार्थं सत्यवत् कल्पयित्वा किञ्चिदमर्षगर्भं नायकस्याक्षेपवचनमाकर्ण्य तदानीं मुखवैवर्ण्यं चावधाय नर्मसचिव आत्मनोऽनवसरभाषितमाशङ्क्य तत्कथनशेषं निवार्य पृच्छति—अलमित्यादि । भवन्मनोवृत्तिमविज्ञाय मया आत्माधिकारोचितं यत्किञ्चिद् भाषितं जानतापि भवता मां प्रत्यमर्षेण तत् सत्यवद् भावयित्वा प्रतिक्षिप्तम् । अत्र ममैवापराधः । अनेनैवालम् । अतः परं भवन्तं पृच्छामि अनुत्फुल्लं भवतो वदनकमलम् । इदानीमेवैवं दृष्टम् । पूर्वं नित्यविकस्वरमेव, नान्यकमलवत् पर्यायेण सङ्कोचविकासयुक्तम् । अतो हृदयं सन्तापगर्भं पिशुनयति । वदनम्लानिकार्येणान्त सन्तापोऽनुमातुं शक्यः । तत् कोऽत्र हेतुः । नैव-

१. 'णअदि' इति क. पाठ.

राजा—सखे! सम्यगुपलक्षितम् । अतीतायां खलु रात्रौ स्वप्ने सूर्योपस्थानमातन्वतः—

आराद् दृष्टं चलदलपुटैर्दीर्घिकापद्मिनीना-
मर्द्धोन्मीलन्मुकुलनयनैः प्रस्फुरद्भृङ्गतारैः ।
तुच्छीकुर्वत् तुहिनकणिकाजालकं मे पुरस्ता-
दाविर्भूतं किरणनिकरैरम्बरादर्कबिम्बम् ॥ ७ ॥

---

र्ण्येन सन्तापोऽनुमितः । अत्र सन्तापे को हेतुः । परिपूर्णकृत्यस्य तवेदानीं सन्तापस्य किं निमित्तमित्यर्थः ॥

इति विवक्षितार्थसोपानायमानं तद्वचनमाकर्ण्य नायकः श्लाघापूर्वमाह—सखे! सम्यगुपलक्षितम् इदानीं तव सखित्वमतिहृद्यं जातम् । सम्यगुपलक्षितं सम्यग् यथातत्त्वमनुमितम् । अतः कारणं शृणु—अतीतायां खलु रजन्यां स्वप्ने सूर्योपस्थानमातन्वतो मे पुरस्ताद् अम्बरादर्कबिम्बमाविर्भूतमित्यन्वयः । अतीतायां खलु अतीतायामेव न रात्र्यन्तरे इत्यवधारणे खलुशब्दः । तेन प्रतीतेरविस्मृतिः प्रकाश्यते । स्वप्ने सूर्योपस्थानादिरूपेण स्वप्नो दृष्ट इत्यर्थः । आतन्वत इति अनुतिष्ठतः । मे पुरस्ताद् अर्कबिम्बं बिम्बशब्देन तस्यैव दृष्टिगोचरत्वं जातम् । तदानीं तत्प्रादुर्भावकार्यमपि परिस्फुटं दृष्टं दीर्घिकापद्मिनीनाम् उपस्थानपरिगृहीतायां दीर्घिकायां याः पद्मिन्यः कमलोत्पत्तिभूमयः नायिकाः तासाम् । अर्द्धोन्मीलद्भिः विकासारम्भेण अर्द्धविकस्वरैः मुकुलैरेव नयनैः । आरात् समीपे । दृष्टं नयनानामपि प्रेमकृतमर्द्धोन्मीलनमारोपवशात् सिद्धम् । नयनानां दर्शने कर्तृत्वमारोपितम् । कीदृशैः अर्द्धोन्मीलनवशाचलानि विश्लेषभाञ्जि दलान्येव पुटानि येषां । तथा प्रस्फुरन्तः भृङ्गा एव ताराः येषां तैः । आरादित्यनेनारोपितमौत्सुक्यं प्रकाशितम् । निजपरिलालननित्यदीक्षितस्य कान्तस्य सन्निधौ कान्तानामेवं प्रेमदृष्टिपातो युक्त एव । अत्र नयनानां मुकुलत्वेन दलानां पुटत्वेन भृङ्गाणां तारात्वेन च समारोपस्य शाब्दत्वात् पद्मिनीनां नायिकात्वारोपस्यार्थत्वमित्येकदेशविवर्तिरूपकम् । किरणनिकरैः तुहिनकणिकाजालकं तुच्छीकुर्वत् । एवमुदयकालकार्यकथनेन जाग्रद्दर्शनवत् स्वप्नदर्शनस्य परिस्फुटत्वं प्रकाशितम् । मे पुरस्तादित्यनेन मदपेक्षया प्रादुर्भाव इति ॥ ७ ॥

विदूषकः — (क) तदो तदो ।

राजा — ततस्तस्माद् भक्तिभारावर्जितमौलिं[1] प्रणमन्तमन्तरेण मामासीदतिगम्भीरा भारती ।

विदूषकः — (ख) केरिसी[2] ।

राजा — 'वत्स ! संवरण !

दयितां तव तन्वङ्गीं साल्वराजसुतामिमाम् ।
अवेहि प्रसवापेतां शरच्चूतलतामिव' ॥ ८ ॥

इति । अनन्तरमन्तरधत्त च भगवान् । अहं च प्राभातिकमङ्गलगीतिभिः प्रतिबोधितोऽस्मि ।

(क) ततस्ततः ।
(ख) कीदृशी ।

स्वप्नश्रवणे शेषश्रवणापेक्षया तस्य प्रश्नमनुसृत्य स्वप्नशेषमाह—तत इत्यादि । ततः आविर्भावसमनन्तरमेव । तस्माद् बिम्बाद् । भक्तिभारावर्जितमौलिः नम्रशिरा. अहं प्रणत. । विशेषणेन प्रणामस्य परिपूर्त्तिः प्रकाश्यते । तथा प्रणमन्तं मामन्तरेण मामुद्दिश्य । अतिगम्भीरा अतिनिगूढाभिप्राया भारती आसीत् । तस्मादित्यनेन वक्तृमुखं न दृष्टं बिम्बादुद्भूतेत्येव ज्ञातम् ॥

तज्जिज्ञासया पृच्छति—कीदृशीति ॥

वत्स ! संवरण ! इत्यादि भारतीप्रकारः । वत्स ! संवरण ! इत्यनेन पुत्रवद् वात्सल्यातिशय. प्रकाशितः । दयितामिति तन्वङ्गीं साल्वराजसुतामिति सौरूप्याभिजन्मादिभिस्तव दयितात्वमस्यां युक्तमेवेति सम्मानन गम्यते । प्रसवापेतामवेहीति प्रसवस्यैव निषेधेन पुत्रोत्पत्तिशङ्का दूरतो निरस्ता । शरच्चूतलतामिवेति अत्यन्तासम्भावनाप्रकाशकेन दृष्टान्तेन तादृश्यपास्या गृहस्थितिरिति दृढीकृतम् । वत्सेत्यादिसंबोधनेन तन्वङ्गीमित्यादिना च कारुण्यपात्रत्वमस्माकं प्रकाशितम् । प्रसवापेतामवेहीत्यनेनानिष्टार्थभ्रान्ते बोधित इति अनुग्रहो वा निग्रहो वा तत्र फलितः । किमर्थं स्वयं प्रादुर्भूय कथनमिति ज्ञातुमशक्यम् । तत एवातिगम्भीरे-

1. 'मौलि' इति ख. पाठ. 2. 'कीरि' इति घ. पाठः

विदूषकः – (क) सोत्थि होदु। मा भवं सन्दप्पदु ।

राजा – कथमहमधमर्णो नानुशये ।

विदूषकः — (विहस्य) (ख) अहो तुह अणेअपसण्डिरअणपरिपूरिअभण्डोआरसहस्सस्स वि रिणसन्दावो त्ति अच्छरिअं ।

राजा — मूर्ख ! नाहं भवदभिमतमृणमधिकृत्य ब्रवीमि । अन्यदिदमपत्याभिधानमृणमुद्वहामि पितॄणाम् ।

विदूषकः — (ग) मए वि एदं अण्णोण्णं विवदंताणं तक्किआणं

(क) स्वस्ति भवतु । मा भवान् सन्तप्यताम् ।

(ख) अहो तवानेकप्रशस्तरत्नपरिपूरितभाण्डागारसहस्रस्यापि ऋणसन्ताप इत्याश्चर्यम् ।

(ग) मयाप्येतदन्योन्यं विवदमानानां तार्किकाणां मुखात् श्रुतपूर्वमेव । अत्रभवान्

त्युक्तम् ॥ ८ ॥ इतीति भारत्युपसंहारः । अनन्तरं भगवानन्तरधत्त च । केवलस्य प्रादुर्भावो न घटते कथनं च, तद् भगवतैवोक्तं, मया न दृष्ट इत्येवेति भगवानन्तरधत्तेत्युक्तम् । अनन्तरमित्यनेनैतदर्थमेव प्रादुर्भाव इति ज्ञायते । अहं च प्राभातिकमङ्गलगीतिभिः प्रतिबोधितोऽस्मीत्यनेन स्वप्नस्य चरमयामदृष्टत्वं प्रकाशितम् ॥

एवं तस्यानिष्टप्राप्तिसूचकं सन्तापगर्भं वचनमाकर्ण्य मङ्गलाशंसनपूर्वमनुनयति – स्वस्तीत्यादि ॥

तस्य सन्तापनिषेधमनङ्गीकृत्याह – कथमहमित्यादि । अनुशयः पश्चात्तापः पूर्वमेव ऋणनिवृत्तौ प्रवृत्त्यभावात् ॥

एवमुक्ते तस्य चित्तव्याक्षेपाय हासगर्भा प्रहसनोक्तिः—अहो इत्यादि । पसण्डिरअण प्रशस्तरत्न ॥

सन्तापेनैव प्रहसनमनादृत्य बोधयति – मूर्खेत्यादि । अन्यदिदं, न भवन्निरूपितम् । पितॄणां पितृसम्बन्धि पितृविषयमित्यर्थः । अपत्यस्यानुदयस्तत्र निमित्तमित्यपत्याभिधानमित्युक्तम् ॥

तदनुवदति – मयापीत्यादि । तार्किकाणां मुखात् श्रुतपूर्वमिति शास्त्र-

१. 'दु । मा ग' इति ख-ग पाठः. २ 'एव्व,स' इति ग-पाठः. ३. 'उ' इति ख-ग. पाठः, 'उ' इति ग. पाठः. ४. 'ण्डार' इति ख. पाठः. ५. 'य' इति ग. पाठः. ६. 'ज्जवि' इति घ. पाठः

मुहादो सुदपुरुवं एव्व । अत्तभवं पुण सुय्यवअणस्स तप्पज्जत्थं अजाणन्तो अदिमेत्तं संतप्पदि । एसो तस्स अभिप्पाओ । इअं देवी अणवच्चा । अण्णं परिणेहि । सा दे तणअं जणइस्सदि त्ति ।

राजा[3] सखे! सम्भाव्यत एवैतत् । न पुनरहं देवीगुर्णगण-निगलितां चित्तवृत्तिमन्यतः क्षेप्तुमलम् । तदधुना निवर्त्तितनियमौं तत्रभवतीं द्रक्ष्यावः ।

पुनः सूर्यवचनस्य तात्पर्यार्थमजानन् अतिमात्रं सन्तप्यते । एष तस्याभिप्रायः 'इय देव्यनपत्या । अन्या परिणय । सा ते तनय जनयिष्यति इति ।

विरुद्धतया प्रहसनोक्तिः, धर्मशास्त्रादिभ्य एतच्छ्रवणं युक्तं न खलु तार्किकमुखादिति । अत्र नायिकान्तरानुरागबीजभूतं सूर्यवचने निलीनं नायकेनातिगम्भीरत्वकथनेन शङ्कितम् अर्थान्तरम् औत्सुक्यरूपारम्भोत्थापनाय नर्मसचिवमुखेन विवृणोति कविः—अत्तभवं पुण इत्यादि । भवत्सन्तापे भवत एवापराधः । सूर्यवचनतात्पर्ये निरूप्यमाणे इत एव सन्तापशमोपायः सिध्यति । अत्रभवान् पुनरिति सर्वज्ञस्याप्यत्र कुण्ठिता बुद्धिः । अतः सूर्यवचनस्य तात्पर्यार्थो भवता न निरूपितः । निषेधरूपः स्थूलो वाक्यार्थ एव ज्ञातः न तु तात्पर्यार्थः । स तु वक्तुरभिप्रायरूपो वाच्याद् भिन्नस्वरूपः । तमर्थं मूर्खोऽहं व्याख्यास्यामि । तव इमां दयितां प्रसवापेतामवेहीत्यत्र अन्यां परिणय सा ते तनयं जनयिष्यति इतीमां प्रसवापेतामित्युक्तम् । अत एव पुत्रो न भविष्यतीति न । तदन्या परिणयेत्येवमभिप्रायं विज्ञाय सन्तापो न कार्यः । तदभिप्रायानुरूपं प्रवर्त्तितव्यम् इत्यौत्सुक्यमुद्भावयति ॥

तदङ्गीकृत्यौत्सुक्यगर्भमाह—सखे! इति । इदमेव सखित्वं यत् समसुखदुःखतया कार्यसङ्कटेषु तत्त्वप्रकाशनम् । इदानीं ममाप्यर्थः स्फुरति । सम्भाव्यत

१. 'इव उण' इति क पाठः. २. 'सूरव' इति क-ख ग. पाठः. ३. 'जा--स' क-ख-घ. पाठः. ४. 'णनि' इति क-घ पाठः. ५. 'मा देवीं द्र' इति ख. पाठः. ६. 'वः । गच्छावतः नि' इति क-ग. पाठः.

**विदूषकः**—(क) एदु एदु भवं[2]।

(उभौ परिक्रामतः)

**राजा**—(निमित्तं सूचयन्[3]) सखे!

वामेतरमिदमधुना स्फुरति मदीयं विलोचनं केन।
न सुतसमुद्भवलाभादपरः प्रीतिप्रसङ्गो मे ॥ ९ ॥

(क) एत्वेतु भवान्।

एवैतद् वाक्यार्थशक्तिपर्यालोचने। अत्रैवं तात्पर्यमुन्नेतुं शक्यम्। तत्रापि न पाक्षिकत्वमित्येवकारेण चोतितम्। तत्र दाक्षिण्यनिमित्तं वैषम्यमाह—न पुनरित्यादि। देवीगुणगणनिगालितां गुणगणैः सौशील्यादिभिः गणशब्देन निगलनस्य गाढत्वेन शिथिलीकरणस्य दुष्करत्वं प्रकाशितम्। अत एवोक्तमन्यतः क्षेप्तुं नालमिति। अन्यतः अन्यस्याम्। चित्तवृत्तिः सङ्कल्पः। तद्विशेषा एव रत्यादयः। अतो देवीनिविष्टरतेश्चित्तस्याकृष्यान्यत्र योजने मम न शक्तिरिति दाक्षिण्यं प्रकाशितम्। अत एवाह—अधुना देवीं द्रक्षाव इति। निर्वर्तितनियमामित्यनेन मध्ये नियमस्य विच्छेदकरणेन तस्या वैमनस्यमपनेतव्यमिति प्रकाशितम्॥

एवमपेक्षितं देवीदर्शनमुद्दिश्य गच्छन् अभ्युदयद्योतकं सुनिमित्तमनुसन्धाय चित्तसन्तापस्य निर्वापणे पुत्रोद्भवे औत्सुक्यवानाह—सखे! इति। व्यसनवदभ्युदयेऽपि त्वमेव मम सब्रह्मचारी। तदिदानीमनुभूयमानादन्यदवस्थान्तरं सुनिमित्तं सूचयति। तच्छृणु। वामेतरं दक्षिणम् अनुकूलमिति च स्फुरति। इदमिति त्वयापि द्रष्टुं शक्यम्। अधुना सङ्कटकाले। स्फुरति स्फुरणस्य क्षणेन न विश्रान्तिः प्रारब्धस्य स्फुरणस्य न परिसमाप्तिः, अनेन फलस्य गौरवं गम्यते। मदीयमिति। मम वैषम्यं ज्ञात्वा स्वयं प्रियं निवेदयदिवेति द्योत्यते। स्फुरति स्पन्दते अत एव शोभत इति च ध्वनितम्। केन हेतुनेति शेषः। दक्षिणतया प्रीतिहेतुबोधकत्वमस्य स्वतः सिद्धमिति निरूप्य औचित्येन विशेषे नियमयति—न सुतेत्यादि। सुतसमुद्भवलाभात् सुतोत्पत्तिसिद्धेः। सुतोद्भवस्यैवापेक्षितत्वं पश्चात् तद्गुणादेरिति समुद्भवग्रहणं न तु सुतलाभादिति। अपरः अन्यः इतो विशिष्टः। प्रीतिप्रसङ्गः प्रीत्युद्भवहेतुः प्रसजत्यनेनेति व्युत्पत्त्या प्रीतिहेतुता द्योत्यते। सुतोत्पत्तिं तन्निमित्तं च विनेदानीं मम नान्यदपेक्षितमिति भावः ॥ ९ ॥

१. 'एव्व होदु। राजा—गच्छाग्रत। उभौ' इति ख. पाठः. २. 'व। राजा—बाढम्।उ' इति ग. पाठः. ३. 'यित्वा स' इति घ. पाठः.

**विदूषकः**—(क) अदिट्ठपुरुवाए देवीए पदविं अण्णेसन्तस्स किं ण होइ सुणिमित्तं ।

**राजा**—किमदृष्टपूर्वेति ।

**विदूषकः**—(ख) एत्तिअं कालं णिअमन्तारिदेदंसण त्ति मए भणिदं । (अग्रतो विलोक्य) पेक्खदु पेक्खदु भवं, एसा भअवई भाईरही दीसइ ।

**राजा**—(साञ्जलिबन्धम्)

भगवति! पुनतीभ्यस्तावकीभ्यास्त्रिलोकीं
प्रणतिमुपगतोऽहं स्वर्गनिःश्रेणिकाभ्यः ।
मदकलकलहंसश्रेणिपारिप्लवाभ्यः
शशिकरविशदाभ्यो वीचिकामालिकाभ्यः ॥ १० ॥

**विदूषकः**—(पुरतो निर्दिश्य) (ग) एसो गुहघरपरिसरारामो । पविसदु भवं ।

(क) अदृष्टपूर्वाया देव्याः पदवीमन्विष्यतः किं न भवति सुनिमित्तम् ।

(ख) एतावन्तं कालं नियमान्तारितदर्शनेति मया भणितम् । पश्यतु पश्यतु भवान्, एषा भगवती भागीरथी दृश्यते ।

(ग) एष गुहगृहपरिसरारामः । प्रविशतु भवान् ।

एतदुक्तिमनुसृत्य भाविनमर्थं सूचयति कविः अदृष्टपूर्वेत्यादिना । तत्र
अदृष्टपूर्वाया इत्यत्रास्फुटत्वगोपनाय प्रश्नपरिहारौ कविना प्रकाशितौ ॥
भगवतीत्यादि । स्वर्गनिःश्रेणिकाभ्यः स्वर्गारोहणसाधनत्वेन निःश्रेणिकात्वा-
रोपः । मदेन मधुरनादैः राजहंससञ्चयैः अर्थात् तेषां पक्षपवनैः पारिप्लवाभ्यश्चञ्च-
लाभ्यः "पारिप्लवन्त्वधीरं चलाचलं चञ्चलं च कथयन्ति" इति हलायुधः ॥ १० ॥

अथ सन्तापकुण्ठितस्य मनसः सूर्यवचनतात्पर्यनिरूपणेन सुनिमित्तोदयेन जाह्नवीनमनेनोद्यानावलोकनेन च क्रमेण विकासमवलम्बमानःरसिकवीन्यां (तत्)

१. 'कथम' इति ख. पाठः. २. 'रिअद' इति ख-ग पाठः. ३. 'दु ए' इति घ. पाठः. ४. 'वदी भा' इति ख-ग. पाठः. ५. 'दान् ए' इति क. पाठः. ६. 'गिहप' इति क-ख-ग. पाठः. ७. 'व । (उभौ उद्यानप्रवेशं रूपयतः) । रा' इति क-ख-ग.पाठः.

**राजा**—(प्रवेशं नाटयन् विलोक्य) सखे! अतिसुभगोऽयमुद्याना-
भोगः। इह हि—

आरामलक्ष्मीचरणच्युतानां
विभ्रत्यमी विभ्रमयावकानाम्।
शोभां शुकालीढफलावलीनां
बीजोत्करा दाडिमवल्लरीणाम्॥ ११॥

---

प्रेरयन् उद्यानं वर्णयति—सखे! इत्यादि। अतिसुभगः नित्याभ्यस्तस्य पूर्वमेवं न सौभाग्यं दृष्टम्। उद्यानस्याभोगः परिपूर्णता समग्रपरिकरत्वम्। तत् समर्थयति—इह हीत्यादि। इह शुकालीढफलावलीनां दाडिमवल्लरीणां बीजोत्कराः आरामलक्ष्मीचरणच्युतानां विभ्रमयावकानां शोभां बिभ्रति इति समस्तः समन्वयः। अमी इति निरन्तरं दृश्यमानाः दाडिमवल्लरीणां बीजोत्कराः। शुकालीढफलावलीनामित्यनेन बीजोत्कराणां फलोद्भवत्वं सिद्धम् इति तथोक्तम्। शुकैः आलीढाः दष्टाः फलावल्यो यासाम्। शुकग्रहणं तेषां दाडिमफलप्रियत्वाद् उद्यानवर्द्धितत्वाच्च। फलानामालीढत्वं बीजग्रहणाय भेदः। निरन्तरस्थितानां दाडिमवल्लरीणां शुकतुण्डखण्डितेभ्यः प्राचुर्येण सङ्घीभूय तत्र तत्र व्याकीर्णा बीजोत्कराः अनुक्तसिद्धारुणवर्णाः एवं सुभगसम्भावनायोग्या भवन्ति। कथम्, आरामलक्ष्मीचरणच्युतानां रम्यप्रदेशसंरक्षणार्थं तत्र तत्र लक्ष्मीकलाः सञ्चरन्ति, अतः आरामसन्निहितायाः स्वलसौभाग्येन सविलासं सर्वत्र चरन्त्याः चरणकमलच्युतानाम्। विभ्रमयावकानां विलासोचितानां लाक्षारसानाम्। शोभां बिभ्रति तत्समानशोभा दृश्यन्त इत्यौपम्यगर्भम्। अत्रारामलक्ष्म्याः अदृश्यरूपायाः एवं प्रत्यक्षसञ्चरणे चरणाद् यावकरसपतने च सिद्धे तत्सादृश्यं घटते। सादृश्यगर्भितत्वेन निदर्शना। अतन्मद्भावाद् उत्प्रेक्षायां पर्यवसानम्। अत एवम्भूता बीजोत्कराः एवमुत्प्रेक्षितुं शक्याः। अलक्तकरञ्जितपदायाः स्वैरं सञ्चरन्त्या आरामलक्ष्म्याः पदतलच्युता

---

१. 'आ—विलोक्य स' इति रा-ग. पाठः, 'आ—अपि' इति ख. पाठः. २. 'नाम्॥ वि' इति रा ख. पाठः

(उभौ परिक्रामतः)

**विदूषकः**—(सभयं परावृत्य) (क) भो पळाअह्म । अग्गदो महन्तो संपहारो वट्टइ ।

**राजा**—कोऽयमकाण्डे सम्भ्रमः ।

**विदूषकः**—(ख) एआरिसं पाणसंसअं मोत्तूण को अण्णो संभमस्स अवआसो होइ ।

**राजा**—कस्ते प्राणसंशयस्य हेतुः ।

**विदूषकः**—(अङ्गुल्या निर्दिश्य) (ग) एदस्सिं मरगअसिळादळे ळोहिदपूरो दीसइ ।

(क) भो पलायावहे । अग्रतो महान् सम्प्रहारो वर्तते ।

(ख) एतादृश प्राणसशयं मुक्त्वा कोऽन्यः सम्भ्रमस्यावकाशो भवति ।

(ग) एतस्मिन् मरकतशिलातले लोहितपूरो दृश्यते ।

यावकरसा इव सम्भावनीया । अतो निदर्शना उत्प्रेक्षायां पर्यवस्यति । अत्र लक्ष्मीसञ्चरणस्योत्प्रेक्षितुं योग्यत्वादतिसुभगत्वं समर्थितम् ॥ ११ ॥

अथ प्रबन्धव्याप्तस्याभिलापशृङ्गारस्य धर्मशेषत्वं प्रकाशयितुम् ऋणनिवृत्तिरूपस्य धर्मस्य पुत्रोत्पत्त्या साध्यत्वं प्रतिपाद्य तदुपायान्वेषणद्वारा प्रवृत्तौ प्राधान्यसरस्य प्रस्तावाय रत्यालम्बनस्य नायिकारूपस्य द्वितीयाङ्के वर्णयिष्यमाणस्यैकदेशालम्बनेनौत्सुक्यपूर्वं रतौ क्रमेण प्रवेशं प्रतिपादयितुं पदवतंसकवृत्तान्तमुद्भावयति । तच्छेपतया विदूषकस्य भ्रमप्रकारः प्रतिपाद्यते— भो ! पळाअह्म इत्यादितः । अस्मिन् मरतकशिलातले सम्प्रहारद्योतको लोहितपूरो दृश्यते ॥

इति तस्य भ्रमभणितिमाकर्ण्य तत्स्वरूपज्ञानाय सावधानं निरीक्षमाणस्तदानीमेव शिलातले स्थित्वोत्थिताया दिव्यकन्यकाया मणिशिलासंक्रान्तं प्रत्यक्षलाक्षारसरञ्जित पदप्रतिबिम्ब लाक्षारसरञ्जितत्वेन परिस्फुटसौभाग्यं प्रकाशमानमालोक्य तच्चातुर्येण स्थालीपुलाकन्यायेन लोकोत्तरं रूपचातुर्यं सङ्कल्प्य दिव्यकन्यकासम्बन्धित्वमुपपत्त्या निश्चित्य तस्याः काम्यत्वमनुसन्धाय

१. 'कः—भो' इति ख-घ. पाठः, 'कः—(सभय) भो, इति ग. पाठः. २. 'शनू' इति क. पाठः. ३. 'दश' इति ख-घ. पाठः.

राजा[1] — (निपुणं निरूप्य सस्मितम्) सखे! सत्यं प्रवृत्त एव सम्प्रहारः। कस्याश्चिद् दिव्ययुवतेः—

लाक्षाविषदिग्धाभ्यां हृदि मन्येऽहं पदाब्जबाणाभ्याम्।
विद्धः स्मरेण शेते मरतकमणिरेष कीर्णकरः॥ १२॥

विदूषकः — (क) केण उण वअस्सो जाणइ दिव्वकण्णाए[3] पदविण्णासो ण माणुसीए त्ति।

राजा — पश्यतु भवान् अम्बरावतरणसमयसङ्क्रान्तं पिण्डी-

(क) केन पुनर्वयस्यो जानाति दिव्यकन्यायाः पदविन्यासो न मानुष्या इति।

पदतलाङ्किते मरतकमणौ कामुकत्वमारोप्य भङ्ग्या तद्भ्रममनूद्य सस्मितं कथयति — सत्यमित्यादि। त्वदुक्तं सत्यम्। सम्प्रहारः प्रवृत्त एव। नात्रावयोर्विमतिः। तत्र प्रकारभेद एवास्ति। एष मरतकमणिः स्मरेण कस्याश्चिद् दिव्ययुवतेः पदाब्जबाणाभ्यां हृदि विद्धः शेते इत्यहं मन्ये। एषः कान्त्यतिशयेन नयनमनोहरः। कस्याश्चिदनिश्चितस्वरूपायाः अनिर्देश्यरूपायाश्च। पदाब्जाभ्यामेव बाणाभ्याम्। स्मरेण त्रैलोक्यविजयसाधनत्वेन तरुणीं निश्चित्यानेन तदमेसरेण। तत्पदाब्जे बाणत्वेनाङ्गीकृत्य हृन्मर्मणि निर्दयं विद्धः गतप्राण इव शेते। कीर्णकर इति वैवश्यद्योतकम्। हृदि शरविद्धानां करौ प्रसार्योत्तानशयनं दृश्यते। अयमपि तथा। करशब्दः श्लिष्टः प्रसारितरश्मिरूपबाहुः। अत्र हृदि वेधः शरतैक्ष्ण्यं च वैवश्यहेतुः। तदाह—लाक्षाविषदिग्धाभ्यामिति। लाक्षेव विषं लाक्षाविषं, लाक्षाया विषत्वारोपः कामुकेनातिदुःसहतया। एवं सम्प्रहारः प्रवृत्त इत्यहं मन्ये। एवमचेतनस्यापि विकारजननसामर्थ्ये रसिकानां यूनां भययमात्रेणापि सम्बन्धेन पारवश्यं कर्तुं मदनसहायायास्तरुण्याः सामर्थ्यं किं कथ्यताम्। एवं गुणवर्णनेन सस्नेहदृष्टिपातेन चानुभावेन सङ्कल्पकल्पिततरुणीरूपेऽस्य हृदि रतिभावोऽङ्कुरितो व्यज्यते। एष एव क्रमोत्कर्षं यास्यति॥ १२॥

पश्यतु भवानित्यादि। पिण्डीतरुः अशोकः॥

१. 'जा—(उपगृह्य निपुणं निरूप्य)' इति ग-ग. पाठः, 'जा—(उपगृह्य सस्मितम्)' इति क. पाठः, 'जा—(निपुणं निरूप्य)' इति घ.पाठः २. 'र्हा' इति ग. पाठः. ३. 'ण्णआए' इति ग. पाठः.

तरुपलाशेषु पिण्डालक्तकरसम् ।

**विदूषकः** — (क) जुज्जइ एदं । (पुनर्निरूप्य) एदस्स पदजुअलंतरस्स को वक्खाणविसेसो । अहवा एत्तिअमेत्तं अहं एव्व संपहारिअ वक्खाणइस्सं । (ध्याननिमीलितचक्षुस्तिष्ठति)

(ततः प्रविशति देवी सपरिवारा)

**देवी** — (ख) हळा ! उप्पलिए ! एत्तिअं कालं तणअसंभवकोदुआदिसएण अय्यउत्तविरहुक्कण्ठाविलुलिअं पि हिअअं अप्फुडिअं आसि । अज्ज उण णिव्वत्तिअणिअमाए दूस-

(क) युज्यत एतद् । एतस्य पदयुगलान्तरस्य को व्याख्यानविशेषः । अथवैतावन्मात्रमहमेव सम्प्रधार्य व्याख्यास्यामि ।

(ख) सखि ! उत्पलिके ! इयन्तं कालं तनयसम्भवकौतुकातिशयेनार्यपुत्रविरहो-

एदस्स इत्यादि । पदयुगलान्तरस्य संस्थानचातुर्यादिना अन्यरूपत्वं ज्ञायते । तस्य को व्याख्यानविशेषः विविच्याख्यानं व्याख्यानं तस्य विशेषः पूर्वस्मात् । पूर्वस्य मदनशरत्वादिकं साधितम् । अस्य किं व्याख्यायते । पदमत्रापि व्याख्येयम् । पूर्वस्यैव व्याख्यानबाहुल्यं भवदुक्त्या ज्ञायते । मम सहसा व्याख्यातुं न सामर्थ्यम् । अतो विमृश्य व्याख्यास्यामि ॥

अथ नायकस्य दक्षिणत्वं स्फुटीकर्तुं प्रथमनायिकायाः प्राप्तावसरतया प्रवेशः प्रतिपाद्यते । अङ्कान्तरेऽप्यविलसितवृत्तस्य देशान्तरस्थतया एतत्सम्बन्धाप्रदानादिदानीं पदयंसकवृत्तान्तेनान्यानुरागस्फुरणशङ्कया मानग्रहणकोपोपशमनप्रार्थनौचित्याच्च प्राप्तावसरत्वम् । पूर्वं श्रवणाङ्कुरितानुरागाया इदानीं झटिति दर्शनेन रतिपरिपोषं गताया उपरि स्थिताया द्वितीयनायिकाया नायकस्यैतदनुरागशङ्कया तृतीयाङ्कावसानं यावद् व्यभिचारिपरम्पराभिरभिलापशृङ्गारस्य परिपोषनयनार्थं च प्रविष्टा सा नियमनिवर्तनजनितं खेदमाक्रम्य प्रवृत्तेन दयितस्य विरहान्तरितदर्शनौत्सुक्येन त्वरमाणा चेटीं प्रत्याह — हळा ! उप्पलिए ! इत्यादि । इयन्तं कालमिति नियमस्य चिरकालानुवृत्तत्वं प्रकाश्यते । तनयसम्भवे अस्मज्जन्मसाफल्यजनके यः कौतुकातिशयः । अतिशयशब्देन भावान्तरनिरोधकत्वं कौतुकस्य प्रकाश्यते । अत एव हृदयस्य स्फुटनं धैर्यशैथि-

१. 'पू' इति क-ग-घ. पाठः. २. 'पडिआवि' इति घ. पाठः.

हवेदणं एदं मुहुत्तअं पि मं णाणुमण्णइ विळम्बिदुं ।
ता तुरिअं तस्स दंसणूसवं अणुभविस्सं ।

चेटी — (क) भट्टिणि! पावुसणिरोहमुक्का सरअचंदचंदिआ कहं
अणासादिअ कुमुदाअरं चिट्ठइ[2] । ता एदु एदु भट्टिणी।

(परिक्रामतः)

---

त्कण्ठाविलुलितमपि हृदयमस्फुटितमासीत् । अद्य पुनर्निवर्तितनियमाया दुस्सहवेदनमेतन्मुहूर्तमपि मां नानुमन्यते विलम्बितुम् । तत् त्वरितं तस्य दर्शनोत्सवमनुभविष्यामि ।

(क) भट्टिनि! प्रावृण्णिरोधमुक्ता शरच्चन्द्रचन्द्रिका कथमनासाद्य कुमुदाकरं तिष्ठति । तद् एतु एतु भट्टिनी ।

---

स्येन वैक्लव्य निरोद्धुं सामर्थ्यम् । आर्यपुत्रविरहेण क्षणमप्यसह्येन या उत्कण्ठा उत्कलिका तया विलुलितमपि व्याकुलमपि । अनेन स्फुटनहेतोः प्राबल्यं गम्यते । अत एवोक्तम् अस्फुटितमिति, न स्वस्थमिति । अनेन विरहस्य कथञ्चित् सोढत्वं गम्यते । अत एवोक्तम् इदानीं निवर्तितनियमायाः । तेन सह कौतुकस्यापि निवर्तनाद् इदानीं दुस्सहवेदनं हृदयं मां मुहूर्तमपि विलम्बितुं नानुमन्यते, किं विलम्बसे प्रियतमदर्शनाय त्वरस्वेति प्रेरयति । तद् हृदयेच्छामनुसरामि त्वरितत-रमार्यपुत्रदर्शनोत्सवमनुभविष्यामि । तद् दर्शय मार्गमिति प्रौढनायिकाया उक्तिः ॥

चित्तानुसारिणी चेटी अप्रस्तुताभिधानद्वारा तां प्रोत्साहयति—प्रावृण्णिरो-धेन मुक्तायाश्चन्द्रिकायाः कुमुदाकरसम्बन्धः स्वतः सिद्धः, तस्याः प्रावृण्णिरोधः कादाचित्कः तेन मुक्ता । तत एव शरदि वर्तमाना । शरदित्यनेन निरोधमुक्ततया कालविशेषेण शोभातिशयः । तेन कुमुदाकरसम्बन्धे परस्परशोभाजनकत्वम् । एवं नित्यमवियुक्ताया अन्तरा वियोगदुःखमनुभवन्त्या वियोगहेतुनिवृत्त्या अतीव प्रसन्नाया महाराजसंश्लेष एव शोभत इति प्रकृतार्थप्रतीतिः ॥

एवं कान्तदर्शनोत्सुकाया गच्छन्त्या विदूषकवचनश्रवणेन तत्र राज्ञः सन्नि-धिमाशङ्क्य तयोः सल्लापश्रवणार्थं तिरोहिताया अन्यानुरागशङ्कानुगुणं नायकवृ-

---

१. 'अर्थाद' इति क-ख-ग. पाठः. २. 'इ । ए' इति घ. पाठः.

**विदूषकः** — (क) भो ण केवळं णिमीळन्ताणं अक्खिणं[२] एव्व, चित्तस्स वि महन्तो अन्धआरो संवुत्तो । ता तुमं एव्व वक्खाणेहि ।

**राजा** — किमत्र दुरवबोधम् । आभ्यामपि तद्वयस्यायाः कस्याश्चित् पदाभ्यां भवितव्यम् ।

**विदूषकः** — (ख) एदं पि जुज्जइ । (ऊर्ध्वमवलोक्य) [३]अविह अंबरादो एदं पिसिअखण्डं णिवडइ । तक्केमि सग्गे महन्तो देवासुरसङ्गामो वट्टदि त्ति ।

**चेटी** — (कर्णं दत्वा) (ग) भट्टिणि ! अग्गदो अय्यपारासरिअस्स विअ आळावो सुणीअदि । तक्केमि महाराएण एत्थ सण्णिहिदेण होदव्वं ति ।

**देवी** — (घ) हळा ! जइ एव्वं मुहुत्तअं ळदावळअन्तरिदाओ भविअ तेसं अण्णोण्णसेराळावं सुणह्म ।

(तथा कुरुतः)

**राजा** — (पुनर्निरूप्य) न खल्वियं पिशितपेशी । मन्ये मन्दारपल्लवापीडकल्पितः कस्याश्चित् —

(क) भो न केवलं निमीलतोरक्ष्णोरेव, चित्तस्यापि महानन्धकारः संवृत्तः । तत् त्वमेव व्याचक्ष्व ।

(ख) इदमपि युज्यते । अविह अम्बरादेतत् पिशितखण्ड निपतति । तर्कयामि स्वर्गे महान् देवासुरसङ्ग्रामो वर्तत इति ।

(ग) भट्टिनि ! अग्रत आर्यपाराशर्यस्येवालापः श्रूयते । तर्कयामि महाराजेनात्र सन्निहितेन भवितव्यमिति ।

(घ) सखि ! यद्येवं मुहूर्तकं लतावलयान्तरिते भूत्वा तयोरन्योन्यस्वैरालाप शृणुव. ।

चान्तः प्रतिपाद्यते । तत्र पदयुगलान्तरं पूर्वकल्पितनायिकायाः सखीसम्बन्धित्वेन निश्चित्य सहसा पतितं कर्णपूरमभ्यौत्सुक्यानुरागविशिष्टमवलोक्य प्रमापनयपूर्व (निर ! प्रिय)स्य, कर्णपूरस्य लोकोत्तरं सौभाग्यं वर्णयति — न खल्विति । पिशितपे-

१. 'मिळन्ता' इति ग. पाठः. २. 'क्खीण' इति ख घ पाठः' ३. पदमिदं ग. पुस्तके नास्ति,

कम्रैः कैश्चिन्मृदुमणिदलैर्गण्डसंसर्गलाभा-
द्धन्यैः स्वेदप्रकरसुभगैश्चित्रितैः पत्रभङ्गैः ।
सोऽयं शुभ्रैः शबलिततनुः षट्पदक्षोभलग्नैः
सान्द्रामोदैरलकसुमनोरेणुभिः कर्णपूरः ॥ १३ ॥

---

शीति तव भ्रम एव । इद वस्त्वन्तरमेव । किं तर्हि इत्यत्राह—मन्दारपल्लवापीडकल्पित कस्याश्चित् कर्णपूर इति श्लोकान्त्येन पदेन समन्वय । मन्दारपल्लवापीडेन मन्दारपल्लवसञ्चयेन । आपीडशब्दस्य कुसुमापीडादिषु सञ्चयवाचित्व दृष्टम । मन्दारपल्लवसञ्चयेन कल्पितशिखादलकर्णिकाद्यवयवविशेषशिल्पविन्याससुभग सम्पादित, तदपेक्षया आपीडग्रहणम् । अथवा मन्दारपल्लवरूपेणापीडेन अलङ्कारेण कल्पित । कस्याश्चिद् वनिताकुलवैजयन्त्या । भूषणचातुर्येण भूष्यस्य लोकोत्तरत्व कल्पत इति कस्याश्चिदित्युक्तम् । कर्णपूर निक्षेप्य कर्णालङ्कार । कर्णपूरशब्देन कर्ण पूरयितु समग्रशोभ कर्तुमस्य वैचित्र्यमिति प्रकाश्यते । कम्रैरित्यादि । कश्चिन्मृदुमणिदलै कश्चिदिति दृष्टिगोचरैरप्यपरिच्छेद्यसौभाग्ये मृदुमणिरूपैर्दल मन्दारपल्लवेन अनेकरत्नरूपेण निर्मितैर्दलैरुपलक्षित । एतान्यसाधारणानि कर्णपूरत्वज्ञापकानि चिह्नानि । एतद्विशेष्यम् । गण्डससर्गलाभाद्धन्ये । एतत्सम्बन्धिनो गण्डससर्गस्य रसिकैरभिलषणीयस्य लाभात् अतिलोभनीयात् । (स्वेदप्रकरेण) गण्डससर्गलब्धेन सुभगे उज्ज्वले । पत्रभङ्गैश्चित्रिते गण्डस्थले कुङ्कुमकस्तूरिकादिनिरचितै पत्रभङ्गै सश्लेषसङ्क्रान्तै चित्रिते विचित्रता नीते । एतानि दलविशेषणानि । स तव पिशितभ्रमहेतु । अय नयनानन्दकर । अलकसुमनोरेणुभि शबलिततनु सुमनोरेणु(म)त्त्व दृष्टम् अलकसम्बन्धित्वमुपपत्त्या कल्प्यते । कुसुमरेणुत्वनिश्चये अन्यदपि चिह्नमस्ति । सान्द्रामोदै सान्द्रमामल आमोदो येषाम् । कथमलकसुमनोरेणूना कर्णपूरसम्बन्ध तत्रोपपत्तिकथन—षट्पदक्षोभलग्नै रेणूनामामोदेन कुसुमामोदभ्रान्तेन षट्पदक्षोभ, तेषामामोदाविष्यत्वान्, तेन तत्र शोभलग्नत्व कल्प्यते । शुभ्रै धवलै शोभनैर्वा । अत्र कर्णपूरसौभाग्यवर्णनेन तत्सम्बन्धिन्या नायिकाया रूपचातुर्यप्रदर्शनेन एते क्रमेण गुणवर्णनानुसारेणोत्कृष्टता प्रकाश्यते ॥ १३ ॥

**देवी**—(क) हळा! एसो मन्दारकण्णउरवुत्तन्तो अदिमेत्तं मं संकावेदि[2]।

**चेटी**—(ख) भट्टिणि! एत्तिएण ण णिण्णओ । अवहिदाओ सुणह्म ।

**विदूषकः**—(ग) भो मम खु सिद्धन्तो उदअलिहिअं विअ अक्खरं सुण्णपरिणामं होदि । (कर्णपूरमादाय) किस्से अअं कण्णउरो त्ति एदं पि किं जाणिदुं पारेसि ।

**राजा**—(अङ्गुल्या निर्दिशन्) यस्या इयं[3] पदपद्धतिः, मन्ये तदीयामेवावतंसकभुवमसावलङ्कृतवानिति ।

---

(क) सखि! एष मन्दारकर्णपूरवृत्तान्तोऽतिमात्रं मां शङ्कयति ।

(ख) भट्टिनि! एतावता न निर्णयः । अवहिते शृणुवः ।

(ग) भोः मम खलु सिद्धान्त उदकलिखितमिवाक्षरं शून्यपरिणाम भवति । कस्या अयं कर्णपूर इत्येतदपि किं ज्ञातुं पारयसि ।

---

इत्थं नायकस्य सादरं वचनमाकर्ण्य नायिका मानग्रहस्य बीजावाप करोति—**एसो** इत्यादि । मन्दारकर्णपूरवृत्तान्तः कस्याश्चिदित्यारभ्य बहुप्रकारं साभिनिवेशं वर्णितः । वृत्तान्तशब्देन वर्णनीयस्य बहुत्वेन भवसस्तत्राभिरुचिर्व्यज्यते । अत एवातिमात्रमित्युक्तम् । माम् इतः पूर्वमदृष्टप्रियतमापचाराम् । अतिमात्रमिति इमं द्वारीकृत्य वनितान्तरान्वेषण तल्लिप्सया वैवश्यमित्यादिबहुविभ्रमनिष्टमाच्छाद्यातिमात्रमित्युक्तम् । शङ्कयति वितर्कयति । गोपनाय विषयानिर्देशः ॥

आच्छादितं ज्ञात्वा चेटी संरम्भावकाशं निरस्याह—इयता न निर्णयः । अन्यानुरागं प्रतीतिशेषः । पुनरपि वस्तुनिश्चयावधि शृणुव, नान्तरा वैमनस्यं कार्यमिति भावः ॥

एतदपीति । पदयुगलविभागज्ञानवदित्यपिशब्दार्थः ॥

इयं पदपद्धतिः इयं पूर्वं दृष्टा । (पद)पद्धतिः पदप्रतिबिम्बम् । अवतंसकभुवं कर्णपाशम् ॥

---

१ 'सदावे' इति क. पाठः, २ 'इ' इति ग-घ. पाठः. ३. 'इय) इति घ. पाठः. ४. 'पद्ध' इति घ. पाठः. ५. 'वमल' इति घ. पाठः

विदूषकः—(क) को एत्थ हेदू।

राजा—यतः पदवतंसकयोरालक्ष्यन्ते घर्मसलिलबिन्दवः।

देवी—(ख) हळा! पअकहा वि एत्थ आपडिआ।

चेटी—(ग) भट्टिणि! किं वा एदिणा।

विदूषकः—(घ) भो समाणे वि समीरपहगमणपरिस्समे कहं एक्काए च्चिअ समजळं उब्भिण्णं।

राजा—न खलु मार्गश्रमजनितैरेभिर्भवितव्यम्। श्लाघ्यजन्मानं कञ्चिद् युवानम्—

(क) कोऽत्र हेतुः।
(ख) सखि! पदकथाप्यत्रापतिता।
(ग) भट्टिनि! किं वैतेन।
(घ) भोः समानेऽपि समीरपथगमनपरिश्रमे कथमेकस्या एव श्रमजलमुद्भिन्नम्।

कोऽत्र हेतुरिति। तत्सम्बन्धित्वे को हेतुः। पदे संस्थानादिद्वयो भेदः। अत्रैकाश्रयत्वज्ञापको हेतुः कथ्यतां, न प्रतिज्ञामात्रेण सवदामि॥

पदकथापि पदवृत्तान्तोऽपि। पूर्वस्यैव शङ्काहेतुत्वे अन्यदपि गण्डोपरि पिटकायमानमाविर्भूतमित्यर्थः॥

किं एदिणा इति। अनेन पूर्वस्माद् विशेषो न सिद्धः। तन्नात्र वैमनस्यं कार्यमिति शेषः॥

समानेऽपीति। घर्मजलबिन्दोरसाधारणत्वं न घटते। दिव्ययुवतित्वाङ्गीकारात् समीरपथगमनं तेन परिश्रमश्च युज्यते। श्रमजलमेकस्या एवेति कथं घटते[1]। अत्र प्रभुत्वं नानुसरामि। श्रमजले श्रमस्य हेतुत्वं नियतम्। तस्येहाध्वगमनं परिस्फुटो हेतुः। तदुभयोः साधारणं कार्यम् एकस्या इति न चतुरश्रम्॥

अन्यथा श्रमस्यासाधारण हेत्वन्तरं वक्तव्यमित्यत्राह—न खल्विति। मार्गश्रमो नात्र निमित्तम्। तस्य साधारणत्वम्। लोकोत्तरमसाधारणं निमित्तान्तरं कल्प्यते। किं तदित्याह—श्लाघ्येत्यादि। कञ्चिद् युवानं श्लाघ्यजन्मानम्। जन्मफले नि-

१ घटत इदं कस्मिंश्चिद् नास्ति २. इदं ख-ग्रन्थे नास्ति.

अपाङ्गपातैरनुरागगर्भैरावल्गितभ्रूलतमापिबन्त्याः ।
रोमाञ्चसम्भेदसखेषु सोऽयमङ्गेष्वनङ्गप्रथमावतारः ॥ १४ ॥

**विदूषकः** — (क) भो अप्पणो [1]वि अहं एत्थ किं पि उप्पेक्खिदुं

(क) भो अल्पज्ञोऽप्यहमत्र किमप्युत्प्रेक्षितुमिच्छामि । त्वमेव तस्या अपाङ्गशरस्य

रूप्यमाणे प्रथममस्य जन्मैव श्लाघ्यम् । किं पुनश्चरितम् । अनेकजन्मस्वेकफलोद्देशेन समार्जितविविधपुण्यफलानुभवाय प्रादुर्भूतत्वाद् अहो महापुरुषस्य जन्म लोकोत्तरम् । अन्येषामुचितफलाभावेन नातिहृद्यमिति रसिकैः श्लाघ्यजन्मानम् । कश्चिद् अन्वेषणे दुर्लभत्वात् सहसा न बुद्ध्युपारूढं कामपि जातिं देशं चालङ्कर्वाणम् अनिर्देश्यमहिमानम् । युवानं प्रत्यग्रयौवनम् इति निर्देक्ष्यमाणकटाक्षकर्मतया कल्प्यते । किञ्चास्यैव यौवनं सफलम् । अपाङ्गपातैः विषयबाहुल्येन तत्र तत्र पुनः पुनः वैवश्यमन्थरं पतितैरपाङ्गैः । अनुरागगर्भैः रागस्य भोगोन्मुखत्वमनुरागः, 'अनुरागेण युज्यते' इत्युक्तत्वात्, तेन सुभगभोग्यलाभेनान्तःकरणमापूर्य नयनमार्गेण निर्गत्य तद्रश्मीनवलम्ब्य भोग्यं प्रति प्रेरकेण सम्मिलितैः । तेन पाने अलम्भावानुदयः प्रकाश्यते । आवल्गितभ्रूलतं सहचरनयनमहोत्सवानुगुणमीषल्लसितलास्यचतुरचिल्लीवल्लीकम् । पानक्रियाविशेषणमेतत् । आपिबन्त्याः आ समन्ताद् आपादचूडमभिव्याप्य भृशं पिबन्त्याः आस्वादयन्त्याः । अत एव यूनः कर्मत्वं, नैकदेशस्य मुखादेः । चक्षुरादीनां रूपादिग्रहणाद् रसनाया रसग्रहणे हृद्यताप्रकर्ष इत्यन्येषां विषयग्रहणे प्रकर्षकथनाय पानक्रियोपचार इति दर्शने पानमुपचर्यते । रोमाञ्चसम्भेदस्य पानदशासमुल्लसितस्य स्वयमवकाशदानेनानुकूलेषु, इदमेव हि सख्यम् । अङ्गेषु न क्वचिदवयवे, कपोलादिपदतलान्तेषु । सः त्वया मार्गपरिश्रमनिमित्तत्वेनोक्तः स्वेदप्रसरः । अयम् अनङ्गप्रथमावतारः दर्शनजनितस्य मदनावेशस्य प्रथमप्रादुर्भावः । स्वेदादीनां मदनावेशकार्यत्वात् । अनङ्गशब्देन तत्कार्यं लक्ष्यते नियतकारणत्वबोधनाय । प्रथमशब्देन दर्शनस्य तत्कृतस्य मदनावेशस्य तत्कार्यस्य स्वेदादेश्च नूतनत्वेन हृद्यत्वं गम्यते । रोमाञ्चस्यापि युगपदेकाश्रयत्वकथनेनानङ्गकार्यत्वमनुक्तसिद्धम् । प्रस्तावात् स्वेदस्य विशेषकथनम् । कश्चित् सप्रेमावलोकयन्त्याः पदवतंसकस्वामिन्याः मदनावेशजनितोऽयं स्वेदोद्गम इति मया सम्भाव्यते । अतः पूर्वोक्तं घटत इति तात्पर्यम् ॥ १४ ॥

१. 'ख़ु' इति घ. पाठः.

इच्छामि। तुमं एव्व तिस्से अपङ्गसरस्स लक्खो। को अण्णो एत्थ माणुसलोए दिव्वकण्णआजणप्पत्थणीओ।

देवी — (क) हला! किं सुदो माणवअस्स उवण्णासो।

चेटी — (ख) आम सुदो। को उण एदिणा महाराअस्स अवराहो।

देवी — (ग) का वा मन्तेदि सो अवरज्झो त्ति।

विदूषकः — (सावधानं कर्णपूरमवलोक्य) (घ) भो वअस्स! अच्छेरं अच्छेरं। एत्थ किं पि सत्थं आलिहिदं।

राजा — (सस्मितम्) तर्हि वाच्यतां शास्त्रम्।

विदूषकः — (वाचयति) (ङ) किकुचासविमेसुतिदिपुआ। कहं पि वाइदाइ अक्खराइ। अत्थं पुण जाणिदुं अकुसलह्मि। ता कहेदु अत्तभवं।

राजा — (सविमर्शम्) शङ्के मदनसन्देशपराया गाथायाः पदाद्यक्षराण्येतानीति।

---

लक्ष्यः। कोऽन्योऽत्र मानुषलोके दिव्यकन्यकाजनप्रार्थनीयः।

(क) सखि! किं श्रुतो माणवकस्योपन्यासः।

(ख) आम श्रुतः। कः पुनरेतेन महाराजस्यापराधः।

(ग) का वा मन्त्रयते सोऽपराद्ध इति।

(घ) भो वयस्य! आश्चर्यमाश्चर्यम्। अत्र किमपि शास्त्रमालिखितम्।

(ङ) कथमपि वाचितान्यक्षराणि। अर्थं पुनर्ज्ञातुमकुशलोऽस्मि। तत् कथयत्वत्रभवान्।

---

उपन्यासः अनिष्टप्रमेयप्रस्तावः। श्रुत इति काकुगर्भं वचनम्। माणवक इति सासूयमुक्तिः॥

---

१. 'अज्ज मा' इति क. ख. ग. पाठः. २. 'अ' इति ग. पाठः.

विदूषकः—(क) पच्चेमि भवंदो मदिकोसळं, जइ णहेहि लिहिअ तं पूरेसि ।

(राजा कर्णपूरमादाय तथा कृत्वा ददाति)

विदूषकः—(पुनर्वाचयति)

(ख) किं कुणइ चादअवहू सन्दसिणेहा वि मेहपअरम्मि ।
सुहिआ तिस्से दिट्ठी पुण्णा आणन्दवाहेणं ॥ १५ ॥

(ग) भो आखू विअ तुवं । सो खुं अप्पं पि छिद्दं अ-

(क) प्रत्येमि भवतो मतिकौशलं, यदि नखैर्लिखित्वा तां पूरयसि ।

(ख) किं करोति चातकवधूः सान्द्रस्नेहापि मेघप्रवरे ।
सुखिता तस्या दृष्टिः पूर्णानन्दवाष्पेण ॥

(ग) भो आखुरिव त्वम् । स खल्वल्पमपि च्छिद्रमतिमात्र विस्तारयति । त्वयापि

किं कुणइ इत्यादि ।

किं करोति चातकवधूः सान्द्रस्नेहापि मेघप्रवरे ।
सुखिता तस्या दृष्टिः पूर्णानन्दवाष्पेण ॥

किंशब्दः क्षेपे । न खलु निजस्नेहसान्द्रतानुगुणं सलिलादानादिषु प्रवर्त्तते, तद्गौरवेण तूष्णीमास्त एवेत्यर्थः । अत एवोक्त प्रवर इति । तर्हि किमस्याः सद्य.फलितमित्यत्राह—सुखितेति । अत्र वाच्यनिह्नवेन कुलपालिका भिन्नलोकस्थमपि पुरुषवरं दृष्ट्वा समुचितां स्वपक्षपातप्रेमदशामधिरोहणयोग्याम् अवश्यमङ्गीकुर्वाणा विप्रयोज्योपावर्त्तनादिषु स्वयमन्यमुखेन वा न यतते, शीलेन शालीनतयापाटवेन तत्कारुण्यानिर्णयेन च तूष्णीमास्ते । तर्हि किमरण्यरुदितप्रायेणानुरागेणेति चेद्, अस्ति महज्जन्मसाफल्यं नयनयोः । सुकुमारसुन्दरपरिपूर्णलक्षणरूपसाक्षात्कारेण सुखिता । कथ सुखं ज्ञायते, आनन्दजनितेन बाष्पेण पूर्णा । आत्मनस्तु सकलेन्द्रियप्रवृत्तिजनकविषयलाभ एव परमानन्दलाभ इति दृष्टिः सुखितेत्यनेन व्यज्यते । एवं स्थितेऽवस्थानिवेदनादृते न किञ्चिदनया मुग्धया कर्तव्यम् । स एव विशेषज्ञः समुचित विधास्यति । अत्र मेघप्रवरचातकवधूव्यपदेशेन मनोरथदयितं

१. 'भोदो' इति घ. पाठः, 'होदो' इति ग पाठः. २. पदमिदं घ. पुस्तके नास्ति. ३. 'व' इति क. पाठ. ४. 'वि' इति घ. पाठः

दिमेत्तं वित्थारेदि। तुए वि पञ्चसेहिं अक्खरेहिं महन्तो गन्थसन्दब्भो रइओ। अलं एदिणा, अण्णं किं पि रहस्सं पुच्छिस्सं। पददंसणादो आरहिअ अण्णादिसो[२] विअ दे आआरो। अत्थि वा[१] वम्महस्स वि एत्थ अवसरो।

**देवी** — (क) हला! मम वि एसो संसओ।

**चेटी** — (ख) भट्टिणि! भट्टिणो उत्तरं सुणिअ णिण्णअं करह्म।

**राजा** — (आत्मगतम्) ‡अहोतुखलु मदीयामवस्थामनुकरोति मा-

पञ्चभिरक्षरैर्महान् ग्रन्थसन्दर्भो रचितः। अलमेतेन, अन्यत् किमपि रहस्यं प्रक्ष्यामि। पददर्शनादारभ्यान्यादृश इव ते आकारः। अस्ति वा मन्मथस्याप्यत्रावसरः।

(क) सखि! ममाप्येष संशयः।

(ख) भट्टिनि! भर्तुरुत्तरं श्रुत्वा निर्णयं कुर्वः।

प्रति कामिन्या निजाभिलापवैवश्य प्रकाश्यते। मेघसाम्येन सर्वोपकारदीक्षितत्वम्। चातकवधूसाम्येनानन्यशरणत्वं तरुण्याः प्रकाश्यते॥ १९॥

**पददंसणादो** इत्यादि। इतः पूर्वमदृष्टत्वात् पददर्शनादारभ्य स्वेदरोमाञ्चादिविकारदर्शनादाकारस्यान्यादृशत्वं लक्ष्यते। अत्रावस्थान्तरे। मन्मथस्यापि, अपत्यलाभं प्रत्यौत्सुक्यं पूर्वमनुवृद्धं, तत्र पदवतंसकमात्रमवलम्ब्य मन्मथविकारस्यापि। अवसर. प्रसरोऽस्ति किम्। पदवतंसकवर्णनं भवदाकारं च निरीक्ष्य मया शङ्क्यते॥

तदानीं नायिका स्वहृदयसंवादि तद्वचनमाकर्ण्य निगूढामात्मशङ्कां तां बोधयति — **ममाप्येष** संशय इति॥

एतद्वचनेन निश्चेतुं न शक्यं, महाराजस्योत्तरं **श्रुत्वा** निश्चिनुव इति तस्याः शङ्कोदयस्य मार्गरोधनं प्रति निर्बन्धः॥

**मदीयामवस्थामिति**। सङ्कल्पकल्पितां कामिनीं प्रत्यङ्कुरितस्य गुणवर्णनादिभिः क्रमेणोन्मीलितस्य रतिभावस्यावलम्बनात् तदानुकूल्येन तस्य प्रश्नवचनाद्,

१. 'वा एत्थ वम्महस्स वि अ' इति क-ग. पाठः. २. इद ख. पुस्तके नास्ति.

‡ आश्चर्येऽग निपातसमुदायो तुरानन्दमध्य एव ग्रन्थान्तरेषु पठ्यते.

णवकस्य वचनम्। तथा हि अनालक्षितलक्षा कापि रणरणिका स्पृशतीव मदीयं चेतः। (प्रकाशम्) सखे! अलमन्यथा सम्भाव्य। आक्षिप्तोऽस्मि केवलं विस्मयेन।

चेटी—(क) भट्टिणि! किं सुदं।

देवी—(ग) उज्जुआ खु तुवं। ण एआरिसा गहीरहिअओ हिअअं पआसेन्ति।

(क) भट्टिनि! किं श्रुतम्।
(ग) ऋज्वी खलु त्वम्। नैतादृशा गम्भीरहृदया हृदयं प्रकाशयन्ति।

अतिनिगूढस्य प्रकाशकरणेन अहोतुरन्वियुक्तिः। मदीयामवस्थाम् अन्तःकरणव्यापिनीम्। अनुकरोति संवदति। अनुकरणं मनोवृत्तितुल्यत्वेनावस्थाप्रकाशनम्। माणवकस्येति वराकस्याप्येतदुत्प्रयने कथं पाण्डित्यमिति विस्मयः। तथा हीति उक्तस्य स्फुटीकरणम्। एतदुक्त्यनुरूपैव मदीयावस्था। अनालक्षितलक्षा अदृष्टविषया। विषयस्यात्यन्ताभावे कार्योदयानुपपत्त्या अनालक्षितेत्युक्तम्। कापीति विषयस्यानिर्णयादनेनेदमिति वक्तुमशक्या। रणरणिका विषयाभिमुख्योन्मुखः सम्भ्रमः। मदीयं चेतः कर्म। स्पृशतीवेति विषयानिश्चयेन भ्रान्त्या व्यवहारः। तथापि सहसा न प्रकाशयामीति निरूप्य तत्प्रतीतिं निरुणद्धि—सखे! इति। कथमिदानीं तवान्यथाप्रतीतिर्जाता। अन्यथा वस्तुवृत्तादन्यप्रकारेण मा निरूपय। तर्हि सर्वथा न विकार इति चेत् तत्राह—केवलं विस्मयेन आक्षिप्तोऽस्मि, विस्मयनीयवस्तुदर्शनेन केवलं चित्तव्याक्षेपः, न त्वया शङ्कितेन हेतुनेति केवलशब्दाभिप्रायः॥

किं श्रुतमिति। मयोक्तं सत्यमेव एतद्वचनेन निश्चयः कार्य इति। तच्छङ्कां परित्यजेत्यर्थः॥

तद्वचनमाक्षिप्याह—उज्जुआ इत्यादि। ऋज्वी अवक्रहृदया लघुधीरित्यर्थः। नैतदेवमिति शेषः। तत्र हेतुः एतादृशा महान्तः अपरिच्छेद्यहृदयाः। हृदयगतं न प्रकाशयन्ति हृदयगतमाच्छाद्यान्यथा वदन्ति। अतो वचनमात्रेण न शङ्कापगम इत्यनेन प्रणयकोपस्य किञ्चिदुन्मेषः प्रकाश्यते॥

१. 'व। ए' इति ख. पाठः. २. 'आ अत्तणो अभिणव चावल ण प' इति ख. पाठः,

विदूषकः—(गन्धग्रहणमभिनीय) (क) जह दक्खिणाए[1] दिसाए बहुलामोदमंसळो मारुओ वाहइ[2], तह[3] तक्केमि तहिं तेण दिव्वजणेण होदव्वं त्ति। ता दक्खिस्सं णं[4]।

राजा—मूर्ख! प्रभावान्तर्हितमूर्तिः कथमन्विष्य दृश्यते दिव्यजनः।

विदूषकः—(ख) असम्भाविअतिरक्खरणीओ वि कदाइ चिट्ठदि त्ति मए सुदपुरुवं एव्व। ता घेत्तिस्सं[5]। (परिक्रम्यावलोक्य च साटोपम्) मुक्खेण एव्वं मए दिट्ठे सो दिव्वजणो

(क) यथा दक्षिणस्या दिशो बहुलामोदमांसलो मारुतो वाति, तथा तर्कयामि तत्र तेन दिव्यजनेन भवितव्यमिति। तद् द्रक्ष्याम्येनम्।

(ख) असम्भाविततिरस्करणीकोऽपि कदाचित् तिष्ठतीति मया श्रुतपूर्वमेव। तद

गन्धग्रहणमभिनीयेत्यादि तस्या मानस्फुटीकरणाय तदनुनयेन नायकस्य दाक्षिण्यप्रकाशनायोपस्थिताया नायिकाया एतदवस्थया शङ्कानुबन्धाय च प्रतिपाद्यते। वाहइ वाति। तेन दिव्यजनेनेति। कस्याश्चिद् दिव्ययुवतेरित्यनेन दिव्ययुवतिसान्निध्यस्योहनात् तत्सम्बन्धितया वतंसकस्य निश्चयात् तदानीं तत्पतनस्य दृष्टत्वाद् झटिति दिव्यजन इत्यूहेन सिद्धवद् व्यवहारः॥

नायकस्यापि तत्र हृदयसंवादः। प्रभावान्तर्हितमूर्तित्वादन्विष्य द्रष्टुमशक्यमित्येव वैफल्यस्फुरणम्॥

नायकोक्तौ प्रवृत्तिनिषेधस्फुरणाद् उक्तस्यापवादकथनेन प्रवृत्तियोग्यतां साधयति—असम्भाविअ इत्यादि। अन्तर्हितमूर्तित्वं दर्शनाभावे हेतुः। तस्य न नियमः, असम्भाविततिरस्करणीकोऽपि कदाचित् तिष्ठतीति मया श्रुतम्। तद् ग्रहीष्यामि ज्ञास्यामि। पाक्षिकत्वेऽपि प्रयत्नार्हत्वादित्यौत्सुक्यजननायोक्तिः। साटोपं

१. 'ओ दिसाओ व' इति ख-घ. पाठः. २. 'इ। तक्के' इति क-ग पाठः. ३. 'ता तक्के' इति ख. पाठः. ४. इद घ. पुस्तके नास्ति. ५. 'दक्खिस्सं' इति क. पाठः. ६. 'स्स एव्व अहं' इति क-ख-ग. पाठः. ७. 'व्व सो दिट्ठो दिव्व' इति क. पाठः. ८. 'एसो दिट्ठो दिव्व' इति ग. पाठः. ९. 'ठ्ठो दि' इति क. पाठः.

विवेअरासिणा तुए वि दट्ठव्वो आसी । ता सिग्घं एहि ।
(राजानमाकर्षति)

**राजा**—*(भ्रमपरिणामेनानेन भवितव्यम्) भवतु पश्यामस्तावत् (उपसृत्य दृष्ट्वा सविलक्षं जनान्तिकम्) कथमियं देवी संवृत्ता । सखे! सोऽयमीदृशो भवच्चापलपरिणामः ।

**विदूषकः**— (क) बुभुक्खातिमिरेण अन्धीकिदा मे दिट्ठी, जेण देविं दिव्वजणो त्ति सम्भावेमि ।

**देवी**— (ख) पारासरिअ! अलं सङ्काए । णाहं सा, जिस्से सो कण्णाऊरो, तं पादजुअळं वा ।

---

ग्रहीष्यामि । मूर्खेणेव मया दृष्ट स दिव्यजनो विवेकराशिना त्वयापि द्रष्टव्य आसीत् । तच्छीघ्रमेहि ।

(क) बुभुक्षातिमिरेणान्धीकृता मे दृष्टि, येन देवीं दिव्यजन इति सम्भावयामि ।

(ख) पाराशर्य[1] अल शङ्कया । नाह सा, यस्या स कर्णपूर तत् पादयुगल वा ।

---

सदर्पम् । तेन भ्रमस्य गाढस्य प्रकाश्यते । अत एवाह ---मया दृष्ट इति । देवीदर्शने भ्रमेणोक्ति । मूर्खस्यापि सत प्रकाशनसामर्थ्ये पण्डितस्यापि तदनुसरणमेव युक्त, तत् 'कथमन्विष्य दृश्यत' इति पूर्वोक्तमनादृत्येदानीं मत्प्रेरणया द्रष्टव्यो दिव्यजन ॥

भ्रमेति । अनेनैतदुद्यमेन भ्रमपरिणामेन अन्ते भ्रमरूपेण भवितव्यमित्येतच्चापलनिरूपणात् कल्प्यते । भवत्विति । अस्तु तथापि द्रक्ष्यामीति सादरण वचन, पक्षे प्रस्तुत दिव्यजनम्, अथवा भ्रमाधिष्ठान निरधिष्ठानस्य भ्रमस्यायोगात् । सर्वथा किमपि द्रष्टव्यमिति †द्रक्ष्यामीत्युक्तम् ॥

'येन देवीं दिव्यजन इति सम्भावयामी'ति तस्य स्फुटोक्तिमनुसृत्य कोपेन कान्तसाम्मुख्य परित्यज्य त प्रत्याह—**पारासरिअ** । इत्यादि । नाह सा, दिव्यजन

---

१ वाक्यमिद क घयोर्नास्ति २ 'जा प' इति क पाठ ३ 'प्वा ज' इति ख घ पाठ
४ 'स्य प इति ख पाठ ५ 'च इति ख पाठ

---

* धनूरेखान्तर्गतमिद वाक्य व्याख्यानुसारान्निवेशितम् । मूलकोशेषु तु नैव पठ्यते ।
† द्रक्ष्यामि' इत्यर्थानुवादो भवेत् । तथैव वा व्याख्यातु पाठ

विदूषकः — (जनान्तिकम्) (क) भो वअस्स! सव्वं एव्व सुदं तत्त-होदीए। तक्केमि हिज्जो आरहिअ एत्थ चिट्ठदि त्ति।

राजा — (प्रकाशम्) देवि! कथमस्थाने कुपितासि। अद्भुतर-सोऽयमत्रापराध्यति।

देवी — (ख) कुविद त्ति मं महाराओ एव्व मन्तेदि।

राजा — प्रिये! मा मैवम् —

---

(क) भो वयस्य! सर्वमेव श्रुत तत्रभवत्या। तर्कयामि ह्य आरभ्यात्र तिष्ठतीति।

(ख) कुपितेति मां महाराज एव मन्त्रयते।

---

शब्दस्तिष्ठतु, यस्यास्तत् पदयुगलं, तदिति युष्माभिराम्रेडितसौभाग्यं, यत्सम्बन्धेन पदयुगले कर्णपूरे च युष्माकमत्यादरः, सा नाहमिति तद्रहस्यं प्रकाश्याधिक्षेपगर्भ-मुक्तिः ॥

निजदाक्षिण्यानुगुणमनुसरति—देवीति। माननीयचरिता त्वं कथमस्थाने अ-प्रसङ्गे निर्निमित्तमिति यावत्। कुपितासि कोपकार्यावलम्बिनी वर्त्तसे। अस्थान-त्वमुपपादयति — अद्भुत इत्यादि। अयमद्भुतरसः इतः पूर्वमिह दिव्यजनसञ्चार-स्यादृष्टत्वाद् यदृच्छया मणिशिलातले अलक्तकाङ्कितपदबिम्बपङ्क्तिदर्शनेन सहसा नभसोऽमानुषशिल्पविचित्रकर्णपूरपातेन चाद्भुतरसः संवृत्तः, न तु त्वया निरू-पितं रसान्तरम्। स एवापराध्यति, तव कोपहेतुत्वात्। अद्भुतरसेनैवात्रायं वृत्तान्तः, नानुरागेण। तत्कोपं मा कृथा इत्यर्थः ॥

तदाच्छादनं मन्यमाना प्रौढनायिका गम्भीरमाक्षिपति — कुपितेति। मां महाराज एव मन्त्रयते अकुपिताया ममास्थानकुपितेति दौर्जन्यमापादयितुं महा-राज एव मन्त्रयते, न खलु मम कोपेन। पूर्वं कोपहेतुमुद्भाव्य पुनः कुपितेति कोपस्यानुपपत्तिकथनं क्रियते। तन्महाराजस्य प्रमुत्वमेवेति च स्फुरति ॥

एवं तस्या वचनमाकर्ण्यातिस्फुटानि कोपचिह्नानि चालक्ष्यानुन-यति — मा मैवम्। वादीरिति शेषः। एवमिति कोपमन्तर्निधाय नाहं कुपितेति किं वदसि। किं कोपेन तव जातमित्यत्राह — अकुटिलेत्यादि।

---

१. 'जा दे' इति घ. पाठः.

अकुटिलविषमाभ्यां भ्रूलताभ्यामिदानी-
मुपहितकुचकम्पैरश्रुसंरोधयत्नैः ।
प्रणयकुपितगर्भैर्मुग्धहासैर्मदीयं
चकितयसि मुधैव त्वं चकोराक्षि! चेतः । ।१६ ॥

चेटी[1]–(क) पसीददु पसीददु भट्टिणी । अणवरद्धो एव्व एत्थ भट्टा ।

देवी[2]–(ख) हला! एव्वं एदं । अहं खु णियमकिलेसिअसरीरा[4] अणीसह्मि उत्तरोत्तरकहाअं । ता अत्तणो आवासं गमिस्सं ।

(निष्क्रान्ता[5] देवी सपरिवारा)

राजा —कथं गतैव देवी ।

(क) प्रसीदतु प्रसीदतु भट्टिनी । अनपराद्ध एवात्र भर्ता ।
(ख) सखि! एवमेतत् । अहं खलु नियमक्लेशितशरीरा अनीशास्म्युत्तरोत्तरकथायाम् । तद् आत्मन आवासं गमिष्यामि ।

अकुटिलाभ्यां कोपेनोर्ध्वं प्रेरिताभ्याम् ऋजूकृताभ्याम्, अत एव विषमाभ्याम् अस्मत्पीडावहत्वाद् । अकुटिलस्य कथं विषमत्वमिति विरोधाभासः । तथाविधाभ्यां भ्रूलताभ्याम् । उपहितैः आविष्कृतैः श्वासप्रकोपकृतैः स्तनकलशयोः कम्पैः । अश्रुसंरोधे कोपोदयस्य नयनपरिपूर्णस्याश्रुणः संरोधे पतने लाघवशङ्कया निरोधे यत्नैः मुखोन्नमनाङ्गुलिप्रेरणादिभिः प्रयत्नैः । प्रणयकुपितगर्भैः कुपितं कोपः प्रणयकोपमन्तर्निदधानैः । मुग्धहासैः नवनवोन्मेषैः स्मितैः । एतैरन्यैश्च कोपकार्यैः इदानीन्तनैः पूर्वमनभ्यस्तकोपदर्शनं मदीयं चेतः त्वं चकितयासि मुधैव । नात्र कोपहेतुः स्वल्पोऽपि शङ्कनीयः । चकोराक्षीति त्वद्रूपचातुर्यदासीकृतोऽहं कथं तव कोपहेतुं सम्पादयामि । तन्मैवं कोपं कार्षीः ॥ १६ ॥

इत्युक्तेऽप्यनुनयमनङ्गीकृत्य तस्यां गतायां सविषादमाह — कथं गतैव देवी, न त्वनुनय गृहीतवतीत्येवकारेण द्योतितम् ॥

१ 'टी अ' इति घ. पाठः. २. 'दु अ' इति ग. पाठः. ३. 'वी ए' इति घ. पाठः.
४. 'रा ण पारेमि उ' इति क. पाठः. ५. 'न्ता स' इति घ. पाठः, 'न्ता सपरिवारा देवी' इति [redacted] क. ग. पाठः.

(नेपथ्ये वैतालिकौ)

**प्रथमः**—आरूढोऽयमवलग्नमम्बरस्यांशुमाली । तथा हि-

अभिलषति न भृङ्गी पौष्पमुद्वेलतप्तं
मधु मधुपसपीतिप्राप्तपीयूषभावम् ।
अपि तु तरणितापात् सङ्कुचद्भिः स्वगात्रै-
रधिसहचरपक्षच्छायमालीयतेऽसौ ॥ १७ ॥

**द्वितीयः**—न चरति मृगतृष्णावञ्चितः कृष्णसारः
शिशिरमपि तृषार्त्तः सारसं सत्यतोयम् ।
द्युमणिकिरणजालैर्नूनमत्यर्थतप्तं
परिमृशति न पौष्पं कार्मुकं पुष्पकेतुः ॥ १८ ॥

**विदूषकः**—जीवाविदह्मि वेदाळिएहिं । तुवरदु तुवरदु वअस्सो

(क) जीवितोऽस्मि वैतालिकाभ्याम् । त्वरतां त्वरतां वयस्यः स्नानार्थम् ।

एवम् एकदिनप्रयोज्यस्येतिवृत्तस्यान्ते कालविशेषप्रकाशकत्वेन वैतालिकोक्तिश्चूलिकया प्रकाश्यते । तत्र द्वयोरेकस्योक्तिः—आरूढ इत्यादि । अवलग्नं मध्यम् । मध्याह्नः प्राप्त इत्यर्थः । कार्येण तदुपपादयति—अभिलषतीत्यादि । भृङ्गी पौष्पं मधु नाभिलषति । किमहृद्यतया, नेत्याह—मधुपसपीतिप्राप्तपीयूषभावं मधुपेन निजकान्तेन सपीतिः सहपानं तेन प्राप्तामृतभावम् अपीत्यर्थसिद्धम् । तत्र हेतुमाह—उद्वेलतप्तमिति । भृशं तप्तम् उष्णं मध्याह्नातपेनेति सिद्धम् । अपि तु इतोऽन्यदपि कालकार्यत्वेन सैवानुसरति । असौ भृङ्गी तरणितापात् सङ्कुचद्भिः स्वावयवैः सह सहचरस्य पक्षच्छायायाम् आलीयते श्लिष्यति ॥ १७ ॥

अन्य आह—कृष्णसारः सारसं सत्यतोयं न चरति । सारसं सरःसम्बन्धि । मिथ्याजलमपेक्ष्य सत्यशब्दः । शिशिरमपि तृषार्तोऽपीत्युभयत्रापिशब्दः । तत्र हेतुः मृगतृष्णावाधितः तत्रैव भ्रमन् । पुष्पकेतुः पौष्पं कार्मुकं न परिमृशति आरोपणाय न परिमार्ष्टि । द्युमणिकिरणजालैरत्यर्थतप्तं नूनमित्युपपत्त्या कल्पना । इति कार्यवर्णनेन कालः प्रकाशितः ॥ १८ ॥

तत एवाह—त्वरतां वयस्यः स्नानार्थं मध्यन्दिनस्य प्राप्तत्वात् । अन्यथ

ह्णाणत्थं। अण्णं च कल्लम्मि मिअआव्वावारो। तत्थ अ-
डवीअं दुल्लहं संपण्णं असणं । ता इट्ठपुट्ठं अह्लिदव्वं।

राजा—न केवलं भवदभिमतसिद्धिरेव। देवी चानुनेतव्या। त-
दभ्यन्तरमेव प्रविशावः ।

(इति निष्क्रान्ता. सर्वे)

इति प्रथमोऽङ्कः ।



---

श्च काल्ये मृगयाव्यापारः । तत्राटव्या दुर्लभं सम्पन्नमशनम् । तदिष्ट-
पुष्टमशितव्यम् ।

---

कर्तव्यान्तरमुद्बोधयति । काल्ये मृगयाव्यापारः श्वः प्रभाते। अनेनानन्तराङ्कोपक्रमं वस्तु सूचितम् । सम्पन्न मृष्टम् । इष्टपुष्टम् इष्टं हृद्यं पुष्टं पूर्णम् ॥

न केवलमित्यादि । भवदभिमतसिद्धिरिति । मृष्टान्नादिलाभः । एतदेव न कर्तव्यं, देवी चानुनेतव्या । तदपि कर्तव्यान्तरमस्ति। इति अङ्कान्ते सर्वे निष्क्रान्ता. ॥

इति प्रथमोऽङ्कः ।

---

१, 'इट्ठपु' इति क ख ग पाठ.

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति रम्भा मेनका च)

**रम्भा** — (क) सहि! महिन्दसासणन्तरवावुदा एत्तिअं कालं अणभिण्णह्मि एत्थगअस्स वुत्तन्तस्स। ता कहेहि, को दे मुहवेवण्णस्स हेदू। कहिं वा पिअसही तवदी।

**मेनका** — (ख) सहि! पुव्वं कदाइ पिअसहिं तवदिं उच्छङ्गे करिअ उपविट्ठेण को इमाए अणुरूवो वरो त्ति णारदमहेसिणा पय्यणुउत्तेण भअवदा भाणुमालिणा भणिअं — को

---

(क) सखि! महेन्द्रशासनान्तरव्यापृतैतावन्तं कालमनभिज्ञास्म्यत्रगतस्य वृत्तान्तस्य। तत् कथय, कस्ते मुखवैवर्ण्यस्य हेतुः। कुत्र वा प्रियसखी तपती।

(ख) सखि! पूर्वं कदाचित् प्रियसखीं तपतीमुत्सङ्गे कृत्वोपविष्टेन कोऽस्या अनुरूपो वर इति नारदमहर्षिणा पर्यनुयुक्तेन भगवता भानुमालिना भणितं —

---

अथेतरेतरालम्बनत्वेन नायकयो रतेः परिपोषे प्रतिपाद्ये नायिकाश्रयं प्रवेशकमुखेन सूचयितुं तत्सखीप्रवेशः । तत्र सहसा सखीमुखवैवर्ण्यदर्शनात् प्रथमं तद्धेतुप्रश्नः । पश्चात् स्वप्नेऽप्यजातविश्लेषायाः प्रियसख्या अदर्शनात् तद्विषयः प्रश्न उभयशेषतया कृतः ॥

मेनकया पुनर्दुःखभारमसहमानया तत्संविभागयोग्यामेनां दृष्ट्वा सखीति सम्बोधनेनास्मानुपेक्ष्य स्वकार्यप्रवृत्तायाश्चिरादागतायास्तव तटस्थवत् प्रश्नो न शोभते । तथापि त्वामहं न वञ्चयामीति सपीठिकाबन्धमुत्तरमारभ्यते — पुव्वमित्यादि । पूर्वमित्यनेन कालदैर्घ्यं, कदाचिदित्यनेनानिर्धारितदिवसविशेषत्वं, वक्ष्यमाणस्यास्मदनुभवस्य चिरानुवृत्तत्वं च प्रकाश्यते । उत्सङ्गे कृत्वेति । मया समीपवर्तिन्या तत् सर्वं प्रत्यक्षीकृतमिति भावः । भानुमालिना पर्यनुयुक्तेन नारदमहर्षिणा भणितमित्यन्वयः । स्वयमिदमपि प्रामाणिकगुणाश्रितेषु महान्तः पृच्छन्ति । तटस्थस्यैव गुणदोषविचारे चातुर्यं परपरीक्षणे विशेषेण परापेक्षेति च नारदस्यैव पर्यनुयोजनम् । कोऽस्या इत्यनेन न विचारक्लेशविषयोऽयमर्थ इति तस्य गुणसा-

---

१. 'उ' इति ख. पाठः. २. 'इ' इति ख. पाठः. ३. 'न हि' इति मुद्रितेषु पाठः.

हि अज्ज तेल्लोक्के राएसिं सवरणं मोत्तूण इमाए अणुरूवो अण्णो त्ति ।

**रम्भा**—(क) मए वि एव्वं सुदपुव्वं एव्व । तदो तदो ।

**मेनका**—(ख) तदो आरहिअ सा तग्गआहिळासा वि ळज्जाए अप्पआसेन्ती वट्टमाणा एअँदा मए सह तवणवणं पत्थिओ । अन्तरा तस्स राएसिणो राअहाणि णाअर्पुरं हेट्ठदो दट्ठूण ठिआ ।

को ह्यद्य त्रैलोक्ये राजर्षि सवरणं मुक्त्वास्या अनुरूपोऽन्य इति ।

(क) मयाप्येव श्रुतपूर्वमेव । ततस्ततः ।

(ख) तत आरभ्य सा तद्गताभिलाषापि लज्जयाप्रकाशयन्ती वर्तमानैकदा मया सह तपनवनं प्रस्थिता । अन्तरा तस्य राजर्षे राजधानीं नागपुरम् अधो दृष्ट्वा स्थिता ।

ममच ध्वन्यते । त्रैलोक्य इति । त्रिलोकीतिलकत्वेन मानुषत्वेऽप्ययमेव माह्य इति मरोचना ॥

एव तस्या प्रश्नावसर दत्वा विश्रान्तवाक्याया तस्या रम्भा सिद्धमनूद्य शेषश्रवणौत्सुक्येन पृच्छति—मयापीत्यादि । स्वामिपारतन्त्र्येऽपि युष्मद्वृत्तान्ते दत्तमनसा लोकत इयन्मात्र श्रुत, शेषश्रवणे महदौत्सुक्य, तत् कथय । ततस्तत इति वीप्सया श्रवणौत्सुक्य ध्वन्यते । किं तया वरगुणश्रवणे निजयौवनोचित किञ्चिदाचरितम्, उत मुग्धया किमपि नाङ्गीकृत, त्वया किं व्यवसितमित्यादिजिज्ञासया प्रश्न ॥

तदो आरहिअ नारदवचनादारभ्य तच्छ्रवणादारभ्येत्यर्थ । लज्जया वरनारीपरमालङ्कारभूतया । अप्रकाशयन्ती ममापीति शेष । वर्तमानेति दिवानिश तथा वर्तनस्य दुष्करत्व प्रकाश्यते । एकदेति खेदेन दूरतया च दिवसविशेषो नाध्यवसित । स्थितेत्यन्तमेकवाक्यम् । अस्मत्प्रयत्न विना गूढभेदन जातमिति दर्शयति—तस्येति । नारदमुखाच्छ्रुतस्य निरन्तरानुरागविषयस्य । अन्तरेति मध्येमार्गम् । प्रकृत गमन हृदयगूहन च ममतानुसन्धानवशाद् विस्मृत्येत्यर्थ ॥

१ 'मि' इति ख घ पाठ  २ 'क' इति घ पाठ  ३ 'दा' इति क पाठ
४ 'उ' इति क-ख-ग पाठ

रम्भा—(क) तदो तदो।

मेनका—(ख) तदो मए उण से भावं जाणिअ कहिदं[1]—सहि! परिस्सन्ता विअ ळक्खीअसि। एदं खु भाईरहीतीरगअं कत्तिके[2]आवासपरिसरुज्जोणं। एत्थ विस्सामिअ गच्छह्म त्ति।

रम्भा—(सस्मितम्) (ग) सेविअं तुए सहीहिअअं। तदो तदो।

मेनका—(घ) तदो जाव हरिमणिसिळादळे ओदरह्म, दाव तहिं एव्व सवअस्सो राएसी आअदो।

(क) ततस्ततः।

(ख) ततो मया पुनरस्या भावं ज्ञात्वा कथितं—सखि! परिश्रान्तेव लक्ष्यते। एतत् खलु भागीरथीतीरगतं कार्त्तिकेयावासपरिसरोद्यानम्। अत्र विश्रम्य गच्छाव इति।

(ग) सेवित त्वया सखीहृदयम्। ततस्ततः।

(घ) ततो यावद्धरिमणिशिलातलेऽवतरावः, तावत्तत्रैव सवयस्यो राजर्षिरागतः।

तदो तदो इति। दिवानिशं त्वया सह वर्त्तमानया मुग्धया वाङ्मात्रेण गूहनमेव कर्तुं शक्यं, चतुरया त्वया हृदयरहस्यं ज्ञातमेव। ततो गूढभेदप्रसङ्गे किं त्वया स एव प्रकटितः, उताजानत्येव गमनप्रेरणं कृतम्, अथवा तद्वाञ्छा-गूहनयोरनुगुणं किमप्युपन्यस्तमिति जिज्ञासया प्रश्नः॥

भावं जाणिअ अभिप्रायं ज्ञात्वा, गमनादपि तदीयनगरालोकनादिषु प्रीतिः, सा लज्जया निगूह्यत इति ज्ञात्वा अवलोकनकौतुकादिभिरिति शेषः। सखीति नित्याभ्यस्ते पथ्यनतिदीर्घे एवमलसगमनां त्वां कथं नयामीति वात्सल्येन सम्बोधनम्। परिश्रान्तेव लक्ष्यसे, न त्वदुक्त्या, गमनमान्द्यादिना मया त्वत्परिश्रमोऽनुमीयते। अध्वगमनमेवात्र हेतुतया प्रकाशते। विश्रम एवात्र चिकित्सा। एतदिति परिश्रमस्य विश्रमस्थलस्य च यौगपद्यं दैवादापतितम्। भागीरथीतीरगतमिति पावनत्वशैत्यादिना श्रमापनयनयोग्यतां, कार्त्तिकेयेत्यादिना देवायतनमान्निध्येनाशङ्कनीयगमनतां चारामस्य प्रकाशयति। तदा(?)थाविपमस्य

1. 'अ' इति ख-ग पाठः. 2. 'ए' इति क-ख-ग. पाठः. 3. 'य्या' इति ख-ग. पाठः.

रम्भा—(क) तदो तदो ।

मेनका—(ख) तदो तदाणिं अणङ्गबाणेहिं ळज्जाए अ दूमिआ तस्स अग्गदो ठादुं असमत्था मए सह तिरक्खरणीतिरोहिआ[1] उप्पडिआ णहअलं ।

रम्भा—(ग) तदो तदो ।

मेनका—(घ) तदो अत्तणो पदवीअं सिणिद्धदिट्ठिं तं पेक्खिअ

(क) ततस्ततः ।

(ख) ततस्तदानीमनङ्गबाणैर्लज्जया च दूना तस्याग्रतः स्थातुमसमर्था मया सह तिरस्करणीतिरोहितोत्पतिता नभस्तलम् ।

(ग) ततस्ततः ।

(घ) तत आत्मनः पदव्यां स्निग्धदृष्टिं त दृष्ट्वा द्विगुणितमनोभवायल्लकायास्तस्या

नागपुरस्यात्यन्तगूहनेन हृदयानुसारः कृतः । विश्रममनूद्य गमनविधिना गमनशेष एव विश्रमः । किमन्यदस्माकमत्र प्रयोजनमिति मया रहस्यगोपनानुगुणमुक्तम् ॥

ततस्तया त्वद्वचनमच्छलमङ्गीकृत्य निजाभिरुचिसदृशं किं कृतम्, उत रहस्यभेदनमाशङ्कय गमनमेवाङ्गीकृतमिति प्रश्नः ॥

तत्र "क्रियाकेवलमुत्तरम्" इत्युक्तदिशा मया सहावतरणमेगोचरतयाङ्गीकृतम् । यावत्तावदिति यौगपद्येन, विधिना दत्तहस्तोऽयमारम्भ इति द्योत्यते । सवयस्य इति वधूकथावकाशः प्रकाशितः ॥

ततो युवाभ्यां किं तथैव स्थितम्, उत तत्रव तिरस्करण्या स्थितम्, अथवा गतं, तादृशस्य दर्शने को विशेष इत्यादिप्रश्नः ॥

ततस्तदानीमिति । चिराभिलषितस्य समीपदर्शन इत्यर्थः । अनङ्गबाणैर्लज्जया च पीड्यमाना तिरस्करणीतिरोहिता । नरकर्तृकादर्शनात् प्रागेवेति शेषः । नमस्तलस्योत्पतनकर्मतया प्रवृत्तिशेषं गमनेऽनिच्छा च ध्वनयति ॥

एवमुक्ते किं नभस्तले स्थिताभ्यां युवाभ्या प्रकृतशेष किञ्चिल्लब्धम्, उत तूष्णीं स्थितमेव, अस्मदपेक्षां प्रति तन्मतिः कीदृशीति प्रश्नः ॥

१ 'उ' इति क-ख-ग. पाठः. २ 'दा' इति घ. पाठः

विउणिअमणोभवोअल्लआए ताए दसं ओलोइअ मए आचक्खिअं—सहि! दे कवोलमूलुल्लसिआणं सेअकणिआमोत्तिआणं सोहं तिरक्खरइ कण्णेउरो त्ति।

**रम्भा—** (क) तदो तदो।

**मेनका—** (ख) तदो तस्स राएसिणो रूवाणुरूवं बुद्धिकोसळं परिक्खिउं तिस्से अवत्थापत्थावणत्थं च सो कण्णेउरो आच्छिन्दिअ लिहिअ गाहापदज्जक्खराइ पमादेण विअ मए तस्स पुरदो पक्खित्तो।

---

दशामवलोक्य मयाख्यातं—सखि! ते कपोलमूलोल्लसितानां स्वेदकणिकामौक्तिकानां शोभां तिरस्करोति कर्णपूर इति।

(क) ततस्ततः।

(ख) ततस्तस्य राजर्षे रूपानुरूपं बुद्धिकौशलं परीक्षितुं तस्या अवस्थाप्रस्तावनार्थं च स कर्णपूर आच्छिद्य लिखित्वा गाथापदाद्यक्षराणि प्रमादेनेव मया तस्य पुरतः प्रक्षिप्तः।

---

आत्मनः पद्भ्यामिति। स्निग्धदृष्टिं स्नेहप्ररोहप्रकाशकदृष्टिपातं तमवलोक्य दिष्ट्यास्य महापुरुषस्यापि स्पृहालेश इव लक्ष्यत इति द्विगुणितमनोभवायल्लकायाः। 'स्यादायल्लकमाध्यानमुत्कण्ठोत्कलिका रतिरि'ति रतिपरिपोष एवायल्लकम्। दशामिति। निष्पन्दमन्दसुन्दरदृष्टिपातस्वेदरोमाञ्चवेपथुप्रभृतिभिरनुभावैरतिस्फुटाङ्गेयवैवश्यामवस्थामवलोक्य मया कामपि कामतन्त्रप्रक्रियां प्रकाशयितुं प्रशंसया साध्यमाच्छाद्य किमप्युपन्यस्तं—सखीत्यादि। स्वेदकणमालिकामौक्तिकानां कपोलतलदर्पणभ्रान्तप्रत्युप्तस्वेदमुक्तादामजनितां कान्तिं कर्णपूरः स्वविग्रहेण प्रसरेणेव तिरस्करोति। तदिदमपनयामीति शेषः॥

एवमुक्ते किं तव समीहितमित्यपृष्ट्वा ततस्तत इति प्रश्नः शेषकथनेनैव तदभिप्रायः सिध्यतीति बुद्ध्या॥

तद्बुद्धिमनुसृत्योत्तरमाह—तत इत्यादि। तस्य राजर्षेः रूपानुरूपं बुद्धि-

---

१. 'द' इति ग. पाठः. २. 'कारहाए' इति घ. पाठः. ३. 'आच्छिविअ' इति क-ख-ग. पाठः. ४. 'द' इति घ. पाठः. ५ 'अ बाहिं' इति क. पाठः. ६. 'दाइअक्खर' इति क-ग. पाठः.

**रम्भा**—(क) चउरं आअरिअं । तदो तदो ।

**मेनका**—(ख) तदो तं गाहं तेण पूरिअक्खरं सुणिअ रोसपरिप्फुरिओहरं ताए भणिदं—अविणीदे ! कीस तुए अहं लहुईकिदह्मि ।

**रम्भा**—(ग) तदो तदो ।

---

(क) चतुरमाचरितम् । ततस्ततः ।

(ख) ततस्तां गाथां तेन पूरिताक्षरां श्रुत्वा रोषपरिस्फुरिताधरं तया भणितम्—अविनीते ! कस्मात् त्वयाहं लघूकृतेति ।

(ग) ततस्ततः ।

---

कौशलमिति । केचिद् रूपवन्तोऽपि शेमुषीविलासहीनतयालेख्यसब्रह्मचारिणो दृश्यन्ते । अस्य तु यथाश्रुतमेव रूपम् । तदनुरूपं बुद्धिकौशलमपि परीक्षितुं, त्वद्विषय इयमेवमवस्थेत्यन्यापदेशेन सूचयितुं च स कर्णपूर आच्छिद्य बलादुद्धृत्य गाथां निर्माय तत्पद्याद्यक्षराणि लिखित्वा प्रमादेनेव प्रमादं भावयित्वा तस्य पुरः प्रक्षिप्तः ॥

तां गाथामिति । पूरिताक्षरां दर्शितपदाद्यक्षरानुगुणवर्णविन्यासक्रमनिर्मितस्वरूपाम् । श्रुत्वेति । 'किं कुणइ' (अङ्क. १. श्लो. १९) इत्यादितटस्थवृत्त्या गर्भितविशेषेण सामान्येनावस्थाप्रकाशने तया झटित्यभिप्रायवेदिन्या मनोभववैभवविस्मृतगूहननिर्बन्धया मद्विषयरोषपरिस्फुरिताधरं भणितम्, अविनीते ! अशिक्षिते ! उपलब्धकारिणि ! कस्मात् त्वया सततमस्मद्गौरवरक्षणप्रवृत्तयेदानीमतिगम्भीरेऽस्मिन् पुरुषवर इममर्थमेवं प्रकाशयन्त्याहं लघूकृता इति । अत्र नैतदेवमिति वा, कथं त्वया ज्ञातमिति वा, नायं प्रेमयोग्य इति वा नोक्तम् । लघूकरणमेवानिष्टं, यदि गौरवाविरोधेन साध्यनिर्वाहस्तर्हि नानिष्टमिति ध्वनितम् ॥

तदाकर्ण्य रम्भा किमनिष्टशङ्कया त्वया तदनुसरणं कृतम्, उत प्रमादमदनवद् अन्यथा कपटमुद्भावितं, किमनेन दिगम्बरस्य नग्न इति परिहासे कोपेनेति प्रियसखीरोषमनादृत्य रहस्यभेदनं कृतमिति पृच्छति—ततस्तत इति ॥

---

१. 'म्भा सहि ! च' इति ग. पाठः. २. 'दो तेण पूरिदाइ अक्खराइ सु' इति घ. पाठः.
३. 'अं सु' इति क. पाठः. ४. 'दाहराए ता' इति घ. पाठः.

मेनका—(क) तदो तस्सिं अ पत्थावे सुणिअ सव्ववुत्तंतं कुविदं तस्स देविं दक्खिअ परिहसन्तीए मए भणिदं—सहि! सूएदि दे दिट्ठी इमाअं सवत्तीमच्छरं त्ति।

रम्भा—(ख) तदो तदो।

मेनका—(ग) तदो कुविदा मं उत्तरीअं ओलम्बन्तिं अवहुणिअ पत्थिआ।

रम्भा—(घ) णिब्भिण्णं खु हिअअरहस्सं कोवावेइ कण्णआजणं। तदो तदो।

(क) ततस्तस्मिंश्च प्रस्तावे श्रुत्वा सर्ववृत्तान्तं कुपितां तस्य देवीं दृष्ट्वा परिहसन्त्या मया भणितं—सखि! सूचयति ते दृष्टिरस्यां सपत्नीमत्सरमिति।

(ख) ततस्ततः।

(ग) ततः कुपिता मामुत्तरीयमवलम्बमानामवधूय प्रस्थिता।

(घ) निर्भिन्नं खलु हृदयरहस्यं कोपयति कन्यकाजनम्। ततस्ततः।

तस्मिन् प्रस्तावे प्रारम्भे वृत्तान्तं पद्यतंसकद्वारा परस्त्रीसौभाग्यवर्णनरूपं श्रुत्वा कुपितां तस्य देवीं दृष्ट्वा सख्यै दर्शयित्वा च परिहसन्त्या भणितं किमनेन दिवाकरहस्ताच्छादनतुल्येन गूहनप्रयासेन, त्वन्निश्चयानुगुणं यद्यवस्थासूचनं मया कृतं, किमत्र कोपेन, तवैव गूहननिर्बन्धः, त्वद्दृष्टिस्तपस्विनी मद्वाक्यमनुसरतीत्यादिपरिहासं प्रकटयन्त्या भणितम्। सखि! वस्तुवृत्तं जानामि, अस्यां पुरो वर्तमानायां राजभार्यायां सपत्नीमात्सर्यं ते दृष्टिः सूचयति किमियं मत्प्रियतमप्रेमसंविभागार्थिनी समागतेत्यादिस्त्वदङ्गीकारं प्रकटयति॥

एवं त्वयोक्ते किं तया पूर्ववत् कोपः कृतः, उत त्वदनुसरणं कृतमिति प्रश्नः॥

तदुत्तरमाह—ततः कुपितेति। एवं परिहसन्त्या त्वया सह न तिष्ठामीति प्रस्थिता। अवधूयेत्यनेनानुनयापरिग्रहः प्रकाशितः॥

निर्भिन्नमित्यनेन वयोवस्थौचित्येन तत्कोपस्य स्वतः प्रवृत्तिमनूद्य शेषं पृच्छति—ततस्तत इति॥

**मेनका**— (क) तदप्पहुदि वअणाणं पि अगोअरं तिस्से अणङ्गात-ङ्कं णिसामअन्ती एआरिसह्मि संवुत्ता । अज्ज उण पच्चूसे एव्व मं पि अणालविअ तवणवणं गआ । सुदं च मए सो वि राएसी मिअआप्पसङ्गेण पत्तो तं उद्देसं त्ति । ता तहिं एव्व गदुअ पिअसहिं आसासेह्म ।

**रम्भा**— (ख) एव्वं करह्म ।

(निष्क्रान्ते)

## प्रवेशकः ।

---

(क) तदाप्रभृति वचनानामप्यगोचरं तस्या अनङ्गातङ्कं निशामयन्त्येतादृश्यस्मि संवृत्ता । अद्य पुनः प्रत्यूष एव मामप्यनालप्य तपनवनं गता । श्रुतं च मया सोऽपि राजर्षिर्मृगयाप्रसङ्गेन प्राप्तस्तमुद्देशमिति । तत् तत्रैव गत्वा प्रियसखी-माश्वासयावः ।

(ख) एवं कुर्वः ।

---

तदाप्रभृतीति प्रथमप्रश्नोत्तरोपसहारः । वचनानामप्यगोचरम् इदमीदृश-मिति वक्तुमशक्यं मदनव्यसनम् । निशामयन्तीति शिशिरोपचारादीनामपि वैकल्यात् केवलं पश्यन्ती एतादृशी जातास्मि । एवं प्रथमप्रश्नस्योत्तरं तत्प्रसङ्गादतीतवृत्ता-न्तं च निवेद्य प्रियसखी केत्यस्योत्तरमाह — अद्य पुनरित्यादिना । पूर्वं न कदा-चिदेवं दृष्टमिति विषादः । तपनवनमित्युपपत्त्या कल्पनम् । तत्राप्यस्मत्समीहितस्य कोऽपि विशेषः सेत्स्यतीत्याह — श्रुतं चेति । सोऽपीति । न केवलमियम् । मृगया-प्रसङ्गेन अन्यार्थमुद्यतो दैवात् तं देशमागत इत्यानुकूल्यं द्योतितम् । तदिति आ-श्वासनोपायस्य सिद्धत्वादित्यर्थः । अनेन प्रवेशकेन नायिकारब्धस्यानुरागस्य सूचनं, नायिका तपनवनं गता नायकश्च तं देशं प्राप्त इति द्वितीयाङ्के प्रयोक्ष्य-माणस्य सरसस्य वस्तुनः सामाजिकमनोऽनुसन्धानार्थं सङ्घटनं च सखीसल्लाप-रूपेण सम्पादितम् । इह शृङ्गाररसस्याङ्गित्वेन प्रथमं नायकयोरयोगविप्रलम्भे वर्ण-

---

१. 'झामयं णि' इति क. पाठः. २. 'तस्सिं ए' इति क. पाठः. ३. 'सअह्म' इति क. पाठः. ४. 'म्भा सहि! ए' इति क-ग. पाठः.

(ततः प्रविशति हयाधिरूढो राजा)[1]

राजा — (सवितर्कम्) अहोतुखलु भयातिरेको नाम तपोवनसधर्मा सत्त्वानां शाश्वतमपि विरोधं शमयति । तथा हि प्रवृत्ते मम मृगयाव्यतिकरे —

क्रोडं क्रोडवधूरुपाश्रितवती शार्दूलिकानां भया-
न्निरशङ्कं शरभावलीषु महिषाः संसर्गमातन्वते ।

नीये नायिकायाः प्रथमं श्रवणेनाङ्कुरितस्य पश्चान्मरतकमणिशिलास्थितनायकसाक्षात्कारेण परिपोषं गतस्य चिन्तास्मृत्याद्यवस्थान्तरे दत्तपदस्य व्याप्तेः रसवत्तया दृश्यत्वेऽपि नायिकाया दिव्यत्वाद् दिव्यभूमिषु सञ्चारयोग्यतया राजधानीवृत्तान्तरूपेण प्रवेशके सखीसल्लॉपेन सूचनं कृतं, नायकस्य तु स्वप्नश्लोकव्याख्याने किञ्चित् सूचितस्य सुनिमित्तेन स्पृहाविषयीकृतस्य पदवतंसकदर्शनेन तद्गुणोद्बोधणेन चालम्बनैकदेशपरिग्रहणद्वाराङ्कुरितस्य गाथाक्षरपूरणेन किञ्चिदुच्छूनस्याभिलापस्य साक्षाद्दर्शनेन स्थायिरूपत्वं स्थिरीकर्तुं द्वितीयाङ्कोपक्रमः । सङ्कल्प एव सर्वत्र रतेः परिपोषकः । स श्रवणादिनैव रसोत्थापको दृश्यते । अन्यथा सङ्कल्पाभावे दर्शनेऽपि रतेर्नोदयः । अतः सङ्कल्पपरम्परामवलम्बमानो वतंसकमङ्गुतव्याजेन वयस्ये सङ्क्रमय्य प्रासङ्गिक मृगयाव्यापारं समाप्य तुरगवेगेन हिमवदधित्यकां प्राप्तो मृगाणां भयप्रकर्षं निरूप्य सविस्मयमाह — अहोतुखल्वित्यादि । भयातिरेकः भयस्य भावान्तरतिरोधायकोऽतिशयः । तपोवन इत्यत्र धर्मं विदिनाष्टि—सत्त्वानां वक्ष्यमाणानाम् । शाश्वतमपि जन्मसिद्धमपि । विरोधं वैरम् । शमयति निरस्यति । अत्र भयातिरेकस्य कर्तृत्वम् । अनुक्तसिद्धमपि शमस्य भयशामकत्वं प्रसिद्धं मुनीनामहिंसारूपस्य शमस्य फलत्वेन प्रतिपादितत्वाद् "अहिंसायाः फलं सस्य सन्निधौ वैरवर्जनमि"ति । उक्तार्थस्य व्याप्तिं स्वावस्थया प्रतिपादयति— तथा हीत्यादि । मम मृगयाव्यतिकरे मृगयासम्मर्दे प्रवृत्ते । तथा हि, दृष्टमिति शेषः । तं प्रकारमाह—क्रोडमिति । अत्र क्रोडवधूशार्दूलिकादीनां परस्परविरोधवध्यघातकभावादीनां निरासेन परस्परसम्मेलनं महाणभयातिरेकेण घटितमिति भयातिरेक-

१. 'याधिरू' इति क-रा-ग. पाठः.

भ्राम्यद्दृष्टिरशिश्रियद् वृककुलं भीता कुरङ्गाङ्गना
मद्बाणैः कलुषीकृतः स्म कलभः सैंहीं गुहां गाहते॥ १॥

सोऽहमनेन मृगयाप्रसङ्गेनातिदवीयसीम् अम्बिकापितुरचलस्याधित्यकाभुवमानीतोऽस्मि। अन्यच्च। तस्मात् पदवतंसकदर्शनादारभ्य मां प्रति—

आदत्ते धनुरभिमार्ष्टि पट्पदज्यां
सन्धातुं प्रगुणयति प्रसूनबाणान्।

---

स्याश्चर्यकरत्वम्। क्रोडं भुजान्तरम्। भयाद् मद्बाणकृतात्। भयादिति सर्वशेषः। भीता इति विशेषणत्वेन कथनमन्येभ्यः कुरङ्गाङ्गनाया भीतिप्रकर्षकथनाय। अत एव भ्राम्यद्दृष्टिरिति भयानुभावकथनम्। अशिश्रियादिति पाठः॥ १॥ ‥वं मृगयावस्थां प्रतिपाद्य आत्मनो दूरस्थतां निरूप्याह—सोऽहमित्यादि। ‥ः आरामे वृत्तमन्तर्धारयन्नहम्। निजाधिकारौचित्येनोपक्रान्तेनानेन। मृगया‥सङ्गेन मृगयानिर्बन्धेन। अम्बिकापितुरचलस्याधित्यकाभुवम् ऊर्ध्वभूमिम्। आनी‥ोऽस्मि प्रापितोऽस्मि। अम्बिकापितुरित्यनेन दिव्यभूमित्वं, प्राप्तेः प्रीतिकरत्वञ्च ‥द्योत्यते। अतिदवीयसीं स्वराष्ट्रादतितरां दूरवर्त्तिनीम्। अन्यच्चेति। एवं प्रस‥ानुप्रसङ्गेन दिव्यभूमिमागतः। अतश्चित्तस्य व्याक्षेपराहित्येऽपि व्याक्षेपकरमवस्थान्तरं वर्त्तते। तत् प्रतिपादयति—आदत्त इत्यादि। मनसिशयः तस्मात् पदवतंसकदर्शनादारभ्य मां प्रत्येवमाचरति। मनसिशय इत्यनेन छिद्रान्वेषणसौकर्यमेतदध्यवसायश्च प्रकाश्यते। तस्माद् अविस्मार्यसंस्कारमनुभूताद्। इदमेव मनसिशयप्रवृत्तेर्निमित्तं, न तु रूपचातुर्यदर्शनादि। पदवतंसकयोश्चातुर्येण श्रमजलसम्मेलनेन चावस्थाविशिष्टस्य रमणीरूपस्य सङ्कल्पकल्पित लोकोत्तरं रूप चित्ते वर्त्तत इति पदवतंसकदर्शनादारभ्येत्यनेन प्रकाशितम्। मां प्रतीति। ममेदृशीमवस्थामालक्ष्य विषयमप्रकाश्यापि मन्मनः प्रहर्त्तुमस्यावसाय इति। त प्रतिपादयति—आदत्त इत्यादि। धन्विनां विपक्षताडने शरप्रयोगात् पूर्वं व्यापारमनुसरति। तत्र धनुरादानं प्रथमं करोति। पुनः पट्पदरूपिणीं ज्यां दार्ढ्यपरीक्षार्थमभिमार्ष्टि। पुनः सन्धानयोग्यान् बाणान् ऋजूकरोति। इयन्मात्रेणैव भीरोर्यथा प्रहारोद्यमदर्शनेनैव व्यामोहो

उत्कण्ठामरतिकरीं मनस्यलक्षा-
साधत्ते मनसिशयोऽस्य केयमाशा ॥ २ ॥

अपि च गृहीतकर्णपूरः पाराशर्यस्तुरङ्गमजवेन दूरीकृतः। तत् केनेदानीमुत्कलिकां विनोदयामि ।

(नेपथ्ये)

(क) अब्बह्मण्णं अब्बह्मण्णं।

राजा — (कर्णं दत्वा) अये पाराशर्यस्येव स्वरः ।

(ततः प्रविशति त्रस्तरूपो विदूषकः)

विदूषकः— (ख) अब्बह्मण्णमब्बह्मण्णं (भय निरूप्य) ईदिसे वि भअट्ठाणे दुग्गामन्तेण वि अणहिट्ठिअजीहस्स रक्खासाहणं बह्मसुत्तं अह्माणं दण्डअट्ठं चै णट्ठं ।

---

(क) अब्रह्मण्यमब्रह्मण्यम् ।

(ख) अब्रह्मण्यमब्रह्मण्यम् । ईदृशेऽपि भयस्थाने दुर्गामन्त्रेणाप्यनधिष्ठितजिह्वस्य रक्षासाधनं ब्रह्मसूत्रमस्माकं दण्डकाष्ठं च नष्टम् ।

---

भवति, तथा मम मनसि प्रहारं विनोत्कण्ठां रणरणिकां करोति । अरतिकरीम् । रतिः प्रीतिः, "सर्वेन्द्रियाणामानन्दो रतिरित्यभिधीयते" इति, तत्करणे अननुकूलां विषयस्याप्रकाशितत्वात् । अत उक्तम् अलक्षामिति अदृष्टलक्षां रणरणिकाविषयस्य पदयतंसकमात्रावलम्बनत्वादलक्षामित्युक्तम् । अस्यामवस्थायामप्येवं वैवश्यजननाद् अस्येयमाशा विषयादर्शनेऽप्यनुबन्धिनीच्छा कीदृशीति (न) निरूप्यते । अस्य दुर्विज्ञेयस्वभावत्वाद् विषयं प्रकाश्य शरान्मोक्तुं वैतावन्मात्रेणास्मान् पीडयितुं वेति न ज्ञायते । मनसिशय इत्यनेन निजाश्रयमपि वेद्धुं सन्नद्धस्य कदाचिदप्यरहितस्य सङ्कल्पजीवितस्येति प्रवृत्तिवैषम्यं व्यज्यते ॥ २ ॥ एवमात्मनश्चित्तवैवश्यं निरूप्य तत्प्रशमनोपायमलभमान आह — गृहीतकर्णपूर इत्यादि । उभयमपि दूरीभावेन खेदजनकं गृहीतकर्णपूर इति पाराशर्य इति च । तदिदानीमुक्तहेतुकाम् उत्कलिकां रणरणिकां केन शमयामि'॥

---

१. 'स्पयन्' इति क. पाठः. २. 'त्त पहरण च द' इति क-ख-ग. पाठः. ३. इदं क-ख ग-पुस्तकेषु नास्ति.

राजा— वयस्य ! मा भैषीः । किमेतत् ।

विदूषकः — (राजानमवलम्ब्य सबाष्पगद्गदम्) (क) हा वअस्स ! अवहिदो मं रक्ख ।

राजा— अतिमात्रमाविग्नोऽसि, किं ते भयकारणम् ।

विदूषकः—(दिशो विलोक्य सहासम्) (ख) तुज्झ सण्णिहिमेत्तेण पणट्ठो मे सत्तुवग्गो।

राजा—कथं शत्रुवर्ग इति ।

विदूषकः— (ग) मए खु एत्तिअं वेळं इन्दइदा विअ वाणरसेण्णपत्थिवेहि बहु परक्कन्तं ।

राजा—(सस्मितम्) अभिज्ञोऽस्मि भवत्पराक्रमस्य । मन्ये स्वयूथ्यबुध्या समागतैः पीडितोऽसि वानरैरिति । आस्तामेतत् । क वतंसकः ।

विदूषकः—(घ) कहं वतंसओ त्ति अत्थलुद्धो अत्तभवं । अहं पुण

(क) हा वयस्य ! अवहितो मां रक्ष ।

(ख) तव सान्निधिमात्रेण प्रनष्टो मे शत्रुवर्गः ।

(ग) मया खल्वेतावतीं वेलामिन्द्रजितेव वानरसैन्यपार्थिवैर्बहु पराक्रान्तम् ।

(घ) कथं वतंसक इत्यर्थलुब्धोऽत्रभवान् । अहं पुनर्नष्टसर्वस्वः कथमप्यात्मान

एवमुत्कलिकाविनोदनोपाये चिन्त्यमाने सूचितस्य नर्मसचिवस्य प्रवेशः अब्रह्मण्यमिति । तस्य प्रहसनवृत्तान्तोपक्रमः । अब्रह्मण्यम् अवद्यम् । एतदवद्यं ब्राह्मणं मां प्रति नानुष्ठेयमिति ॥

पूर्वं परिगृहीतस्य कर्णपूरस्योपरि साध्यान्तरापेक्षयेदानीं विशेष प्रतिपादयितुं सिद्धस्य नाशे उत्कलिकाविनोदनायोपायान्तरान्वेषणद्वारा नायिकादर्शनप्रतिपादनाय च कर्णपूरापहरणं हास्यप्रधानं प्रतिपादयति — अहोतु खल्विति । अनौचित्यस्यातिगौरवेण विस्मयावहत्वम् । अत एवाह —अतिप्रमादमिति । अत्र

१. 'हिदमत्तएण' इति ख. पाठः. २. 'काळ' इति क. पाठः. ३. 'णा वि' इति क-ख-ग. पाठः.
४. 'त्थिएण व' इति क ख. पाठः. ५. 'तैः परिपी' इति ग. पाठः. ६. 'त्ति अहो अ' इति ग पाठः.

णट्ठसव्वस्सो कहं वि अत्ताणं धारेमि । मए खु तं कण्णेउरं राअसारं रक्खिदुकामेण दण्डअट्ठस्स अग्गे बह्मसुत्तेणं[1] उव्बन्धिअ आणिज्जन्तं मक्कटप्पडिरोहेएहि[2] आच्छिन्दिअं ।

**राजा** — अहोतुखल्वतिप्रमादमाचेष्टितमत्र भवता ।

**विदूषकः**[3] — (क) मा कुप्प । भो किं तेण दासीएपुत्तेण कण्णेउरेण, जण्णिमित्तं कुविदा देवी महन्तेण पआसेण पसादिआ।

**राजा** — अलमनेन । मम खल्वापदकथोद्धातमाविर्भूतामपि रणरणिकां भवज्जिह्वाचापलभयादप्रकाशितवानस्मि । अतः[4] तद्विनोदनक्षमं वनोद्देशमन्वेषयावहे ।

धारयामि । मया खलु त कर्णपूर राग़सारं रक्षितुकामेन दण्डकाष्ठस्याग्रे ब्रह्मसूत्रेणोद्बध्यानीयमानं मर्कटप्रतिरोधकैराच्छिन्नम् ।

(क) मा कुप्य । भो किं तेन दास्याःपुत्रेण कर्णपूरेण, यन्निमित्तं कुपिता देवी महता प्रयासेन प्रसादिता ।

एतद्विपये भवतातिप्रमादमाचेष्टित त्वया अवधाने प्रतिपादिते अनवधानमेव निर्व्यूढ परित्यागात् ॥

ईपदमर्पगर्भमुक्तिः दास्याःपुत्रेणेति । अतिनिरसनीयत्वेन परिग्रहे दोषोऽप्यस्ति । यन्निमित्त कुपिता देवी अनुनयप्रणामादिभिः कथमपि प्रसादिता, अस्य विनाशेन शल्योद्धरणमेव कृतम् इति ॥

नायकस्य तस्मिन्नभिनिवेशं पूर्वमेव निरूप्य 'केवल विस्मयेनाक्षिप्त' इति हृदयगोपनं मन्वा(नः ? नेन) अवसरे तस्य हृदयं प्रकाशयितुं तस्य निरसन कृतामिति तदभिप्राय विदित्वाह — अलमिति । मदपेक्षां विदित्वा त्वया प्रतिक्षेपः क्रियते । तदनेनालम् । त्वां वस्तुवृत्तं बोधयामि । मम खलु आपदकथोद्धातम् उद्धात आरम्भः, "स्यादभ्यादानमुद्धात आरम्भ" इति, पदवृत्तान्तमारभ्य । आविर्भूतामपि रणरणिकां चित्तविभ्रमम् अप्रकाशितवानस्मि । भवज्जिह्वाचापलभयात् जिह्वाचापलम् उपलब्धभापित्वं, तेन । न त्वविश्वासाद् अप्रकाशितवानस्मि । अत एव पूर्व

१. 'ण वन्धिऊण आ' इति ख-ग. पाठः. २. 'हक्केहि' इति ग. पाठः. ३. 'कः भो' इति ग. पाठः. ४. पदमिद मूलकोशेषु न दृश्यते

**विदूषकः**—(क) जह तुए मिआणं पदं अण्णेसिअदि, तह अहं पि तुह पदविं अण्णेसन्तो भिउणो णाम महेसिणो पविट्ठो[1] ह्मि अस्समपदं । तस्स मुहादो महदी कहा मए सुदा । तं[2] पुण सअळं अवहारिअ केहिदुं अकुसळा मे बुद्धी । तस्सिं सारभूदं कहेमि । इदो उत्तरदिसाअं कळ्ळाणवामणं णाम पुरुसोत्तमस्स अत्थि मन्दिरं । तहिं किळ भअवन्तं आराहिअ देवेण तवणेण तेळ्ळोक्कप्पआसणसत्ती आसादिआ । तदप्पहुदि तं रण्णक्खेत्तं तवणवणं त्ति संवुत्तं । तहिं एव्व किळ भअवदो वामणस्स तिविक्कमत्थं विउम्भिन्तस्स करदळादो जं दाणसळिळं पडिअं, तं करदळोदअं त्ति सरसी संवुत्ता । ता तहिं एव्व गच्छह्म ।

(क) यथा त्वया मृगाणां पदमन्विष्यते, तथाहमपि तव पदवीमान्विष्यन् भृगोर्नाम महर्षेः प्रविष्टोऽस्याश्रमपदम् । तस्य मुखान्महती कथा मया श्रुता । तां पुनः सकलामवधार्य कथयितुमकुशला मे बुद्धिः । तस्यां सारभूतं कथयामि । इत उत्तरदिशायां कल्याणवामनं नाम पुरुषोत्तमस्यास्ति मन्दिरम् । तत्र किल भगवन्तमाराध्य देवेन तपनेन त्रैलोक्यप्रकाशनशक्तिरासादिता । तदा प्रभृति तद् अरण्यक्षेत्रं तपनवनमिति संवृत्तम् । तत्रैव किल भगवतो वामनस्य त्रिविक्रमार्थं विजृम्भितस्य करतलाद्यद्दानसलिलं पतितं, तत् करतलोदकमिति सरसी संवृत्ता । तत्तत्रैव गच्छावः ।

भवत्प्रश्ने विस्मयादिनिमित्तान्तरेणान्यथा कृतम् । अतः उत्कालिकाया निरन्तरानुबन्धाद् विनोदनोपायस्य वतंसकस्य त्वत्प्रमादेन परित्यागाच्च तद्विनोदनक्षमं विनोदनकरैर्वस्त्वन्तरैश्चेतसः समाश्वासनकरं वनोद्देशमन्वेषयावहे । अस्यामवस्थायां मम नान्तरङ्गत्वमित्युपेक्षां मा कृथा इत्यावर्जयितुमन्वेषयावह इत्युक्तम् ॥

१. 'अत्त' इति घ-ग. पाठः. २. 'त स' इति घ. पाठः. ३. 'भणिउ अ' इति ख-ग. पाठः. ४. 'दो वडुवा' इति ग. पाठः.

राजा— तर्हि वन्दनीयं चराचरगुरोः पादकमलम् । गच्छाग्रतः ।

विदूषकः—(क) एदु एदु भवं ।

(परिक्रामतः)

विदूषकः—(ख) भो वअस्स ! सव्वकाळरमणिज्जं एदं वणं पविट्ठस्स मे दिसामोहो विअ काळमोहो संवुत्तो । ता को काळो वट्टइ ।

राजा— (सावधानं समन्तादवलोक्य सविमर्शम्) *शङ्के शिशिरवसन्तयोरयमान्तरालिकः कालः ।

---

(ग) एत्वेतु भवान् ।

(ख) भो वयस्य ! सर्वकालरमणीयमेतद्वनं प्रविष्टस्य मे दिङ्मोह इव कालमोहः संवृत्तः । तत् कः कालो वर्त्तते ।

---

"अण्णेससि" इति वा पाठः । सारभूतं कथयिष्यामीत्यनेन मुनिमुखाच्छ्रुतस्यार्थस्य स्वोक्तिरूपेण सङ्क्षेपः । अत एव किलेति परोक्तिप्रामाण्यं सूचितम् । अत्र कथया देशस्य सौभाग्यं भगवत्सन्निधानेन महत्त्वं च प्रतिपादितम् । अत एवाह ता तर्हि एव्व गच्छम्ह । एवेत्यनेन नान्यः प्रदेशोऽन्वेषणीय इति प्रकाशितम् ॥

तदनुमोदमान आह — तर्हीति । वन्दनीयमिति । विनोदनं तिष्ठतु इदमेवापेक्षणीयमिति भावः । तत् त्वरया आह — गच्छाग्रत इति ॥

तपनवनप्रवेशानन्तरं कालवर्णनाय द्वारमुद्घाटयति — सर्वकालरमणीयमिति । इदं वनं प्रविष्टस्य मे कालमोहः संवृत्तः । काल ऋतुलक्षणः तद्विषयो मोहः अबोधः । तत्र हेतुः सर्वकालरमणीयमिति । सर्वर्तुष्वेकप्रकारेण रमणीयमिति वनान्तराद् विशेषः । वनान्तरेषु वसन्तग्रीष्मादिषु रमणीयतायास्तारतम्यमस्ति । अत्र परिपूर्णमेव नित्यं रमणीयत्वम् । अतो मन्दमतिभिः कालभेदो ज्ञातुमशक्य इति कः कालो वर्तत इत्युक्तम् । दिङ्मोह इवेति । दिङ्मोहः सर्वत्र प्रसिद्धः । मम कालमोहोऽपीति विशेषः ॥

तत्राह — मन्य इति । मन्य इत्यनेन तदुक्त्यनुसारेण दुर्ज्ञेयत्वं सूचितम् । शिशिरवसन्तयोः अतीतप्रायस्य शिशिरस्य आगामिनो वसन्तस्य च । आन्तरालिकः

---

१. 'कोकालो' इति ख ग. पाठः. २. 'क्थ, श' इति घ. पाठः.

---

* 'मन्ये' इति तु व्याख्यायां प्रतीकं धृतम्.

अप्रत्यूहमहर्मुखार्कमहसामत्यर्थमम्भोरुहा-
मातङ्कार्पणदुर्बलं हिमजलं जातं जराजर्जरम् ।
प्रत्यस्तप्रसवामपोह्य फलिनीं भृङ्गीकटाक्षः शनै-
रभ्यर्णप्रसवामशोकलतिकामभ्येतुमाकाङ्क्षति ॥ ३ ॥

**विदूषकः**—(विलोक्य सविस्मयम्) (क) भो वअस्स! पेक्ख पेक्ख । एदाओ अदिट्ठपुरुवाओ मन्दसमीरवेविदङ्गीओ मोत्तिअ-

(क) भो वयस्य! पश्य पश्य । एता अदृष्टपूर्वा मन्दसमीरवेपिताङ्ग्यो मौक्तिक-

उभयकार्ययुक्तः । मध्ये कालान्तरस्याभावात् । तदेव समर्थयति—तथाहीत्यादि । हिमजलं शिशिरकार्यमृतम् । अहर्मुखे दिनारम्भे, अर्कमहसामत्यर्थमप्रत्यूहं जातम् अतिशयेन प्रत्यूहकर न भवति । पूर्वमारम्भ एव तिरोधायि इदानीं तथा न समर्थम् । अनेन प्रत्यूहस्य लेशोऽङ्गीकृत. । तथैव अम्भोरुहाम् आतङ्कार्पणे वैवर्ण्यविशीर्णतादिव्यसनजनने दुर्बलम् अल्पशक्ति, न तु सर्वथा परिक्षीणशक्ति । हिमजलस्य तथात्वे हेतुमाह—जराजर्जरं जरया कालपरिणत्या जर्जरं शकलीभूत विरलमित्यर्थः । अथ वा हिमजलं जराजर्जरमिति बोध्यम् । अप्रत्यूहमिति क्रियाविशेषणम् । अहर्मुखार्कमहसां प्रत्यूहो यथा न भवति तथा, पूर्वं विरोधायकस्य यथा तदसामर्थ्यं तथा जर्जरमित्यर्थः । तत्फलमाह—अम्भोरुहामत्यर्थमातङ्कार्पणदुर्बलमिति । किञ्चित्पीडाकरमेव अत्यन्तापगमाभावादित्यर्थः । कार्यान्तरमाह—प्रत्यस्तप्रसवामिति । भृङ्गीकटाक्ष. शिशिरापचयेन प्रत्य तप्रसवाम् अपगतप्रायकुसुमाम् । फलिनीं प्रियङ्गुलताम् । अपोह्य परित्यज्य । अभ्यर्णप्रसवां वसन्तोद्भवाम् अशोकलतिकाम् अभ्येतुमाकाङ्क्षति । अत्र प्रत्यस्तप्रसवत्वम् अभ्यर्णप्रसवत्व चाभयोरपोहनाकाङ्क्षयोः कारणम् । अभ्यर्णेक्षया भृङ्ग्याः कटाक्ष. . . . . . अभ्येतुमाकाङ्क्षति, न त्वभ्येति । तत्रापि शनैः पूर्वत्र मधुरसस्य गतप्रायत्वात् कटाक्षस्ततो निवृत्याद्य श्वो वेति प्रसवोन्मुखीमशोकलतिकां प्राप्तुमिच्छति शनै, तत्र वि(ल?) वलत इत्यर्थः । अत्र प्रसवराहित्येन पूर्वनायिका दाक्षिण्यमात्रेणानुसृत्य द्वितीयनायिकां कुलोचिततनयोत्पत्तिहेतुमभिलषति नायकस्य मन इत्यन्यापदेशरूपेण भाविवृत्तान्तानुसारेण पताकास्थानक कविना प्रतिपादितम् । तत्र शनैरित्यनेन दाक्षिण्यापरित्यागः प्रकाशितः ॥ ३ ॥

१. 'क्व अमनो त्रि' इति ग पाठः. 'क्व मो' इति घ, पाठः. २. 'एस अच्छेरमच्छरम्' इति ख-ग, पाठः.

मुउळसेदकणिआचिदाओ रदणसुमणोणअणेहिं ओळो-
कअन्ति विअ तुमं मअणपरवसाओ हेममईओ वणळदा-
कण्णआओ[3] । तक्केमि एदं तवणवणं ति ।

राजा– सखे! सम्यगुपलक्षितम् । इयं हि–

आपाटलं किसलयाधरमर्पयन्ती
व्यावृण्वती मधुपझङ्कृतिसीत्कृतानि ।
अभ्याशचूतमरन्दिकुचोपपीड-
मत्यायतं समुपगूहति कल्पवल्ली ॥ ४ ॥

---

मुकुलस्वेदकणिकाचिता रत्नसुमनोनयनैरवलोकयन्तीव त्वां मदनपरवशा हेममय्यो वनलताकन्यका । तर्कयाम्येतत् तपनवनमिति ।

---

अथ चित्तानुसारी नर्मसचिवः सविस्मयं वनमालोक्य 'तद्विनोदनक्षमं वनोद्देशमि'ति पूर्वोक्तमनुसृत्य तदनुगुणं वर्णयति– एदाओ इत्यादि । अदृष्टपूर्वा इति । कल्पलतायेनान्यत्रालभ्यत्वात् । एता वनलताकन्याः मदनपरवशास्त्वाम-वलोकय न्तीत्यारोपगर्भितयोत्प्रेक्षा । रत्नसुमनोनयनैः इन्द्रनीलादिरत्नमयसुमनोभि-रेव नयनैः । नयनानां करणत्वकथनं विशिष्टारोपशेषतया । कल्पलताकुसुमादीनां रत्नरूपत्वात् तथोक्तिः । अत एव मौक्तिकमुकुलस्वेदकणिकाचिता इति मौक्ति-कमयानां मुकुलानां स्वेदकणिकात्वारोपः । मन्दसमीरवेपिताङ्गय इति कोमलत्वा-न्मृदुमारुतस्पर्शेन सर्वाङ्गचलनाद् वेपथुमत्त्वारोपः । हेममय्य इति । लतानां तद्रूप-त्वाद् आरोपेऽपि हेममयीत्वमलङ्कारादिना घटते । रम्यामिति । अतिकमनीयरूपत्वात्त-थावलोकनयोग्यत्वम् । अत्र मदनपारवश्यानुभावरूपतया स्वेदवेपथुसमारोपः । त-त्राचेतनेष्वप्येवमुत्प्रेक्षितु योग्यत्वे अन्यत्र भवतः काम्यत्वं किं कथ्यताम् इति प्रशंसा ॥

इति तस्य चित्तानुसारि वचनमाकर्ण्य श्लाघापूर्वं संवदति–सखे इत्यादि । सरसवीथीचङ्क्रमेण तव मनोवृत्तिः मत्प्रीतेः पुरःसरीभवति । अतः सम्यगुपल-क्षितम । एतासां कल्पवल्लीनाम् एता रसवत्योऽवस्थाः प्रकाशन्त इति सम्यक्त्वम् ।

---

१. 'आइदा' इति स.ग. पाठः. २. 'न्तीओ वि' इति घ. पाठः. ३. 'ओ । ता त इति ख. पाठः.

**विदूषकः**—(क) ही ही सिविणे वि अदिट्ठपुव्वाणि एआरिसाणि दक्खन्तस्स आसा मे आसी पुव्वप्पत्थुअं अम्बरगमणं पि कदाइ सम्भविस्सदि त्ति ।

**राजा**—(स्पर्शमभिनीय) प्रत्यासन्नेन गोविन्दमन्दिरेण भवितव्यम् । तथा हि—

(क) ही ही स्वप्नेऽप्यदृष्टपूर्वाण्येतादृशानि पश्यत आशा मे आसीत् पूर्वप्रस्तुतमम्बरगमनमपि कदाचित् सम्भविष्यतीति ।

ममाप्येव मति स्फुरति । इय कन्दवल्ली पुरो वर्तमाना तत्रापि हृदयसनादाय सुलक्षा कल्पवल्ली कामिनी । अभ्याशचूतम् अभ्य शात चूत कामुकम् । समुपगूहति सम्यगुपगूहति । सम्यक्त्व सम्प्रयोगा तरेण चारुत्वम् । तदाह—किसलयाधरमिति । किसलयमेवाधरमित्यारोप । तच्छेदनया आगाटलग्रहणम् । अर्पय ती ग्रहणानुगुण्येन ददतीति तत्काले विशेपणम् । तत्रापि सप्रयोगा तरेणोर कार कथ्यते—मधुपझङ्कृतिसीत्कृता ानि । मधुपझङ्कृतिरव सीत्कृतानि मणितरुतविशेपान् । व्यावृण्वती स्पष्टयन्ती । अत्रोपगूहन-याधरार्पणेन त य सीत्कारेण च राभा यमिति मत्वा समुपगूहतीत्युक्तम् । उपगूहनप्रकारमाह—अरवि दकु ोपपीडमिति । अरविन्दरूपाभ्या कुचाभ्या पीडयित्वा । कन्दवल्लीषु सर्वकुसुमाना सम्भवादरविन्दस्योपपत्ति । अनेनोपगूहनस्य गाढत्व प्रकाशितम् । अत्र किसलयस्याधरत्वेन मधुपझङ्कृते सीत्कारत्वेनारविन्दस्य कुचत्वेनारोपस्य शाब्दत्वात् कल्पवल्ल्या नायिकात्वस्य चूतस्य नायकत्वस्य चारोपे आर्थत्वादेकदेशविवर्तिरूपकमिदम् । अत्रोपगूहने कर्तृत्वनिर्देशात् चूतनायक यासन्नवर्तित्वानारोपिताय ः प्रौढनायिका व स्वाधीनपतिकात्व च स्फुरति ॥ ४ ॥

स्वप्नेऽप्यदृष्टपूर्वाणीति । अत्यन्तमसम्भावनीयानीत्यर्थ । ईदृशानि कल्पलताप्रभृतीनि पश्यतो मे आशा आसीत्, पूर्वप्रस्तुत भवता प्रति ात अम्बरगमनमपि विधिवशात् कदाचिद् भविष्यतीति शृङ्गारोपचारकत्वेन हास्यकथनम् ।

अथ धूपानुविद्धसुरभिसमीरस्पर्शाघ्राणेन प्रस्तुतदेवतायतनसान्निध्य परिकल्प्याह—प्रत्यासन्नेनेति । गोविन्दमन्दिरेण पूर्व त्वया प्रस्तुतेन सन्निहितेन भवितव्यमिति

१ 'र्शं रूपयित्वा प्र' इति ख. पाठ २ 'कुत' इति ख. पाठ.

सम्मूर्च्छन्महिषाक्षधूपकलिकाधूम्राः पयोरेणुभिः
　शुभ्राः कुङ्कुमकेसरारुणरुचः कर्पूरचूर्णस्पृशः ।
आघ्राता मदमञ्जुलैरालिकुलैरस्माकमध्वक्लमं
　लुम्पन्तः शिशिरा वनान्तमरुतो लिम्पन्ति नासापुटम् ॥ ५ ॥

(उभौ परिक्रामतः)

तल्लक्षणमाह — सम्मूर्च्छदित्यादि । वनान्तमरुतः नासापुटं लिम्पन्ति । वनान्ताश्रयत्वेन शैत्यादिगुणसम्बन्धः प्रकाश्यते । नासापुटं लिम्पन्ति व्याप्नुवन्ति । अनेन मरुतां सांक्रामिकेन सौरभ्यगुणेन घ्राणेन्द्रियप्रियत्वं प्रकाश्यते । तदनुगुणं विशिनष्टि — सम्मूर्च्छदित्यादि । सम्मूर्च्छन्त्या वर्द्धमानया महिषाक्षधूपकलिकया गुग्गुलुसम्पादितधूपकलया धूपांशेन धूम्राः कृष्णवर्णाः । अत्र धूपस्य नासापुटव्याप्तिशेषतया सुरभित्वे वक्तव्ये तदनुक्तमिद्धमिति मत्वा विचित्रवर्णप्रतिपादनसंरम्भेण धूम्रा इत्यवोक्त, 'धर्मिधर्मयोरेकतरानिर्देशेऽन्यस्य संवित् साहचर्यादि'ति धूपस्य वर्णे निर्दिष्टे सुरभित्वमनुक्तसिद्धमिति । तदनुसारेण लिम्पन्तीत्युक्तम् । धूपकलिकासौरभ्येण सङ्क्रा तेन मरुतां सौरभ्यं, तेनाघ्रातव्यत्वं, तेन गोविन्दमन्दिरस्य प्रत्यासन्नत्वनिश्चय इति वस्तुस्थितिः । पुनः सांक्रामिकं वर्णान्तरं प्रतिपादयति— पयोरेणुभि शुभ्रा' पयोरेणुभिः अर्थाज्जलाशयसङ्गृहीतैः जलशीकरैः शुभ्राः धवलाः । तथा कुङ्कुमकेसरारुणरुचः कुङ्कुमकेसरैः कुङ्कुमकेदारगृहीतैः केसरैरुणरुचः । अत्र स्पर्शगुणस्य वायोः साङ्क्रामिका विचित्रा धूम्रतादिगुणा उपचरिताः । तथा कर्पूरचूर्णस्पृशः परिपाकं गतस्य वायुसंबन्धात् स्फुटितकोशस्य कर्पूरस्य चूर्णत्व भवति, तद्ग्राहिण । अत्र साङ्क्रामिकं धावल्यं सौरभ्यं च गम्यते । तत्र सौरभ्य नासापुटलेपनोपयोगि । धावल्यं विचित्रवर्णतोपयोगि । मदमञ्जुलैः मधुमदेन मधुरनादैः अलिभिः परिमलानुसारित्वादाघ्राताः । अत्र वायोः सौरभ्योपयोगि । अस्माकमध्वक्लमम् अतिदूराध्वगमनेन श्रमं, लुम्पन्तः अपनयन्तः, शिशिरा शीतलाः वनप्रसरपयोरेणुसम्बन्धादिना । अत्र स्पर्शगुणस्य वायोः साङ्क्रामिकविचित्रवर्णस्फुरणेन नासाविवरसौरभप्रसरेणालिकुलनिनदादिशब्दप्रसरेण चेन्द्रियान्तरार्पकत्वेन सौभाग्यं प्रतिपादितम् ॥ ९ ॥

१. 'म् । नि' इति घ. पाठः.

**विदूषकः**—(क) भो सम्पत्तह्म देवमन्दिरं[1] । ता पविसिअ पणमह्म ।

**राजा**[2]— (प्रवेशं रूपयित्वा बद्धाञ्जलिः प्रणमन्)

धृताषाढं शश्वच्छुचि शबलकृष्णाजिनधरं
शिखाबद्धग्रन्थि क्रतुवरनुतिव्यापृतमुखम् ।
दधद् ब्राह्मं सूत्रं कटितटलुठन्मौञ्जिरशनं*
हृषीयो वन्देऽहं वनजनयनं वामनवपुः ॥ ६ ॥

**विदूषकः**—(ख) भो ! तुज्झ लिहिदक्खराए जीहाए वअणप्फुल्लेहि अच्चिदो देव्वो । अणक्खराविभवो अहं केवलकुसुमाणि आणीअ अच्चिस्सं । (निष्क्रान्तः)

(क) भो सम्प्राप्ताः स्मो देवमन्दिरम् । तत् प्रविश्य प्रणमावः ।

(ख) भो तव लिखिताक्षरया जिह्वया वचनफुल्लैरर्चितो देवः । अनक्षरविभवोऽहं केवलकुसुमान्यानीयार्चिष्यामि ।

एवं देवमन्दिरसान्निध्यं निश्चित्य तद्वचनानुसारेण प्रविश्य प्रतिमायां स्वस्वरूपं भावयित्वाह—धृताषाढमित्यादि । अहं वामनवपुः वन्दे । धृताषाढमित्यादिना ध्यानालम्बनत्वेन स्वरूपकथनम् । आषाढो दण्डः । शश्वच्छुचि नित्यशुद्धं मायातीतत्वात् । शबलकृष्णाजिनधरमित्यनेन शोभातिशयः प्रकाशितः । शिखाबद्धग्रन्थि शिखायां सम्पादितग्रन्थि । क्रतुवरस्य बलियज्ञस्य नुतौ सामगाने व्यापृतमुखम् । अनेन सान्निध्यनिर्वहणोद्यतत्वं प्रकाश्यते । दधद् ब्राह्मं सूत्रमित्यनेन कर्मकाण्डप्रवृत्तत्वं प्रार्थनानुगुणं सूच्यते । कटितटे श्लिष्यन्ती मौञ्जी मेखलैव रशना कटिसूत्रं यस्य । वनजं जलजम् ॥ ६ ॥

लिखिताक्षरयेति । जिह्वायामक्षराणि लिखितान्येव, अन्यथा कथं झटिति तेषां प्रसर इति युक्तिकल्पनम् । वचनफुल्लैरिति । अर्चनसाधनत्वेन वचनानां फुल्लत्वारोपः ॥

अथ देवस्य सपर्याविधानं सावधानं निरीक्ष्याह—

१. 'र । प' इति ख. ग पाठ   २. 'जा साअ' इति ख. पाठः.

* 'ङ्यापो' (६-३-६३) इति बहुलग्रहणान्मौञ्जीशब्दे ह्रस्वः समर्थ्यः । 'मौञ्जरशनम्' इति वा पाठः.

**राजा**—अत्र तावदनिर्वाणमाणिक्यदीपमालादूरीकृतगर्भगृहान्धकारा जाम्बूनदाकल्पकल्पितदिव्याकृतिवेषविशेषा सुधासौरभसुभगसुरतरुसुमनःसम्पादितभक्तिसन्ताना सेयं सपर्या सूचयति दिव्यजनसम्पातम् ।

( ततः प्रविशत्युपविष्टा कामयमानावस्था नायिका )

**नायिका**—(क) (दीर्घं निश्वस्य) अहं खु मणोरहसिद्धिसम्पादणत्थं

---

(क) अहं खलु मनोरथसिद्धिसम्पादनार्थं कथमपि संस्थाप्यात्मानमनुष्ठितमधुमथन-

---

अत्र तावदित्यादि । अत्र सेयं सपर्या दिव्यजनसम्पातं सूचयति । सेयमिति यादृशी पूर्वं निर्मिता तादृश्येवेदानीमित्यनेन सपर्याविधानस्यासन्नकालत्वम्, अत एव शोभाप्रकर्षश्च प्रतिपाद्यते । सैवेयं, न कालात्ययेन म्लानिः । एवम्भूता दिव्यजनसम्पातं सूचयति दिव्यजनस्य अर्थादर्चकस्य सम्प्राप्तिं सूचयति । सपर्येति तत्साधनानि निर्दिश्यन्ते । तत्प्रकारमाह—अनिर्वाणेत्यादि । अनिर्वाणाभिः नित्योज्ज्वलाभिः माणिक्यमयीभिः दीपमालाभिः दूरीकृतो गर्भगृहान्धकारो यस्याम् । जाम्बूनदमयैराकल्पैः कल्पितो दिव्याकृतियोग्यो वेषविशेषो यस्याम् । तथा सुधासौरभेण सुभगाभिः सुरतरुसुमनोभिः सम्पादितं भक्तिसन्तानं गर्भगृहादिषु पुष्पपटलविन्याससन्तानं यस्यां सा सपर्या इति । सुरतरुसुमनसां मकरन्दस्य सुधारूपत्वात् सुधासौरभेत्युक्तम् । अत्र दिव्याकृतिवेषविरचनेन सुरतरुसुमनोभिर्भक्तिविन्यासेन च दिव्यजनसम्पातसूचनम् । अत्र दूरीकृतेति कल्पितेति सम्पादितेति पूजकव्यापारस्य गौरवकथनेन तद्विषयः कौशलनिमित्तो बहुमानातिशयः प्रकाश्यते ॥

अथ प्रवेशके मेनकोक्तप्रकारेण संवरणानुरागविवशायाः स्वयमेव तपनवनं प्राप्य साध्यसिद्धये कृतवामनसपर्यायाः स्फटिकमण्टपस्थायाः "सूचयति दिव्यजनसम्पातम्" इत्यनेन सूचिताया नायिकायाः प्रवेशः प्रतिपाद्यते । प्रविष्टा सा समुचितकान्तविषमरतिसङ्कीर्णचौनरणरणिकानिधामवेशुम्वेदाचिन्तानुबन्धरोमाञ्चवैवर्ण्याश्रुवैरम्यमंगरहिता अवसरलाभेन कान्तसङ्गमसमागमोत्सुका निश्वसिति—अहं खल्वित्यादि । अहं खलु कथमपि संस्थाप्यात्मानम् अनुष्ठितमधुमथनपूजा आगतास्मि । अहम् अनन्यसहाया । खल्विति विचारद्योतकः । विमर्शे निरवद्यमिदमा-

कहं वि सण्ठविअ अत्ताणं अणुट्ठिअमहुमहणपूजा आअदह्मि । ता सहीजणेण वि असङ्किण्णे एत्थ विवित्ते तेण जणेण सह अणिवारिअप्पसरेहि सङ्कप्पेहि[2] सङ्गमिस्सं ।
(ध्यानस्तिमिता तिष्ठति)

पूजागतास्मि । तत् सखीजनेनाप्यसङ्कीर्णेऽत्र विविक्ते तेन जनेन सहानिवारितप्रसरैः सङ्कल्पैः सङ्गस्ये ।

चरामि । अनन्यसाध्यायामवस्थायामहमेकैव प्रवृत्ता इति वा । मनोरथसिद्धिसम्पादनार्थं सकलमनोरथसाम्राज्यमुद्वहतो जनिफलदायिन, अत्रैव सकलमनोरथान्तर्भाव इति विशेषकथने *(निमित्तत्व [1]) भवेदिति मनोरथस्येत्येव वक्तव्ये तस्य सिद्धिर्लाभ तस्य सम्पादनार्थं भगवत्प्रसादेन कर्त्रा सम्पादयितुम्, अनेनानन्यलभ्यत्व पूर्वं तत्प्रसादेन स्वजन्मसिद्धेस्तल्लभ्यत्व च प्रकाश्यते । आत्मान मन । कथमपि मनोरथदयितनिलीन पूजारम्भे वारवारमाकृष्यमाणमप्यविधेय तत्रैव धावत् फलकोट्या प्रसार्य भक्त्या निरुध्य बलवत् कथमपि वशीकृत्य । अनुष्ठितमधुमथनपूजा आगतास्मि । आत्मसंस्थापनस्य पूर्वकालत्वेन पूजानुष्ठानस्यालङ्करणादिरूपस्य वैवश्यकृतमचारुत्व निरस्तम् । अत्र मनोरथसिद्ध्यलाभेन खेद, अनुष्ठितेति भक्ति, आगतेत्यनेन कृतार्थता प्रकाश्यते । तत् कृतदिनकृत्यतया अनन्यशरणत्वाच्च । अत्र भोगयोग्ये स्थले वर्तमाना, यतो विविक्ते विजने । तत्प्रकर्षमाह — सखीजनेनापीति । क्षणमप्यरहितेन विचारपरिज्ञाननिपुणेनालङ्घनीयवचनप्रचारेण । असङ्कीर्णे असम्मिलिते । अनेन निरर्गलप्रवृत्तेरवैषम्येण देशस्य साम्यानुगुणत्व प्रकाश्यते । तेन भुवनप्रसिद्धेनानुभूतरूपचातुर्येण तदा तदा प्रस्तुतेन च सङ्गस्ये । सङ्कल्पैः, सङ्कल्पो मनोवृत्ति । तत्र करचरणादिरूपरामणीयकस्य मधुरालापस्याङ्गरागादिसौरभ्यस्याश्लेषपरिचुम्बनस्पर्शरसास्वादस्य प्रतिनियतस्यान्योन्यसवलितस्य च सङ्कल्पविषयस्य बहुत्वात् सङ्कल्पैरित्युक्तम् । सङ्कल्पस्यान्यसङ्गमाद् विशेषमाह — अनिवारितप्रसरैः । सङ्कल्पस्य मनोमात्रसाध्यत्वात् तस्य स्वयमेव प्रवृत्तत्वात् सङ्कल्पप्रसरो यथाबोध प्रवर्तकेनापि स्वजनेन कान्तेन लज्जया वा न निवार्यते । अत्र साक्षात्समागमाभावेन खेद तद-

१. 'ण अ' इति खग पाठ        २ 'हि अणुभविस्स' इति घ पाठ

*'नियामतत्वम्' इति वा 'नियतत्वम्' इति वा भवेत्.

(ततः प्रविशति रम्भा मेनका च)

**रम्भा**[2]—(क) सहि! कहिं णु खु पिअसही तवदी।

**मेनका**—(ख) करदळोदअतीरगए फळिहमण्डवे तिस्से हिअअं अहिरमदि। तहिं ताए होदव्वं।

**रम्भा**[4]—(ग) ता तहिं एव्व गच्छह्म।

**मेनका**—(घ) एसा किं पि चिन्तअन्ती अपरिप्फन्दं चिट्ठइ किं णु खु[6] एदं[7]।

---

(क) सखि! क नु खलु प्रियसखी तपती।
(ख) करतलोदकतीरगते स्फटिकमण्डपे तस्या हृदयमभिरमते। तत्र तया भवितव्यम्।
(ग) तत् तत्रैव गच्छावः।
(घ) एषा किमपि चिन्तयन्त्यपरिस्पन्दं तिष्ठति। किं नु खल्वेतत्[1]।

---

लाभेऽपि सङ्कल्पसौकर्यादभिरुचिश्च प्रकाश्यते। एवं परिकल्पितस्यानुभवेन स्तैमित्येन स्थितिरुक्ता॥

अथ तां साहसान्निवारयितुं समाश्वासयितुं च सखीप्रवेशः प्रतिपाद्यते। पूर्वं द्वयोः संव्यवहारे "अद्य मामप्यनालप्य तपनवनं गता। तत् तपनवनमेव गत्वा प्रियसखीमाश्वासयाव" इति संवादशेषतया द्वयोस्तत्रागमनम्। तत्र चिरकालागतत्वेन तत्कालावस्थयासिद्धत्वाद् रम्भायाः प्रश्नः—सखि! क नु खलु प्रियसखी तपती। वर्तते इति शेषः। तपनवन इत्येव पूर्वमुक्तम्, अत्रायामागते, अत्र कस्मिन् प्रदेश इति ब्रूहि। प्रियसखीत्यनेन चिरकालागताया दर्शनौत्सुक्यं प्रतिपाद्यते॥

तस्योत्तरमाह—करतलोदकेति। इदानीं कुत्र वर्तत इति मया न ज्ञातम्। नित्यं करतलोदकतीरगते स्फटिकमण्डपे तस्या अभिरुचिर्दृश्यते। तदिदानीमपि तत्र स्थितिः सम्भाव्यते॥

तत् तत्रैव गच्छाव इति दर्शनत्वरया रम्भाया उक्तिः॥

अथ ध्यानस्तिमितामवस्थितां तां वीक्ष्य मेनका शङ्कते—एषा प्रियसखी

---

१. 'ति मेनका रम्भा च' इति प. पाठः. २. 'म्भा च' इति घ. पाठः. ३. 'ध्य ता' इति प. पाठ. ४. 'म्भा तेण हि त' इति रा. पाठ. ५. 'दा। (परिक्रम्यावलोक्य) रम्भा-इ' इति प. पाठः. ६. 'हु' इति रा-प. पाठः. ७. 'दं। मेनका-अ' इति प. पाठः.

रम्भा — (क) अम्मो अपुव्वा इअं सहीए दसा। ता इह एव्व ठिदाओ एदाए ववसाअं जाणिअ पुणो अत्ताणं पआसह्म।

(भित्यन्तरिते स्थिते)

(प्रविश्यापटाक्षेपेण विदूषकः)

विदूषकः — (ख) भो वअस्स! अच्छेरमच्छेरं। दिट्ठो मए विह्मअणिज्जसण्णिवेसाए सरसीए तीरगओ घणपडलेहि घणीभूदो जळेरासी। अण्णं च तस्सिं जळे भअवदीए ळच्छी-

(क) अम्मो अपूर्वेयं सख्या दशा। तदिहैव स्थिते एतस्या व्यवसायं ज्ञात्वा पुनरात्मानं प्रकाशयावः।

(ख) भो वयस्य! आश्चर्यमाश्चर्यम्। दृष्टो मया विस्मयनीयसन्निवेशायाः सरस्या-

किमपि चिन्तयन्त्यपरिस्पन्दं तिष्ठति देहस्य किञ्चिच्चलनमपि न ज्ञायते। अतश्चिन्तनीये वस्तुनि तात्पर्यं कल्प्यते। किमिति न ज्ञायते किन्तु खल्वेतत् किञ्चिन्निमित्तमिति निमित्तविषया शङ्का॥

अथ तादृशीं तां चिरेणावलोक्य रम्भा सविषादमाह — **अम्मो** इति। अम्मो इति विषादद्योतकम्। सख्या इयं दशा अपूर्वा अदृष्टपूर्वा शरीरशोषवैवर्ण्यादिरूपा। तद् झटिति न समीपे गन्तव्यम्। किमियं चिन्तयति कोऽस्य परिणामः। एकाकिनी विरहविवशा चिन्तापरा किं करिष्यतीत्यध्यवसायं ज्ञात्वा आत्मानं प्रकाशयावः। अन्यथा झटित्यावां दृष्ट्वा अभिप्रायमाच्छादयेदेव। तदध्यवसायनिश्चयावध्यत्रैव तिष्ठाव इति॥

अथ नायिकादर्शनसङ्घटनाय विदूषकस्य हास्यभ्रमः प्रतिपाद्यते। अपटाक्षेपेणेत्येनेन सम्भ्रमः प्रकाशितः। तन्निमित्तमाह — **भो वयस्येत्यादि**। आश्चर्यमाश्चर्यं, वर्तत इति शेषः। इतः परमन्यदाश्चर्यं नेति द्विरुक्तिः, तदाह — दृष्ट इति। आश्चर्यं वस्तु मयैकेनानुभूतमित्यत्र सुहृद्वञ्चनदोषो भवेदिति सम्भ्रमः क्रियते। मया विस्मयनीयसन्निवेशायाः सरस्यास्तीरगतो जलराशिर्दृष्टः जलस्योर्ध्वसञ्चयो दृष्टः। सरसी तावद् विस्मयनीयसन्निवेशा। अतोऽप्यन्यस्या आधिक्यम् इत्यनूद्य कथितम्। त्वया सावधानं न निरीक्षितमिति भवदपलापशङ्कया यथावस्तु निरीक्ष्य

१. 'अ पिअस' इति ग पाठ.. २ 'ततः प्रविशलप' इति कघ. पाठः. ३. 'ळमेळो अ' इति घ. पाठः.

ए आइदी आळिहिदा । ता तुरिअं ओळोएँदु अत्तभवं ।

राजा — मूर्ख! निम्नोपसर्पीणि वारीणि, तेषां कथमूर्ध्वगमनं स्थिरीभावो वा । कथं वा तेष्वालेख्यानि लिख्यन्ते ।

विदूषकः — (क) करँदळगए आमळए किं दुव्विवादेण । पैच्चक्खप्पमाणेण एव्व अहं साहेमि (राजानमाकर्षति)

---

स्तीरे घनपटलैर्घनीभूतो जलराशि । अन्यच्च तस्मिन् जले भगवत्या लक्ष्म्या आकृतिरालिखिता । तत् त्वरितमवलोकयत्वत्रभवान् ।

(क) करतलगत आमलके किं दुर्विवादेन । प्रत्यक्षप्रमाणेनैवाह साधयामि ।

---

मया कथ्यते । सरस्यास्तीरगत न तु सरसीं प्रविष्ट । अन्यमपि विशेष कथयामि । घनपटले घने स्थिरे निजखण्डै शिलाखण्डैरिवोपर्युपरि दृढसश्लेष न्यस्तै र्घनीभूत समन्तादुपर्युपरि स्थिताना जलपटलाना विन्यासेनाविज्ञातावयवभेदम् एकघनीभूत , एवभूतो जलस्योर्ध्वसञ्चयो दृष्ट । इतोऽप्यधिक कथयामि । अन्यच्च तस्मिन् जले घनीभूते भगवत्या लक्ष्म्या आकृतिरालिखिता । लक्ष्म्या आकृतिरेवेव भवितु योग्येति मया तथोक्तम् । तत् त्वरितमवलोकयतु भवान् । भवानिति भवदवलोकनस्यैव कार्यकरत्वम् । मम सर्वत्र घटकत्वमेन ॥

एव तस्य भ्रममाक्षिपति — मूर्खेत्यादि । अहो तव मौर्ख्यमुत्तरोत्तर प्रसरति । वारीणि निम्नोपसर्पीणि । निम्नमनुसरति सलिलमिति हि प्रसिद्धि । निम्नोपसर्पणमेषा स्वभाव कथमन्यथा भवेत् । अत ऊर्ध्वगमनकथन भ्रमगतम् । स्थिरीभावोऽप्या द्रस्वभावाना न घटते । तादृशेषु कथमालेख्यसम्पादनमिति सर्वस्य भ्रमरूपत्वम् ॥

मया यथादृष्टमेव कथित सर्व, भ्रम इति भवत सिद्धान्त । तत्रानयोर्दुर्विवादेन कालक्षेपोऽभवत् । अह प्रत्यक्षेणैव साधयामि । तदसाध्ये हि प्रमाणान्तरापेक्षा । तद्दर्शनेन सिद्धान्तसमाधान करोमीत्याकर्षणम् । अत्र सुनिमित्तात् प्रभृत्यभ्युदयहेतोर्नायिकाभिगमस्यानुकूल्मवस्थान्तर तत्र तत्र निर्यत्न घटत इतीदानीमपि तद्भ्रमद्वारा दर्शनस्य सङ्घटनम् । तदवकाशनाय दैवानुकूल्येन पौरपप्रकाशनार्थं राजानमाकर्षतीति तस्य सङ्घटनोद्यम प्रकाशित ॥

---

१ ग' इति ख पाठ १' इति क पाठ २ रग' इति घ पाठ ३ 'घनगुप' इति क-ख-ग पाठ

राजा — मन्ये भ्रमपरिणामेनानेन भवितव्यम् । भवतु त्वदि-च्छां पूरयामि[1] ।

( उभौ परिक्रामतः )

विदूषकः — (क) भो वयस्स! पेक्ख पेक्ख एसो[2] सा सरसी, आदु अण्णं किं पि वत्थु । किं एत्थ वि अत्थि भमो ।

राजा — सत्यमेवैषा[3] सरसी । इयमेव मन्ये भगवता भृगुणा नि-र्दिष्टा । पश्य —

माणिक्यभूतलगता मणिभङ्गतोया
कल्याणिनी करतलोदकनामधेया ।

---

(क) भो वयस्य! पश्य पश्यैषा सा सरसी, उतान्यत् किमपि वस्तु । किमत्रा-प्यस्ति भ्रमः ।

---

तदाकर्णनेऽप्यघटमानत्वं निरूप्याह — मन्य इति । अनेन त्वदुक्तेन पर्यन्ते भ्रमरूपेण भवितव्यम् । भवतु आन्तरनिर्णये भ्रमरूपं निश्चित्यापि त्वदि-च्छापूरणाय त्वामनुसरामि ॥

राजानमाकृष्य नयनाक्षेपमसहमान आह — भो इत्यादि । पश्येति । अतः परं दृष्ट्वा वक्तव्यं, मयोक्तानि क्रमेण निरूपणीयानि । 'सरस्यास्तीर' इति मया पूर्वमुक्तं, तत् सत्यं वा न वेति कथय । पक्षे इत एव पराजयेनापसरामि । एषा पुरो दृश्यमाना किं सरसी उतान्यत् किमपि वस्तु । अन्यत् किमपि घटपटादिकं भ्रमस्याप्यविषयम् । किमत्राप्यस्ति भ्रमः । उपरितनो भ्रमसञ्चयस्तिष्ठतु । भ्रम इति भवद्बुद्ध्यनुसारेण मयोच्यते । उक्तेष्वेकस्य वस्तुरूपत्वे तदवलम्ब्य मया स्थातव्यम्, अन्यथा पला-यनं क्रियत इति निर्बन्धः ॥

इति तद्वचनेन सरसीमवलोक्य पूर्वोक्तमनुस्मृत्य सादरमाह — सत्यमि-त्यादि । एषा सरस्येव, नात्र विमतिः । मन्य इति सामान्यप्रतीतिरेव न, एतत्स्वरूपावलोकने विशेषनिश्चयोऽपि जात इत्याह — इयमेवेत्यादि । इयमेव भगवता भृगुणा निर्दिष्टा करतलोदकनामधेया सरसीत्यन्वयः । विशेषप्रतीतेर्निमि-त्तमाह — माणिक्यभूतलगता माणिक्यमयीमधोभूमिमाश्रिता । मणिभङ्गतोया मणिभङ्ग इव भग्नमुक्तामणिरिव तोयं यस्याः । भङ्गशब्देन "भावानयने द्रव्यान-

---

१. 'मि (प' इति घ. पाठः २. 'सा स' इति क-घ पाठः. ३. 'त्यमेषा' इति क-घ. पाठः.

अद्यापि भाति सरसी सरसीरुहाक्ष-
हस्ताम्बुजन्मतलमध्यविवर्त्तिनीव ॥ ७ ॥

**विदूषकः**---(क) जइ एव्वं अण्णं किं पि भमं दंसेमि । (परिक्रम्याग्रतो निर्दिशन्) एसो सो जळसेळो । एदं आळेक्खं । एदं पि किं सच्चं ।

(क) यद्येवमन्य कमपि भ्रम दर्शयामि । एष स जलशैल । एतदालेख्यम् । एतदपि किं सत्यम् ।

यनमि''ति भङ्गविशिष्टमणिर्लक्ष्यते । भग्नस्य भङ्गभावेन धावल्यातिशय इति भङ्गग्रहणम् । स्वच्छजलेत्यर्थ । अत एव माणिक्यभूतलगतेति तलस्य च दृश्यत्व प्रकाशितम् । कल्याणिनीति उत्पत्तिनिरूपणेन दर्शनेन च मङ्गलावहत्व कल्पयितु शक्यम् । अस्या सन्निवेशदर्शनेनैवमुत्प्रेक्षितु शक्यम् । करतलोदकमिति न भूतपूर्वत्वाश्रयेण नाम, अद्यापि सरसीरुहाक्षहस्ताम्बुजन्मतलमध्यवर्त्तिनीव भाति । अत्र माणिक्यभूतलगतत्वात् स्वच्छत्वान्मङ्गलावहत्वाच्च श्रीमन्नारायणकरतलस्य स्वतोऽरुणस्य सभ्रममङ्गलहेतुभूतस्य मध्यवर्तिनी महाबलेर्विश्वदानजलरूपिणी, न स्थानान्तरसङ्क्रान्ता । अत्रोत्प्रेक्षया सरस्या शोभातिशयो मङ्गलावहत्व च प्रकाश्यते । अत्र हस्ताम्बुजन्मेति पुरुषव्याघ्रादिवदुपमासमास, न तु हस्त एवाम्बुजन्मेत्यारोप । तलस्य हस्तसम्बन्धयोग्यत्व तत्र साधकम् ॥ ७ ॥

यद्येवमिति उत्प्रेक्षणस्य वस्तुरूपत्वमिद त्वयाङ्गीकृत यदि । यदीति निश्चितमेव वक्तव्य, नोपचारेण मम मोदकदान कर्तव्यम् । निश्चितत्वे सति तस्य भ्रमपङ्क्तिपरिगणन न कर्तव्यम् । अन्यत् किमपि भ्रमरूप दर्शयामि । भ्रममिति भवत्सिद्धान्तानुसारेण मयोक्तम् । वादिना परसिद्धान्तपरिग्रहो दोष । तथापि मदुक्तस्य वस्तुरूपत्वे भवदाक्षेप उक्त । अन्यथा पूर्वमेव पराजयोऽङ्गीकृत इति भ्रममिति मयोक्तम् । एष स जलशैल । स इति पूर्वोक्तसन्निवेशप्रकार । एष इति मम सिद्धान्तस्य भवदपलापेन न शैथिल्य जातम् । जलशैल पूर्वं राशिरित्येव मयोक्त, तत्र राशिशब्दस्य सञ्चयवाचकत्वे संशयो भवेत् । इदानीं स्फुटतया साधयितु शैल इत्युक्तम् । भ्रमान्तरमप्यनेन बोधयामि । मयोक्तमालेख्यमपरं दृश्यते ।

१. 'हि भ्रम' इति क-ग-घ पाठः.

राजा—वैधेय! सर्वमेतदपरमार्थम् । स्फाटिकोऽयं दिव्यजनगोष्ठीमण्डपः । इदं च स्वच्छस्फटिकभित्त्यनिवारितदर्शनमात्मतेजःपटलावगुण्ठितं किमपि दिव्याङ्गनारत्नम् । (पुनः सस्पृहं सावधानं निर्वर्णयन्) अहोतुखल्वप्रतिष्ठा लावण्यातिशयान्तराणां, यदद्यतनेन वेधसा सृजता पदार्थान्तरमिदं पराजिताः पुरातनाः प्रजासृजः । कुतः—

---

एवं प्रत्यक्षसाधिते कथं भ्रमस्यावसरः । एतदपि किं सत्यम् एतद् उक्तं जलशैला दिकम् । किं पूर्वोक्तशेषं वस्तुरूपम्, उतासत्यमिति वाक्यशेषः ॥

इति तस्य वचनं श्रुत्वा भ्रमाधिष्ठानरूपं स्फटिकमण्डपमवलोक्य आलेख्यभ्रमनिमित्तं नायिकारूपं च निजतेजःप्रसरतिरोहितं यावद्वस्तुरूपनिश्चयं सकौतुकमवलोक्य तद्भ्रमं प्रतिक्षिपति—**सर्वमेतदपरमार्थमिति** । किं तर्हीत्यत्राह—स्फाटिकोऽयमित्यादि । दिव्यजनगोष्ठीमण्डप इति विन्यासचातुर्येण तत्र दिव्यजनविहारयोग्यत्वाच्च कल्पितम् । इदं चेति । पूर्वस्य भ्रमरूपत्वं निरस्य दिव्यजनगोष्ठीमण्डपत्वं बोधितम् । इदं च तवालेख्यभ्रमकरं किमपि दिव्याङ्गनारत्नं स्फटिकभित्त्यन्तर्गतमपि स्फटिकस्य स्वच्छतयानिवारितनयनरश्मिप्रसरं बहिःस्थितैरपि द्रष्टुं शक्यम् । तर्हि किं निरावरणमिति चेत् तत्र । आत्मतेजःपटलेन सर्वातिसञ्चयेन न त्वाभरणादिप्रभया अवगुण्ठितम् आवृतं झटिति नयनप्रसराविषयम् । अत्रावरणत्वेन कल्पितायाः स्फटिकभित्तेः स्वच्छतयावरणसामर्थ्याभावादतिगोपनीयस्यात्मनः स्वतेजःपटलेनावगुण्ठनं कल्पितमिवेत्युत्प्रेक्षा व्यज्यते । किमपीति दृष्टिपात एवानिर्देश्यमहिमत्व प्रकाश्यते । तथापि वस्तुस्वरूपमात्रं ज्ञातं दिव्याङ्गनारत्नमिति । अङ्गनारत्नमिति दृष्टिपात एव निश्चितम्, अन्यथानुपपत्त्या दिव्यत्वमपि । एवं वनितारत्ने दत्तदृष्टिरेव तद्भ्रममपास्य क्रमेण विचारविस्मयानुरागमिश्रं तदङ्गेषु तत्र तत्र लग्ने नयने प्रयत्नेनाकृष्य सर्वतोऽभिव्याप्य प्रथमं विस्मयानुबद्धरतिरसायनास्वादसहित वागारम्भानुभावरूपं गुणवर्णनं करोति । अहोतुखल्विति पृथग्वचनम् आश्चर्यमि-

१. 'भं दि' इति ख. पाठः. २. 'इम् अवलोक्य' इति ख पाठः. ३. 'न च नि' इति क. पाठः.

अम्लानामहिमोपरोधकलुषामम्भोरुहाणां श्रियं
दीप्रां दीपशिखामकज्जलतमोलेशामनुष्णार्चिषम् ।

---

त्येवार्थः । किमाश्चर्यमित्याकाङ्क्षायां लावण्यातिशयान्तराणामप्रतिष्ठा । दृश्यत इति शेषः । एवं वा समन्वयः—लावण्यं वनितागुणेषु प्रधानभूतं नयनग्राहि । लावण्यं हि नामावयवसंस्थानादिव्यङ्ग्यं निखिलावयवव्यतिरिक्तं किञ्चिदेव तत्त्वान्तरमित्याचार्याः । "भूयिष्ठं तेन एवाङ्गैर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति गीयते" इति दिवाकरः । एवं लक्षितस्य गुणस्यातिशयः प्रकर्षः तस्यान्तराणि विशेषाः, न खलु लावण्यप्रकर्षः सर्वत्रैकरूपः, क्वचित् सौकुमार्यादिगुणान्तरसम्मिलितः, क्वचित् स्वयं प्रधानभूत इत्यादिप्रसरणप्रकारा विशेषाः तेषाम् । प्रतिष्ठा इयत्तास्थितिर्न दृश्यते प्रतिक्षणमवलोकने प्रत्यग्रतेव दृश्यते, अन्यत्र नैव दृष्ट, न दृश्यते, न द्रक्ष्यते चेत्यतिशयः । यदिति पूर्ववाक्यशेषः । लावण्यमित्युपलक्षणं गुणान्तराणाम् । अखिलवनितागुणानामियत्तास्थितिर्न दृश्यते यत् तद् एवमनुमातुं शक्यम् इदं पदार्थान्तरं सृजता अद्यतनेन वेधसा पुरातनाः प्रजासृजः पराजिता इति । इदमिति पुरो दृश्यमानमप्यपरिच्छेद्यतया पदार्थान्तरमित्येव वस्तु शक्यम् । सृजता आसन्नकालं निर्मितवता । वर्तमानसामीप्ये लट् । अनेन सृष्टेरपर्युषितत्वेन चारुत्वप्रकर्षो गम्यते । अद्यतनेन वर्तमानकल्पाधिकारिणास्माकं पितामहेनेति वात्सल्यातिशयो व्यज्यते । पुरातनाः द्विपरार्धरूपकाले नियतायुषोऽतीताः । प्रजासृजः सृष्टिकर्मनिरन्तरप्रवृत्ताः । पराजिताः न्यक्कृताः । एवंसृष्टौ पुरातनानां न सामर्थ्यम् । अतः अद्यतनेनास्मत्पितामहेन सर्वे निर्जिता इति कल्पयितुं शक्यम् । कुत एवं प्रकर्षकथनमित्यत्रोक्तं सृष्टेर्विशेषणं दिङ्मात्रेण प्रदर्श्य धेनुतिकन्यायेन फलमाह—अम्लानामित्यादि । इमामध्यक्षयन् पुष्पायुधः आत्मनो हृदयं चिराय निष्पत्राकुरुते । पुष्पायुधः मृदुना साधनेन विश्वविजयाद् गर्वितः । इमां पितामहसृष्टिसामानम् । अध्यक्षयन् पश्यन् । आस्तां सम्बन्धान्तरम् । आत्मनो हृदयं परहृदयपीडनसाधनेन चिराय निष्पत्राकुरुते अतिव्यथयति । स्वयमसक्तोऽन्यपीडासाधनत्वेनासावस्याः परिगृह्णाति । अत्रास्यास्त्वस्य महत्त्वेन प्रथममात्मनो हृदयं पीडयति । तत्रापि यदृच्छया ववश्योदय इति न । चिराय दर्शनानुबद्धा पीडा चिरकालमनुवर्तत्येवेत्यहं मन्ये इति हृदयसंवादेन व्यवहारः, न तटस्थवृत्त्या ।

स्त्रीसर्गप्रथमाङ्कुराकृतिमिमामध्यक्षयन्नात्मनो
निष्पत्राकुरुते चिराय हृदयं मन्ये स पुष्पायुधः ॥ ८ ॥

---

अयमथो ममानुभवगोचरः । स इति प्रसिद्धोऽप्येवमेतद्दर्शने वेधस्यपदवीमिव गाहते, किं पुनरन्य इति कैमुतिकन्यायेन सिद्धम् । निष्पत्राकुरुते "सपत्रनिष्पत्रादतिव्यथने" (५.४-६१) इति डाच् । डाजन्तस्य गतिसंज्ञया प्राक् प्रयोगः । "स्वलन्नारोपितं दुःखं निष्पत्राकरणं स्मृतम्" इति चाहुः । इमामित्युक्तमन्यस्त्रीव्यतिरेकं स्फुटयति–अम्लानामित्यादि । अस्याः प्रकारद्वयेन शोभायाः स्थितिः कान्तिरूपेण सर्वावयवेषु निलीनतया एकः प्रकारः, औज्ज्वल्येन माणिक्यादिदीप्तिवदङ्गान्याच्छाद्य बहिरपि प्रसृमरः एकः प्रकारः । तत्र पूर्वप्रकारः एवमारोपयितुं शक्यम् । अम्भोरुहाणां श्रियं जातौ बहुवचनम् अम्भोरुहजात्यनुबद्धां श्रियं कान्तिमेव, पद्मशोभायाः लक्ष्मीनिवाससम्बन्धेन सौम्यतया सारभानुबन्धेन च सर्वत्र प्रसिद्धिः तादृशीं पद्मशोभेवेयमिति प्रकर्षेणारोपः । अम्भोरुहाणां श्रियमिति व्यस्तरूपकम् । तत्र व्यतिरेकमाह –अम्लानां कदाचिदपि म्लानिरहितां सदा प्रत्यग्राम् अन्यस्यास्तदा तदा म्लानिर्दृश्यते दिनसङ्कोचादिभिः, तादृशीं न । तथा अहिमोपरोधकलुषां हिमोपरोधेन कालुष्यं च नास्त्यस्या इति व्यतिरेकविशिष्ट आरोपः । 'नो कल्पापायवायोरि'त्यादिवत् । बहिः प्रसृताया सर्वावयवाच्छादिकाया शोभाया निरूप्यमाणायां दीप्तां दीपशिखामिव दीप्तां वातादिभिरव्याकुलितां सदा दीपनशीलां दीपज्वालामेव । तत्रापि व्यतिरेकः अकज्जलतमोलेशाम् अन्यस्याः कज्जलकृतेन तमसा सम्बन्धो नित्य एव, अस्याः कलङ्कलेशोऽपि नास्ति । तथा अनुष्णार्चिषमित्यपि व्यतिरेकः । अनुष्णेऽप्यौज्ज्वल्ये अर्चिषां तेजःप्रसराणाम् औष्ण्यं नास्ति, प्रत्युत स्पर्शानन्दकरत्वमेव, अन्यस्या उष्णतया दाहो भवेत् । द्विप्रकारे शोभास्वरूपे निरूप्यमाण एव विशिष्टारोपयोग्याम् । ईदृशस्य सौरूप्यस्य विवरणाशक्यत्वात् सर्वगुणसमष्टिरूपेण विशिनष्टि–स्त्रीसर्गप्रथमाङ्कुराकृतिं, किं बहुनोक्तेनेति शेषः, स्त्रीसर्गस्य स्त्रीमजनपदार्थसृष्टेः प्रथमाङ्कुरः व्यक्त्यन्तरनिदर्शनत्वेन प्रथमं परिपूर्णमसम्प्रदानं स्वरूपमाकृतिर्यस्या ताम् । अयस्योनिर्माणे प्रतिमानरूपमेतस्या रूपमित्यर्थः । सर्वजनहृदयमोहनस्य मदनस्यापि हृदयम् एतद्दर्शने क्षुभ्यत्येवेति प्रकर्षकथनेन विस्मयानुबद्धा रतिः प्रकाश्यते ॥ ८ ॥

**विदूषकः** — (क)भो! जिस्सें तं पदजुअळं कण्णउरो अ, जइ इअं सा अ एका भवे, सुट्ठु संपज्जइ ।

**राजा** — को जानीते विधिविलसितानि । अप्रकाशं स्थित्वा स्वैरालापैरमुष्या एव निश्चिनुमः ।

(तथा कृत्वा स्थितौ)

**नायिका** — (सविषादम्) (ख) धिक्खु मं जाए अप्पच्छन्देण तं

(क) भो यस्यास्तत् पदयुगलं कर्णपूरश्च, यदीयं सा चैका भवेत्, सुष्ठु सम्पद्यते ।

(ख) धिक् खलु मां, ययात्मच्छन्देन तं जनमभिसरन्त्या कन्यकाजनविरुद्धमा-

एवमस्य वचनेनाकारेण च तस्याः सस्पृहत्वमाकलय्य नर्मसचिवश्चित्तानुसारेण तदिच्छां पोषयति — भो इत्यादि । भो मदुक्तिं प्रत्यवहितेन भवितव्यम् । यस्यास्तत् पदयुगलं कर्णपूरश्च । केवलयोः पदवतंसकयोरसम्भवात् तत्सम्बन्धिनी काचिदस्तीति निश्चय । भवता सम्भ्रमेण सङ्कल्पशरीरमनुभूयते । तावता न कृतार्थता । अस्यामपि भवतो विरागो न ज्ञायते । तत्रैकस्या दृष्टिगोचरत्वेन अन्यस्याः सङ्कल्पमात्रेण स्पृहाविषयत्वेऽतीव वैषम्यम् । यदीयं सा चैका भवेत्, सुष्ठु सम्पद्यते "यस्यां मनश्चक्षुषो प्रवृत्तिस्तस्यामृद्धिः" इति कामसूत्रानुसारेण भोगानुगुण्यम् । अस्माकं परमप्रयोजनसिद्धेश्च न वैषम्यम् । अत एव ममापेक्षा ॥

एवमात्मचित्तानुसारि तद्वचनमाकर्ण्य दैवानुकूल्यमभिप्रेतसाधकत्वेनाशास्ते — को जानीते विधिविलसितानि । दैवस्य साम्मुख्यवैमुख्यादीन्यस्माभिर्ज्ञातुं न शक्यन्ते । प्राप्तानि सेव्यन्त एव । विधेरेवात्र साधकत्वं, न स्वल्पस्याप्यस्मत्पौरुषस्येति प्रकाश्यते । तथाप्येतन्मनोवृत्तिं ज्ञातुं यतितव्यम् । ततोऽप्रकाशं स्थित्वामुष्या एव स्वैरालापैर्निश्चिनुमः । अमुष्या एवेत्यन्योक्तेः स्ववचनस्य विश्वास्यत्वात् निश्चयदोषत्वम् । स्वैरालापैः विविक्ततया स्वच्छन्दप्रवृत्तैर्मनोवृत्त्यनुगुणैर्व्यवहारैः । एवमुक्त्वा तद्वचनश्रवणापेक्षी स्थितः ॥

अथ तस्याः सङ्कल्पपरिणतौ साक्षात्कृतमबुद्ध्वा विषादगर्भमात्मनिन्दापरं वचनं नायकस्य निरूढव्यभिचारिमुखेन मध्ये व्यभिचारिरागसूचनार्थं सख्योर्मध्ये त्रासजननार्थं च प्रतिपादयति — धिक् खलु मामित्यादि । अत्र कुत्सनयोग्यैव

१ 'एसे तं कण्णउरो तं पादजुअळं च त्ति' इति ग. पाठः । २ 'र ध ज इति ग. पाठ.

जणं अहिसरन्तीए कण्णआजणविरुद्धं आचरिअं ।

(सख्यो सत्रासमुरसि हस्तं दत्त्वा परस्परमवलोकयतः)

**राजा** — (सनिर्वेदं परामृश्य) अहोतुखलु ममापि नाम परपरामृष्टे वनिताजने प्रवृत्ते मनश्चक्षुषी । सखे! साधयामस्तावत् ।

**विदूषकः** — (क) भो ! एअदेसणिसमणेण पआवइणो वि ण सक्क परमत्थं जाणिदुं । ण एसा आइदी णिन्दणिज्जं कम्म कादुं परेइ । ता पुणो वि किञ्चि सुणिअ गच्छह्म ।

---

चरितम् ।

(क) भो ! एकदेशनिशमनेन प्रजापतेरपि न शक्यं परमार्थं ज्ञातुम् । नैष कृतिर्निन्दनीयं कर्म कर्तुं पारयति । तत् पुनरपि किञ्चित् श्रुत्वा गच्छामः ।

---

जाता । आत्मच्छन्देन स्वतः कन्यकाया अपरिणीतायाः पुरुषसङ्गमो विरुद्धः, ततोऽप्यभिसरणं, ततोऽपि स्वातन्त्र्येण । अन्यप्रेरणया चेत् तत्प्रेरणपारतन्त्र्यं वक्तुं शक्यं, तथा च न । तं जनं लोकोत्तरम् अनुचितकरणे शङ्कनीयम् । एवमभिसरन्त्या मया कन्यकानां निषिद्धमाचरितम् । अतोऽहमतिनिन्द्यैव ॥

इति तस्या दुर्विनयसूचकं वचनमाकर्ण्य भागान्तरे स्थिते सख्यौ अस्मत्प्रमादेनेयमीदृशी जातेति त्रासेन क्षुभ्यच्छ्वाससंरोधनार्थमुरसि हस्तं न्यस्येतिकर्तव्यतामौढ्यं परस्परं दृष्टिपातेन बोधितवत्यौ ॥

नायकस्त्वनुचितश्रवणेन स्वस्य सत्पथप्रवृत्तत्वात् झटिति निर्वेदेन विमुखो भूत्वात्मानमनुशास्ति — अहोतुखल्विति । आश्चर्यम् इदानीमेवं जातं ममापि नाम परदुर्विनयनिवारणबद्धदीक्षस्य कुत्सितमिदं कर्म । परपरामृष्टे परस्पृष्टे वनिताजने वनितात्वमेव केवलं सिद्धमित्यपि दोषः । मनश्चक्षुषी इति । मनःप्रवृत्तेः अतीवायोग्यत्वं, मनःपूर्वत्वं न चेच्चक्षुषस्तथा नेति मनसः प्रथमनिर्देशः । इति स्वचित्तप्रवृत्तिं निरस्य प्रायश्चित्तं प्रतिपादयति — सखे! साधयामस्तावत् एतद्दर्शनवचनश्रवणपरिहाराय दूरमपसरामः ॥

एतच्छ्रुत्वा नर्मसचिवः एकमान्तरालिकं विरागं निरुणद्धि — एकदेश इत्यादि । एकदेशनिशमनेन वक्तुर्व्यवहारेऽभिप्रायं ज्ञातुं सर्वज्ञस्य प्रजापतेरपि न

१. 'क' इति ग. पाठः. २. 'णोअक' इति क-ख-ग. पाठः.

**नायिका**— (निश्वस्य प्रत्याकलय्य) (क) कीस मए सङ्कप्पसङ्गमादो अत्ता अत्थाणे उवालद्धो।

**सख्यौ**— (सहर्षं) (ख) ऊससिअह्म।

**विदूषकः**— (ग) भो वअस्स! किं सुदं तुए।

**राजा**— (प्रतिनिवृत्य) न खल्वेतावता भवतः समाश्वासः। पश्य—

(क) कस्मान्मया सङ्कल्पसङ्गमादात्मा अस्थान उपालब्धः।

(ख) उच्छ्वसिते स्वः।

(ग) भो वयस्य! किं श्रुत त्वया।

शक्य, किं पुनरस्माकम्। अस्या व्यवहारो न च परिपूर्ण.। नच कस्यापि मुखप्रेक्षणेन वक्ति, स्वहृदये सञ्चिन्तितमर्थं किञ्चित् किञ्चिद् व्याहरत्येव। अतः सम्भ्रमेण तात्पर्यं जातु न शक्यम्। अन्यच्च। अस्या इयमाकृतिः उत्तमस्त्रीलक्षणपरिपूर्णा निन्दनीय निषिद्धाचरणरूपं कर्म कर्तुं न योग्या भवति "यत्राकृतिस्तत्र गुणा वसन्ती"त्याप्तवचनेनास्यामाकृतौ गुणानामेव सामग्र्यू, दोषस्य लेशतोऽपि संसर्गो न घटते। तत् पुनरपि किञ्चिच्छ्रुत्वेति। उक्तमर्थम् अन्यथा योजयति वा समर्थयति वेति वीक्ष्य गच्छाव॰। प्रवृत्तौ निवृत्तौ च भवतोऽतीव त्वरा। तद् गमनमेव घटते। मदपेक्षया द्वित्राणि पदानि श्रुत्वा गच्छावः॥

एव श्रोतृवैषम्यस्य झटिति निवृत्त्यर्थमुन्मादविवशायास्तस्याः सद्यस्तत्त्वनिरूपणेन वचन—कीस मए इत्यादि। कस्मान्मया आत्मा अस्थाने अनवसरे अधिक्षेपायोग्ये कर्मणि अधिक्षिप्तः। सङ्कल्पसङ्गमात् सङ्कल्पसङ्गे भ्रमेणान्यथा व्यवहृतं भ्रमहेतुत्वात् सङ्कल्पसङ्गमस्य हेतुत्वम्॥

एव परमार्थबोधेन भयनिवृत्त्या सख्योराश्वासः॥

भो इत्यादि। श्रुतं त्वयेति अनयोक्तमिति शेषः॥

इदानीं मम स्वजाज्ञानिरोधस्य साफल्य जातमिति कृतार्थतागर्भं तद्वचनमाकर्ण्य पुनरपि प्रतिनिवृत्य शङ्कान्तरमन्तर्निधाय तदुल्लासं शमयति—न खल्वित्यादि। अविषये मम मन. प्रवृत्तमिति वैषम्यमपगतमिति खलु तवाश्वासः। किमेतावता। अनेनेयमदुष्टेति सिद्धम्। इदमप्यपेक्षितम्। एतेनैव नाश्वासः। भवत इति मम वैषम्यमविज्ञाय किं श्रुतमित्युक्ते भवदाश्वासः सूचितः। न ममापि तस सन्तोष्टव्यम्। पश्य निरूपय निरूपणीय वैषम्यं त्वां बोधयामि।

१. 'स्यां क' इति क पाठः. २ 'आ न' इति घ पाठः.

आरूढप्रणयेन यूनि मनसा क्लान्तां क्वचित् कामिनी-
मेनां मत्पुरतो निधाय किरतः पौष्पानमून् मार्गणान् ।
पुष्पेषोर्यदि नाम शक्तिकलया मोहान्धकारस्पृशा
सम्भिद्येत सखे! ममापि हृदयं धैर्याय बद्धोऽञ्जलिः ॥ ९ ॥

**नायिका**—(क) सहि! मेणए! ।

(क) सखि! मेनके!

क्वचित् कस्मिंश्चित् कमपि लोकं वा देशं वालङ्कुर्वति । यूनि सफलयौवने अत्यंयां त-द्भावरुचिजनके । आरूढप्रणयेन परिपूर्णप्रेमप्रकर्षरूपप्रणयेन मनसा हेतुना । मन-स्तापस्य शरीरतापकरत्वात् क्लान्ताम् अवसन्नतनुलताम् । तादृशेन मनसोपल-क्षितां वा । अत एव क्लान्ताम् आसितुमप्यसमर्थाम् । कामिनीं भोगलालसां, न तु नीरसाम् । अत एवात्रारूढप्रणयत्वम् । एनां मदुक्तिं विना त्वयापि द्रष्टव्यैवदयाम् । मत्पुरतो निधाय त्वमिदं पश्येतिवत् मत्साक्षिकमवस्थाप्य । किरतः वर्षतः । पौष्पान् सदा प्रयोगवशीकृतान् । मार्गणान् मर्माभेदिनः । अमून् एतत्परिश्रमेण परिस्फुटम-नुमेयपातान् । पुष्पेषोः मृदुसाधनेन विश्वविजयामदेनेतिकर्तव्यतामूढस्य । शक्तिक-लया शक्तिलेशेन, न तु सामग्र्यमपेक्षितम् । यतो मोहान्धकारस्पृशा मोहो वैचित्त्यं स एवान्धकारः वस्तुनिरोधकत्वात् तत् स्पृशतीति तद्रूपिण्येत्यर्थः । अथवा मो-हान्धकारं स्पृशति परिगृह्णाति विषमिव वेध्ये हृदये निक्षेप्तुं तादृश्या । अत एव कलामात्रस्य भेदसामर्थ्यम् । ममापि तटस्थस्य एतत्प्रतियोगित्वेनानङ्गीकृतस्यापि । अङ्गीकृतस्य यूनो युक्तमेव । हृदयं मृदुतया स्वयमेव निवारयितुमसमर्थं सम्भि-द्येत । यदि नामेति पाक्षिकसम्भावनायां, तथा सम्भवेच्चेदित्यर्थः । अस्य निरर्गल-त्वेन अस्या रूपचातुर्येण मम हृदयस्य मृदुत्वेन चैवं सम्भवेद्यदि । सखे! इदं रहस्यं कथं त्वां न बोधयामि । अस्मिन् सङ्कटे प्रागेव रक्षितारमाश्रयामि । धैर्याय बद्धोऽ-ञ्जलिः "न स्वधैर्यादृते कश्चिदभ्युद्धरति सङ्कटादि"त्याप्तवचनानुसारेण धैर्यमेव पूर्वबन्धुं हृदयरक्षायै प्रार्थयामि, तदर्थमञ्जलिबन्धः । अन्यासक्तां प्रति मम मनः-प्रवृत्तिश्चेत् तन्निरोधाय धैर्यमवलम्ब्य तिष्ठामि । एवं वैषम्ये एवं स्थितावेवाश्वासो युक्तः, न केवलमेतद्विगुर्व्योति शङ्कागर्भं वचनम् ॥ ९ ॥

अथ मदनोन्मादतरलितायाः नायिकायाश्चित्तवैवश्यानुसारी निरर्गलः प्रलापः प्रतिपाद्यते—सखीत्यादि । क्रमेण बुद्ध्युपारोहे सहसा समाह्वानं करोति, तां दृष्ट्वेदं वक्तव्यमिति बुद्ध्या न ॥

मेनका—(क) किं आळक्खिदह्मि इमाए।

नायिका—(ख) कहिं मेणआ।

मेनका—(ग) सहि! सङ्कप्पो खु तवस्सिणीए मं सद्दावेइ।

रम्भा—(घ) (सेर्ष्यम्) ईदिसे वि मअणसंभमे इमाए अहं ण सुमरिआ।

मेनका—(ङ) सहि! मा कुप्प। असण्णिहिदा तुवं एदस्सिं उदन्ते। अहं किंपि अब्भन्तरा, तदो एव्वं आळविअं।

---

(क) किमालक्षितास्म्यनया।

(ख) क्व मेनका।

(ग) सखि! सङ्कल्पः खलु तपस्विन्या मां शब्दापयति।

(घ) ईदृशेऽपि मदनसम्भ्रमेऽनयाहं न स्मृता।

(ङ) सखि! मा कुप्य, असन्निहिता त्वमेतस्मिन् उदन्ते, अहं किमप्यभ्यन्तरा, तत एवमालपितम्।

---

आलक्षितास्म्यनयेति। शङ्कित आह्वाने॥

क्व मेनकेति। पूर्वोक्तं भ्रमरूपमिति स्वयमेव साधयति॥

सङ्कल्प इति। पूर्वं तिरोधानभङ्गशङ्कया आलक्षितास्मीत्युक्तिः। क्व मेनकेति वचनं श्रुतवत्याः सङ्कल्प एव मामाह्वापयति। तपस्विन्या ऋतुवृत्त्याः तस्यां वात्सल्येनोक्तिः। सङ्कल्प एवाह्वानस्य निमित्तम्॥

इति श्रुत्वा सर्वांरसे तुल्येऽपि मम बुद्ध्युपारोहो न जातः, अन्यथा ममाप्याह्वानं कुर्यादितीर्ष्यया रम्भाया उक्तिः ईदृशेऽपीति। अतिपीडया सखीजनसापेक्षत्वेऽपि अहं न स्मृता, (स्मृता) चेदाह्वानमपि भवेत्। तदैवाह्वानेन स्मरणं यल्प्यते। स्वन्धदशायां न स्मृतेति मम न खेदः। व्यसने स्मर्तुं युक्तं, तन्न कृतमिति॥

तस्या अनिष्टं मेनका परिहरति। एतस्मिन्नुदन्ते आरम्भात् प्रभृति त्वमसन्निहिता। अहं किंचिदभ्यन्तरा। मय्यप्यतीव विस्रम्भं न करोति। कदाचिन्मामप्यनुसरति। तत एवमुक्तं न त्वनान्यथा। तत् सखीं प्रति कोपं मा कुरु इत्यनुसरणप्रकारः॥

**नायिका**—(क) हिअअ! । कहिं वा हिअअं । (स्मृत्वा) आ तेण च्चिअ सुउमारेण मुसिअं । भअवं कुसुमाउह! तुवं किं पि पहरिदुं आअदो सि । तुह सराणं लक्खभूदं मम हिअअं सअलभुवणेक्कणाहस्स हत्थे पडिअं । जइ समत्थो सि तहिं एव्व गदुअ परक्कमेहि ।

**राजा**—(सस्पृह) यन्निमित्तोऽयमस्याश्चित्तविकारः स चेदत्र सन्निहितः, [2]स्याज्जन्मिनामग्रेसरः । कुतः—

(क) हृदय! । कुत्र वा हृदयम् । आ तेनैव सुकुमारेण मुषितम् । भगवन् कुसुमायुध! त्वं किमपि प्रहर्तुमागतोऽसि । तव शराणां लक्ष्यभूतं मम हृदयं सकलभुवनैकनाथस्य हस्ते पतितम् । यदि समर्थोऽसि तत्रैव गत्वा पराक्रमस्व ।

अथोत्तरोत्तरमसङ्गतप्रलापेन नायिकाया उन्मादपरकाष्ठा प्रकाश्यते—हिअअ इत्यादि । आ इति । क वा हृदयमिति निरूपणे विषयबोधेन तत्स्मृत्या आ इति स्मृतम् । तेनैव सुकुमारेण मुषितम् । तेनेति पूर्वमनुभूतेन । सुकुमारेणेति गुणान्तरालक्षण,स्पर्शसुखानुसन्धानेन सुकुमारेणेत्युक्तम् । एतद् हृदयमोषणे निमित्तम् । भगवन्! कुसुमायुधेति । भगवन् बहुमानयोग्योऽसि । यतः कुसुमायुध! कुसुमायुधैरेव विश्वजेता । किं प्रहर्तुमागतोऽसि मामिति शेषः । धनुःशरादिपरिकरपरिग्रहेण भवतः सन्नाहो ज्ञायते । तत्रासमीक्ष्यकारितया वीरत्वशैथिल्यं मा कृथा इति भवत्पक्षपातेन बोध्यसे । अन्यथा यथेष्टं करोतु किमेतेनास्माकमिति स्थातु शक्यम् । मम हृदयं लक्षीकृत्य प्रहर्तुं तवाध्यवसायः । तदत्र न सन्निहितम् । तर्हि तदन्विष्य ताडयामीति चेत् तदपि दुष्करम् । सकलभुवनैकनाथस्य हस्ते, न तु यस्य कस्यचिन्माण्डलिकस्य हस्ते । पतितं स्वहस्तगतवदतिविधेयम् । पतितमित्यनेन कदाचिदपि ततो न निवृत्तिः । अतो विरम । सर्वथा प्रारब्धं प्रति मम सामर्थ्यमिति चेत् तत्रैव गत्वा पराक्रमस्व । पराक्रमस्वेति साध्यसिद्धिर्भवेदिति न निश्चयः । मम हृदयापहारिणि निजशक्तिप्रकटनेनानुकूल्यं सम्पादयसि चेत्, तव सामर्थ्यं विश्वसिमीत्यभिप्रायः ॥

एवं तस्याः प्रणयचापलनिरर्गलम् उन्मादसंवलितं प्रलापमाकर्ण्यात्मानं तद्विषयत्वेनाजानन् तत्प्रणयनिमित्तं पुरुषं प्रशंसति—यन्निमित्त इत्यादि । अस्याः

१ 'अ । (स्मृत्वा) कहिं वा हिअअ । आ' इति घ. पाठः. २. 'स्याद् भवेद्' इति ग पाठः.

आयासितानामशरीरबाणै-
नितम्बिनीनां परिदेवितानि।
आत्मार्थमाकर्णयतां हि यूनां
समागमो नाम सुखान्तरायः ॥ १० ॥

विदूषकः——(क) भो! अळं दुव्विकप्पेहिं[1] । तुवं एव्व भुवणेक्कणाहसद्देणं [2]पडि[3]च्छिदो त्ति तक्केमि ।

---

(क) भो अलं दुर्विकल्पैः । त्वमेव भुवनैकनाथशब्देन प्रतीष्ट इति तर्कयामि ।

---

वनिताकुलतिलकभूतायाः । चित्तविकारः अनुरागवैवश्यम् । उपलक्षणं तत् प्रलापादेः । यं महापुरुषं निमित्तीकृत्य जातः । सोऽत्र सन्निहितः स्याद् यदि श्रोतृत्वेन वर्तमानो यदि । जन्मिनां जननवतां त्रिकालसम्बद्धानाम् । प्राग्रेसरः प्रकृष्टः अग्रेसरः उत्तमोत्तम इति यावत् । ततः परं कस्यापि प्रकर्षो नास्ति । तत्र जननफलसिद्धिमपेक्ष्य जन्मवैशिष्टयम् । फलञ्च सर्वकर्मणः सुखावाप्तिरेव । तच्चात्र सन्निधानप्रलापश्रवणादिनैव भवेत । तत् सामान्येन समर्थयति——आयासितानामित्यादि । आयासितानां वाङ्मनःकायकर्मसु वैवश्यं नीतानाम् । अशरीरबाणैः केवलं मदनशरपातैरेव, न त्वायासनिमित्तेनान्येन । नितम्बिनीनां समुचितरूपचातुर्याणां युवतीनाम् । स्वनिमित्तं परिदेवितानि अनुरागचिन्ताविषादौत्सुक्यशङ्काहर्षादिभावप्रेरितानि प्रलापवचनामृतानि श्रोत्रपात्रेण पिबताम् । यूनां सफलयौवनानाम् । समागमो नाम सुखान्तरायः सुखस्य विघ्नभूतः एवं प्रलापादिरेव सुखहेतुः तस्य निवारणात् सुखान्तरायभूत एव । अत एव नामेति कुत्स्यताप्रतिपादनम् । एतदुक्तं भवति । समागमे सुखं विप्रयोगे दुःखमिति सामान्येन लोकबुद्धिः । वस्तुतस्तथा न । तरुण्या आत्मनिर्वादश्चित्तलयः कान्तस्य सुखहेतुः । स आश्लेषपरिचुम्बनादिरूपे सङ्गमे तथा न प्रकाशते यथा प्रेमोन्मीलनमदनशरपातरणरणिकाचापल्यहृदयार्द्रीभावगुणवर्णनविषयान्तरवैमुख्यादिप्रलापेषु । ईदृशस्य सुरसस्य सङ्गमेन निरोधात् सुखान्तरायत्वमिति ॥ १० ॥

एवं यन्निमित्तोऽयमित्यादिना तदनुरागस्याविषयत्वं निरूप्य विकल्पगर्भं नायकवचनमाकर्ण्य तत्प्रतिक्षेपेण रतेः करावलम्बनं करोति — भो अलमित्यादिना ।

---

१. 'ण' इति क-ग. पाठः. २. 'पिच्छिदो त्ति' इति क. पाठः. ३. 'अत्तो त्ति' इति ग. पाठः.

**नायिका** — (सनिर्वेदम्) (क) केत्तिअं वा अत्ताणं खेदइस्सं । सो मणोरहदइदो सइ हिअअकिदाहिवासो वि मं णाणुकम्पइ । जस्स भअवदो पसादेण अहं उप्पण्णा, एसो सो कल्लाणवामणो सण्णिहिदो अज्ज मए भत्तिपुरुवं आराहिदो वि मं णाणुगह्णइ ।

**राजा** — (छोटिकां दत्वा) तदपि देवस्य सपर्याविधानमस्या एव हस्तकौशलमभूत् ।

---

(क) कियद्वात्मानं खेदयिष्यामि । स मनोरथदयितः सदा हृदयकृताधिवासोऽपि मां नानुकम्पते । यस्य भगवतः प्रसादेनाहमुत्पन्ना, एष स कल्याणवामनः सन्निहितोऽद्य मया भक्तिपूर्वमाराधितोऽपि मां नानुगृह्णाति ।

---

दुर्विकल्पैः अनिष्टैरस्थानपतितैः अलम् । कथं निषिध्यत इति चेत सकलभुवनैकनाथशब्देन प्रतीष्टः स्वीकृत इति तर्कयामि । अन्यस्य सकलभुवनैकनाथशब्दवाच्यत्वाभावात् । एवमहं जन्मिनां श्रग्रेसर इति वक्तव्ये स्वयमागता सम्पत् कथमन्यसम्बन्धित्वेन निरस्यत इति ॥

अथ नायिकाया उन्मादपरकाष्ठायां वैराग्येण देहत्यागोद्यमं प्रकाशयति— कियद्वेत्यादि । कियदित्यव्ययं, वाशब्दः पूर्वोक्तात् प्रकारान्तरद्योतकः । किं मदनहृदयादीनधिक्षिप्य । दुःखनिवृत्तेरुपायो दृष्टः । कियन्तं कालमात्मानं खेदकक्ष्यायां विनियोक्ष्यामि इयतैवालमित्यर्थः । कथमेवं निर्वृत्तिरङ्गीक्रियते इत्यत्राह— स मनोरथदयितः मनोरथमात्रेण दयित इति साक्षात्सम्बन्धाभावेन खेदो व्यज्येत । सदा हृदयकृताधिवास इति अस्मद्व्यसनं जानन्नपि नानुकम्पां करोति । पुनः यस्य भगवतः प्रसादेनाहं पूर्वमुत्पन्ना एष देवः कल्याणवामनो नित्यसन्निहितो मां नानुकम्पते इयं मदनुग्रहेण जाता तदस्याः समीहितं करोमीति न निरूपयति । पूर्वसेवाबलेन जन्मानुग्रहः, इदानीं न तथा सेवनम् इत्यपि न । अद्य मया अस्मिन् काले मनोरथसिद्ध्यपेक्षिते भक्तिपूर्वमाराधित इति ॥

तद्वचनं श्रुत्वा स्मृत्यभिनयपुरस्सरं वदति—तदपीत्यादि । देवदर्शने

---

१. 'दो हि' इति घ. पाठः. २. 'कदा' इति क. पाठः, 'कआदि' इति रा-ग. पाठः.
३. 'सा मं' इति क-ग. पाठः. ४. 'ओ' इति क-रा-ग. पाठः, 'दो सो वि' इति ग. पाठः.

**नायिका**—(क) तस्सिं एव्वं एदं दुक्खेक्कभाअणं सरीरहदअं उव-हारं करिस्सं। (सबाष्पगद्गदम्) हा अणाहा अहं सहीए मेण-आए रम्भाए अ पच्छिमाळिङ्गणसुहं अणासादअन्ती विव-ज्जामि। (उत्तिष्ठति)

**राजा**—अहो अत्याहितम् (उपसर्पितुमिच्छति)

**सख्यौ**—(ससंभ्रममुपसृत्य सास्रम्) (ख) सहि! सन्तं सन्तं पावं। प-डिहदं अमङ्गलवअणं। अणेआणि कप्पन्तराणि अह्मे आळिङ्गन्ती होहि।

(क) तस्मिन्नेवैतद् दुःखैकभाजनं शरीरहतकमुपहारं करिष्यामि। हा अनाथाहं सख्या मेनकाया रम्भायाश्च पश्चिमालिङ्गनसुखमनासादयन्ती विपद्ये।

(ख) सखि! शान्त शान्तं पापम्। प्रतिहतममङ्गलवचनम्। अनेकानि कल्पा-न्तराण्यावामालिङ्गन्ती भव।

---

साक्षात्कृतम्। अस्या एव हस्तकौशलमिति हस्तकौशलद्वारा बहुमतिः सूचिता॥

तस्सिं एव्वेत्यादि। भगवत्सन्निधावेवेति। असौ समर्थोऽपि नानुगृह्णाति। तदत्रैव शरीरं भगवदुपहारं करोमि दुःखैकभाजनत्वात्। अनेन नान्यत् फलं, तद् भगवदुपहारसाधनं करोमीत्यर्थः। एवं देहत्यागं निश्चित्य सखीवियोगखेदेन प्रल-पति—हा अनाथेत्यादि। पश्चिमालिङ्गनसुखमिति। इतःपरमालिङ्गनाभावान्मम नित्यसिद्धं सखीसमालिङ्गनसुखमपीदानीं न लब्धम्॥

इति प्रलप्योत्थानेन तदध्यवसायं ज्ञात्वा नायके सम्भ्रमेणोपसर्पितुमिच्छति सत्यन्यभागस्थितयोः सख्योः सम्भ्रमेणोपसर्पणानन्तरं तस्या अमङ्गलवचनस्य प्राय-श्चित्ततया शान्तिवचनं—शान्तं शान्तं पापमिति। अस्त्विति शेषः। पापेन खल्व-निष्टप्राप्तिः। अतस्तत् पापं शान्तमस्तु। अमङ्गलं प्रतिहतमस्तु। आशंसायां भूतवत् प्रत्ययः। अनेकानीति पश्चिममित्यनेनार्थे समावितं निरस्यति। अह्मे आवाम्। अस्मदालिङ्गनं तवानेककल्पान्तराण्यविच्छिन्नमस्तु इति॥

सासमाभ्यामध्यवसाये निरुद्धे निजाध्यवसायस्य ज्ञातत्वेन लज्जा॥

---

१. 'घ्य दु' इति प. पाठः. २ 'सगद्गदम्' इति ग. पाठः. ३. 'हद गु अ' इति घ. पाठः.
४. 'अह्मेहिं आ' इति क-ख. पाठः. ५. 'ङ्गिआ हो' इति क-ख. पाठः.

C1

**नायिका**—(क) अम्मो सहीओ ।[१] (लज्जां नाटयति)

**राजा**—(सानन्दम्) सखे! अन्यगतहृदयामेनामाभ्यामेव सखीभ्यामभ्युपपादयता विधिना साधु सम्पादितम् ।

**विदूषकः**—(ख) एदाणं सळ्ळावादो से अभिळासविसओ वि मण्णे फुडीहोई ।

**नायिका**—(स्वगतम्) (ग) इदाणिं एदाहिं मम भादुणो वेवस्सदस्स दंसणं पडिसिद्धं होइ । पुणो वि अत्तणो पभविस्सं ।

---

(क) अम्मो सख्यौ ।

(ख) एतासां सल्लापादस्या अभिलाषविषयोऽपि मन्ये स्फुटीभवति ।

(ग) इदानीमेताभ्यां मम भ्रातुर्वैवस्वतस्य दर्शनं प्रतिषिद्धं भवति । पुनरप्यात्मनः प्रभविष्यामि ।

---

अन्यगतहृदयामिति । अन्यो मरणाध्यवसायः तत्र गतबुद्धिम् । आभ्यामेव सखीभ्यामित्यनेनाध्यवसायस्य मूलोच्छेदेन मौतिः । आभ्यां सखीभ्यामित्यनेन एतदभिप्राये स्थातव्यमेवानया न स्वाच्छन्द्यमनुष्ठेयम् । अभ्युपपादयता घटयता । विधिनेति । विधिरेवात्र निर्वाहकः तदनुसार्येव पौरुषम् । साधु सम्पादितमिति । सर्वेषामेव वैषम्यशमनादिति शेषः ॥

एतासां सल्लापादिति । परस्परविस्रम्भकथनाद् अस्या अभिलाषविषयः भवता अन्यत्वेन निरूपितः मया त्वमिति निश्चितः । स्फुटीभवति प्रश्नं विना तटस्थवृत्त्या ज्ञातुं शक्यम् । तच्छृणुव इति शेषः ॥

अथ निरुद्धाध्यवसाया सा पुनरपि वैराग्यमजहती स्वयमेव निश्चिनोति—इदानीमित्यादि । भ्रातुर्वैवस्वतस्य दर्शनमिति परलोकप्राप्तिरुक्ता । पुनरप्यात्मनः प्रभविष्यामीत्यनेन सखीदर्शनेऽप्यात्मवैराग्यानुबन्धः सूचितः ॥

---

१. 'कः भो ए' इति ख.ग. पाठः. २. 'द्दिव्य' इति ख-घ पाठः. ३. 'ओम' इति प. पाठः. ४. 'इ ति । ना' इति ग.घ. पाठः. ५ 'वि अइ अ' इति ख. पाठः. ६. 'भवामि' इति ख. पाठः.

**सख्यौ**—(क) सहि! कीस तुए पाअडइत्थिआणं ओळम्बिअ मग्गं अकाळणेण अत्ता परिच्चत्तो। किं अह्मे पाणणिव्विसेसाओ तुज्झ मणोरहं पूरेदुं असमत्थाओ। को वा ऍत्थ जीवळोए दे जोव्वणरूवविब्भमप्पमुहाणं गुणाणं अविहेओ।

**नायिका**—(प्रकाशम्) (ख) अळं एदेहिं वअणेहिं मं पीडिअ। वळीओ खु हिअअसन्दावो। ओळम्बह मं।

**मेनका**—(अवलम्बते) (स्पर्शं रूपयित्वा) (ग) हद्धि एदाए अङ्गसंस-

(क) सखि! कस्मात् त्वया प्राकृतस्त्रीणामवलम्ब्य मार्गमकारणेनात्मा परित्यक्तः। किमावां प्राणनिर्विशेषे तव मनोरथं पूरयितुमसमर्थे। को वात्र जीवलोके ते यौवनरूपविभ्रमप्रमुखाणां गुणानामविधेयः।
(ख) अलमेतैर्वचनैर्मां पीडयित्वा। बलवान् खलु हृदयसन्तापः। अवलम्बेथां माम्।
(ग) हा धिग् एतस्या अङ्गसंसर्गाद् अतिसुकरो हुतवहोत्सङ्गप्रवेशः। सखि!

एवं तस्या देहपरित्यागाध्यवसायं ज्ञात्वा सख्योरधिक्षेपः—सखीत्यादि। असमत्सख्ये प्रथमं स्वबुद्धिकल्पनमेव न घटते किं पुनः कृत्यमिति भावः। कस्मात् त्वया विदुष्या कुलपालिकया। प्राकृतस्त्रीणां पामरीणां न्यायमवलम्ब्य हेतुं विनात्मा परित्यक्तः। प्राकृतस्त्रीणामुचितमिदम्—उद्बन्धनेन वा शिलापातेन वा जिह्वाविकर्तनेन वा देहत्यागः। तत्रापि कारणं विनेत्याधिको दोषः। किमावां प्राणनिर्विशेषे त्वद्व्यसनसंविभागिन्यौ तव मनोरथं पूरयितुमसमर्थे। मनोरथविषयस्यालभ्यत्वादिति चेत्, तदपि न युक्तम्। को वात्र जीवलोके भुवने। तव यौवनरूपविलासप्रमुखाणां गुणानामविधेयः, तेष्वनास्थावानित्यर्थः। सर्वथा त्वयानुचितं कृतम्॥

इति तदधिक्षेपमसहमानाह—अळमित्यादि। पीडयित्वा मत्पीडाशमनार्थं युवयोः प्रवृत्तिः। एतैर्वचनैः पीडैव भवति॥

एवं रोदनिस्सहाया अवलम्बने देहतापेन खिन्ना मेनकाह—हद्धीत्यादि।

ग्गादो अदिसुअरो हुदवहुच्छङ्गप्पवेसो। सहि! सरसीदो सरसीरुहपत्तं आणीय वीजेहि णं।

**रम्भा**—(तथा कृत्वा वीजयति)

**मेनका**—(क) सहि! णळिणीपण्णसमीरप्पसरं रुन्धइ थणंसुअं। ता अवणेहि एदं।

**नायिका**—(ख) अदिप्पआसो अअं पदेसो। ता को वि मं पेक्खे। ळज्जेमि अत्ताणं पआसेदुं।

**मेनका**—(ग) उम्मत्तिए! दक्ख अह्माणं मणोरहसिद्धिसम्पादइत्तअं संवरणं।

---

सरसीति सरसीरुहपत्रमानीय वीजयेमाम्।

(क) सखि! नळिनीपर्णसमीरप्रसर रुणद्धि स्तनांशुकम्। तदपनयेतद्।

(ख) अतिप्रकाशोऽय प्रदेश। तत् कोऽपि मां पश्येत्। लज्जे आत्मान प्रकाशयितुम्।

(ग) उन्मत्तिके! पश्यास्माक मनोरथसिद्धिसम्पादयितृ सवरणम्।

---

एतस्या अङ्गससर्गादतिसुकरो हुतवहोत्सङ्गप्रवेश। अग्निमध्यपतनादपि देहस्पर्शस्य तापकरत्वम्। तत् सरस्या नलिनीपत्रमादायेमा वीजय॥

एव नलिनीपत्रवीजने समीरणप्रसराय स्तनांशुकशैथिल्य प्रार्थयन्त्या सख्याम् 'अयमतिप्रकाश प्रदेश। तस्मात् कोऽपि पश्येत्। तन्नापनयामी'ति तदुक्ति प्रतिक्षिपति मेनका—उन्मत्तिके' इत्यादि। अशङ्कनीये शङ्कास्फुरणाद् भ्रान्तचित्ता त्व पश्यास्माक मनोरथसिद्धिसम्पादयितृ। वस्त्विति शेष। किं तदित्याकाङ्क्षायामाह—सवरणमिति साधारणपदम्॥

एवमुक्तो नायकस्य वितर्कापनयनाय नायिकाया सम्भ्रम प्रतिपाद्यते॥

सवरण पश्येत्युक्तौ अस्मन्मनोरथघटक सवरणाख्य नृप पश्येत्युक्त मत्वा 'क आर्यपु' इत्यर्द्धोक्तौ तस्या लज्जाविवशाया मेनका अस्या समानशब्दप्रयोग-

---

१ 'रोगुदु' इति प पाठ २. 'म' इति ग पाठ. ३ 'हि! रम्भे! ण' इति प पाठ ४ 'रा कदाइ को' इति ग. पाठ, 'सो को' इति क-ग पाठ ५ हस' इति प पाठ ६ 'दंभ इति घ पाठ

**नायिका**—(ससम्भ्रमं दिशो विलोक्य) (क) कहिं कहिं अय्यउ ।

(इत्यर्धोक्ते लज्जावनतमुखी तिष्ठति)

**मेनका**—(सस्मितम्) (ख) सहि! अळं अत्थाणे संभमेण । भित्तिभाअं उद्दिसिअ संवरणं ति मए भणिदं, णं उण दे हिअअट्ठिअं पुरुवंसप्पदीवं राएसिं ।

**रम्भा**—(ग) सहि! अच्चारूढो से मअणुम्मादो मं विहत्थअन्तो वि थाणाभिणिवेसो त्ति मम पीदिअरो संवुत्तो ।

**राजा**—(सप्रमादम्) श्रुतानि श्रोतव्यानि । हृदय! निरर्गलमिदा-

(क) क कार्यपु ।
(ख) सखि! अलमस्थाने सम्भ्रमेण । भित्तिभागमुद्दिश्य संवरणमिति मया भणितं, न पुनस्ते हृदयस्थितं पुरुवंशप्रदीपं राजर्षिम् ।
(ग) सखि! अत्यारूढोऽस्या मदनोन्मादो मां विहस्तयन्नपि स्थानाभिनिवेश इति मम प्रीतिकरः संवृत्तः ।

जनितं सम्भ्रमं ज्ञात्वा सस्मितं स्फुटीकरोति—सखीत्यादि । अलमस्थाने सम्भ्रमविषये । मयार्थान्तरमुद्दिश्य भणितं, त्वयान्यथा निरूपितम् । भित्तिभावमुद्दिश्य भित्तिरूपं पदार्थमुद्दिश्य मया संवरणशब्दः प्रयुक्तः, न खलु ते हृदयदयितं पुरुवंशप्रदीपं राजर्षिम् उद्दिश्येति शेषः । हृदयदयितत्वस्य योग्यतासमर्थनार्थं पुरुवंशप्रदीपमित्यादि । अनुरूप एव तवानुराग इति ॥

तस्या वैरस्यं शमयति रम्भा—सखीत्यादि । अत्यारूढो देहवैराग्यावधि प्रवृत्तोऽस्या मदनोन्मादः । मां पूर्वमस्मिन् वृत्तान्तेऽपरिचिताम् । इदानीमतिधैर्यदर्येन विहस्तयन्नपि विषण्णां कुर्वन्नपि प्रीतिकरः संवृत्तः । कथं विषादकरस्य प्रीतिहेतुत्वमित्यत्राह—स्थानाभिनिवेश इति । उचितविषयेऽभिनिवेश इत्यनेन विषादं निरस्य प्रीतिं समुत्पन्नतीत्यनेन युक्त एव तवानुरागः । आवयोरत्र हृदयसंवादः । सलज्जा परित्यजतीति तदाश्वासनायोक्तिः ॥

एवं नर्मगर्भितोक्त्यनुसारेण प्रतीक्षणे तासां सख्यापेन तस्याः सम्भ्रमेण चानुरागभरं निश्चित्य निश्चित्य नायकः सप्रमोदमाह—श्रुतानीत्यादि । श्रोतव्यानि

१ 'कार्ण' इति ख पाठः. २ 'भणु दे' इति घ पाठः. ३ 'णि [illegible]' इति ग. पाठः ४ '[illegible]' इति ग पाठः ५. 'या थु' इति ख घ पाठः

नीमस्मिन् जने प्रथय प्रणयप्रवृत्तिम् । अपि च—

तुहिनगिरितरूणामद्य पुष्पावतंसान्
मदन! मलयवाताः पल्लवान् प्रेङ्खयन्तु ।
जनमिममभियोक्तुं भृङ्गकल्माषपुङ्खैः
कुरु कुसुमशरौघैः पूरिते पुष्पतूणी ॥ ११ ॥

श्रवणेन्द्रियसाफल्यजनकान्यपेक्षणीयानि वचनानि श्रुतानि । नातः परं किमपि शिष्यते । अस्मदपेक्षितस्य सर्वस्यैव सिद्धत्वात् । हृदय! इदानीममुष्मिन् जने प्रथय प्रणयप्रवृत्तिं विस्तारय । पूर्वमेव तदभिप्रायानिश्चयेन धैर्यस्य पादग्रहणं कृतम् । इदानीं निष्प्रतिबन्ध प्रसारय । नात्र सङ्कोचोऽपेक्षितः, विषयस्य लोकोत्तरत्वात् स्वाधीनत्वाच्च । अत एवामुष्मिन् जन इति बहुमतिपूर्वं निर्देशः । अपि चेति । त्वत्प्रवृत्तेः सहकारिणमपि सम्पादयामीति हृदयसमक्षं मदनं प्रेरयति—तुहिनगिरीत्यादि । हे मदन! इदानीं मलयवाताः पल्लवान् प्रेङ्खयन्तु । इदानीमिति । पूर्वं तव धनुरादानादिकं दृष्ट्वा विषयानिश्चयेन वितर्को जातः । इदानीं त्वया विषयस्य दर्शितत्वात् तवेोद्यमशेषमहमेव प्रार्थये । ससहायेन त्वया निश्शङ्कं प्रवर्तितव्यम् । प्रथमं मलयवातास्तुहिनगिरितरूणां पुष्पावतंसान् पल्लवान् प्रेङ्खयन्तु । भवानेव तेषां प्रेरक इति भवत्सम्बोधनेन कथनम् । जलधितरङ्गवत् पुनःपुनरुच्चावचत्वेन प्रभूतावयवत्वं प्रकाशयितुं मलयवाता इति बहुवचननिर्देशः । अत्र दक्षिणादिगन्तादागतानामतिदूरत्वेन सांक्रमिकगुणसामग्र्यं हीयेतेत्यत्रोपायमाह—तुहिनगिरितरूणाम् अत्र हिमवति निरन्तरस्थितानां तरूणां पुष्पावतंसान् तत्र तत्र स्फुटितपुष्पपरिशोभितान् पल्लवान् प्रेङ्खयन्तु चलयन्तु । वीजयन्त्विति न वक्तव्यं स्वतः सिद्धत्वादिति विशेषकथनम् । अत्र तुहिनगिरितरूणामित्युक्त्या शैत्यसम्बन्धः । पुष्पावतंसानित्यनेन सौरभानुबन्धः, पल्लवानित्यनेन तेषां मृदुतया तच्चलनेन मान्द्यं च प्रकाशितम् । अनेन निजगुणसामग्र्यसम्पादनेन निर्गलं तव साह्यं कुर्वन्तु । उपलक्षणमिदमन्येषां मदनपरिवाराणामुद्यमस्य । एवं भृत्यप्रवृत्तैरेवात्र योग्यत्वमिति बुद्धिं मा कृथाः । त्वमपि । इम जनमित्यभिनयपूर्वं सबहुमानमात्मनिर्देशः । इदानीं त्वदभियोगस्याहं पात्रभूतोऽवस्थितः प्रेरयामि, न

१. 'मुष्मि' इति क-पाठ्य पाठः.

**विदूषकः**—(क) एसा देव्वेण उवणीदा दे तणअणामहेअस्स अग्गिणो अरणि त्ति समत्थेमि ।

(नेपथ्ये)

सवनमुपगतं तृतीयमह्नः क्षपयत तीर्थजलेन किल्बिषाणि ।
त्वरयत करवीरपुष्पगन्धानहिमरुचेरुपनेतुमर्घ्यपूजाम् ॥ १२ ॥

(क) एषा दैवेनोपनीता ते तनयनामधेयस्याग्नेरराणिरिति समर्थये ।

भीरुः पलायनं करोमि । अतः कुसुमशरौघैः पुष्पतूणी पूरिते कुरु । किम्भूतैः । भृङ्गकल्मापपुङ्खैः भृङ्गैः सौरभानुसारिभिः कृष्णपुङ्खैः । अनेन पुष्पाणामपर्युषितत्वे शरीकरणयोग्यत्वं प्रकाश्यते । अहो तव शौर्येऽपि सौभाग्यं, यत् पुष्पमयं सकलं विजयसाधनमिति कुसुमशरौघैः पुष्पतूणी इत्यनेन व्यज्यते । पूरिते कुरु । पञ्चपाणां शराणां प्रयोगेणैवालमिति बुद्धिं मा कृथाः । तूणौ शरेषु पूर्णेष्वेव निरर्गलं प्रयोक्तुं शक्यम् । अन्यथा शरान्वेषणेन प्रयोगस्य विलम्बे प्रहारो न शोभत इति च पूरिते कुर्वित्युक्तम् । इदानीं भवदभियोगस्याहं पात्रभूतोऽस्मि । एवं मदननियोगेन प्रेयसीप्रेमसर्वस्वपात्रभूततया नायकस्य कृतार्थता व्यज्यते ॥ ११ ॥

एवं नायकप्रमोदस्य हस्तदानं करोति नर्मसचिवः—एषा दैवेनोपनीता, न त्वस्मत्पौरुषेण । अनेन विश्वास्यत्वं फलोत्पत्तिशेषत्वं च प्रकाशितम् । ते तनयनामधेयस्याग्नेररणिः उत्पत्तिस्थानम् । सर्वसाध्यशेषतया तनयस्याग्निशरोपः । तच्छेषतया अरणित्वारोपः । अनेनास्माकमेतत्परिग्रहेण कामानुबद्धो धर्मः सिद्ध्येदिति नायकस्याभिप्रायोद्दीपनायोक्तिः ॥

एवं नायिकायाः श्रवणदर्शनाभ्यां नायकस्य दर्शनेन च समुल्लसितेऽभिलापे सङ्कल्पगुणवर्णनादिभिरन्तरान्तरोन्मग्ननिमग्नैः शङ्कादिव्यभिचारिभिश्च परिपोषं गते नायकेनात्मविषयत्वेन निश्चिते नायिकया पदवतंसकवृत्तान्तेन किञ्चिदुन्नीते एकदिवसप्रयोज्यावसानेऽङ्कसमाप्तेश्चूलिकया कालं प्रकाशयति—सवनमित्यादिना । अह्नः तृतीयं सवनमुपगतम् । सवनशब्देनात्र सवनोचितः कालांशो लक्ष्यते । तद्बोधने फलमाह—क्षपयतेति । किल्बिषाणि वाङ्मनःकायसम्बन्धीनि क्षपयत विनाशयत । अहिमरुचेः अर्घ्यपूजामुपनेतुम् अर्घ्यरूपिणीं पूजामुपनेतुम् । करवीरपुष्पगन्धान् करवीरपुष्पाणि गन्धविशेषांश्च । त्वरयत त्वरितं सम्पादयतेत्यर्थः ॥ १२ ॥

१. 'समत्थेमि' इति क. पाठः.

**सख्यौ**— (ससम्भ्रमम्) (क) सहि! उट्ठेहि उट्ठेहि । अदिक्कमइ सुय्योपट्ठाणसमओ ।

**नायिका**— (आत्मगतम्) (ख) कहं एरिसं[1] अवत्थन्तरं तादस्स दंसेमि । कहं वा अणङ्गसरपीदसारेहिं अङ्गेहिं गन्तुं पारेमि । तह वि अळङ्घणीओ देवसमुदाआरो । (प्रकाशम्) सहीओ! एव्वं करह्म । (सह सखीभ्यां निष्क्रान्ता[2])

**राजा**— हा कष्टम् । अन्तर्हितेयमस्मन्मनोरथभूमिः । केन[3] खल्विदानीमशनिदारुणमुद्घोपितम्[4] । अथवा अवसानमेवैत[5]दस्मन्नयनभाग्यानाम् ।

(क) सखि! उत्तिष्ठोत्तिष्ठ । अतिक्रामति सूर्योपस्थानसमय ।

(ख) कथमीदृशमवस्थान्तर तातस्य दर्शयामि । कथ वानङ्गशरपीतसारैरङ्गैर्ग तु पारयामि । तथाप्यलङ्घनीयो देवसमुदाचार । सख्यौ! एव कुर्म ।

अनेन वचनेन सन्ध्यासमयनिश्चयान्नायिकाया गमनार्थं सखीवचन — सखीत्यादि । सम्भ्रमेण पुन पुन कथनम् । तस्य हेतु अतिक्रामति सूर्योपस्थानसमय इति ॥

एतद्वचनमाकर्ण्य विनयदेहसादाभ्या निरूपयति—ईदृशमित्यादि । ईदृशम् अश्रुवैवर्ण्यादिदूषित दुर्विनयद्योतकम् । कथ तातस्य दर्शयामीत्यनौचित्यशङ्का । अनङ्गशरपीतसारे मदनशरग्रस्तशक्तिभिरङ्गै कथ गन्तु शक्नोमि च । पादयोर्गमने न शक्ति । हस्तादीनामपि तदनुगुणमात्मवहने न शक्तिरित्यङ्गैरित्युक्तम् । तर्हि न गन्तव्यम् । तथापीति । वैषम्य सोढ्वापीत्यर्थ । देवसमुदाचार इति । अनेनाकरणे प्रत्यवाय सूचित ॥

एव स्वय निरूप्य पुन सखीवचनमनूद्य तस्या निर्गताया झटिति विषण्णो नायक सानुतापमाह—केन खल्विति । इदानीं तर्पितयोर्नयनयोरमृतपानस्य मध्ये । अशनिदारुणम् अशनिवज्झटिति तापकरम् । वचनमुच्चैर्घोषितम् ॥

1 'स अत्तणो अ' इति क-ग पाठ  2 '(सा णायिका)' इति क-ग पाठ
3 'केदा' इति ग. पाठ  4 'निपातदा' इति घ पाठ  5 'मेवास्म' इति क पाठ, 'मा' इति ग पाठ

विदूषकः— (क) एत्थ अदिणिअडे तवोवणे इसीहिं उग्घोसिअं।

राजा[2]— (विलोक्य) सखे! अवसित एवायमरुणसारथेर्दिवसदीक्षाधिकारः। कुतः —

अरुणमणिनिकाशैरभ्रसोपानमार्गै-
रवतरति दिनश्रीरम्बरादम्बुराशिम्।
मधुपरिमलवाही मल्लिकामञ्जरीणां
विधुरयति नभस्वान् पद्मिनीचक्रवाकीम्॥ १३॥

सखे! किमतःपरं करणीयम्।

(क) अत्रातिनिकटे तपोवने ऋषिभिरुद्घोषितम्।

केनेत्यस्योत्तरमाह—अतिनिकट इति। अतिनिकटत्वेन झटिति श्रवणयोग्यत्वम्। ऋषिभिरिति। तेषां कर्मैकपरत्वात् तैरुद्घोषितमिति सम्भावयामि॥

अथ कालं निरीक्षणेन निश्चित्याह—सखे! इत्यादि। अवसित एव परिसमाप्त एव। दिवसदीक्षाधिकारः दिवसदीक्षा दिवससम्बन्धिनी दीक्षा दिवसस्य नाडिकामुहूर्तादिकालावयवक्रमेण र'मापनैकपरत्व स एवाधिकार' स्वस्य नियतव्यापार' अवसित एव। अवधृतमर्थं कार्यमुखेन स्फुटयति—कुत इत्यादिना। दिनश्रीः दिवसशोभा। तरुणीत्यर्थादारोपः। अभ्रसोपानमार्गै अभ्रैरेव सोपानमार्गैरिति शाब्द आरोपः। अभ्राणां विभागेनोपर्यधोभागस्थित्या सोपानत्वारोपोऽवतरणसाधनतया। अरुणमणिनिकाशैः अरुणमणि' माणिक्यादिः तत्समानैरित्यनेनाभ्राणां सान्ध्यमारुण्य प्रकाशितम्। दिनपतेरस्तमये दिनशोभा सर्वदिगन्तव्याप्ता प्रतिनिवृत्य दिनपतिमार्गानुसारेण सङ्कोचमेत्याम्बुराशिमवतरति। अथवा दिनाधिष्ठात्री लक्ष्मी दिनावसाने अम्बुराशिमवतरति। 'तथा प्रदोषेषु च सागरस्थे'त्याप्तवचनात् सन्ध्यायां लक्ष्म्या• समुद्रे वसति सिद्धा, तदुच्यते। अन्यथास्तमयद्योतक दृश्यते। नभस्वान् मल्लिकामञ्जरीणां तत्कालविकस्वराणां मधुमिश्रपरिमलवहनशील। अनेन सान्ध्यत्वं स्फुटीकृतम्। अत एव पद्मिनीचक्रवाकी विधुरयति पद्मिनीगता चक्रवाकी विरहपीडितां करोति। सान्ध्यसमीरणसस्पर्शेन रात्र्यारम्भ निश्चित्य झटिति भर्तृवियोगदु.खमनुभवति चक्रवाकीत्येषमुक्तिः।

१ 'द ि ।' इति क-ग पाठ   २ 'जा स' इति क. पाठ

अथ तृतीयोऽङ्कः ।

( ततः प्रविशति होमसाधनहस्तस्तापसकुमारः )

तापसकुमारः—( सविस्मयम् ) अहोतुखल्ववाङ्मनसगोचरमद्भुतानुभावस्य महाराजसंवरणस्य विक्रमविलसितम् । तथा ह्यनिर्देश्यैराधिभिरतिक्षामशरीरस्यापि तस्य—

निर्भिद्यन्तां त्रियामाचरबलपतयः पर्वताकारकायाः
कामं शाताग्रशल्यस्फुरदनलशिखाभासुरैर्भल्लजालैः ।
आसीदाश्चर्यमेतद् यदुत शरमरुद्वेगविद्रावितास्ते
पर्यस्ताः केति विद्मो न हि वयमधुनाप्याश्रमाद् बाह्यभूमौ ॥ १ ॥

---

अथ तृतीयाङ्के नायकयोरयोगाविप्रलम्भे वर्णनीये अन्तरा प्रयुक्तेन विष्कम्भकेण सूचनीयो राक्षसवधादिकोऽर्थः सूच्यते । तत्राहार्यस्याप्यभिनयत्वेन तद्विशेषेण होमसाधनहस्तत्वेनैकोंऽशः सूचितः । तथा प्रविष्टो मुनिकुमार उक्तिभङ्ग्या सूच्यार्थं सूचयति—अहोतुखल्वित्यादि । महाराजसवरणस्य विक्रमविलसितम् अवाङ्मनसगोचरम् । विक्रमस्य विलसित प्रसरणम् । वाङ्मनसयोर्गोचरोंऽशोऽपि न विद्यतेऽस्मिन्निति विग्रहः । अन्यथा गोचर इति भवेत् । विक्रमप्रसरणस्यैकदेशोऽपि वक्तुं निरूपयितुं च न शक्यः, किं पुनः सकलमित्यर्थः । अद्भुतानुभावस्येति हेतु । अनुभावः प्रभावः । स विक्रमस्य कारणम् । तद्विलसितं निरूप्य अहोतुखल्वित्याश्चर्यबुद्धिः । तदेवाश्चर्यप्रयोजकम् इदानीन्तनेन विशेषेण समर्थ्यत इत्याह—तथा हीति । दृष्टमिति शेषः । अनिर्देश्यैः गौरवेण वक्तुमशक्यैः, अस्माकं तन्निर्देशे वैदेशिकत्वमिति वा । आधिभिः अतिक्षामशरीरस्यापि "मन शरीरयोस्ताप परस्परमनुव्रजेद्" इत्युक्त्या आधीनां शरीरक्षामताहेतुत्वम् । बहुवचनेन आधिहेतूनां बाहुल्य प्रकाशितम् । अतिक्षामतया अभिगान्तु कल्पयितु शक्यम् । असीति विग्रहः । तस्येति विरोधपरिहारः. विजिगीषुवत्त्व सिद्धम्. । भल्लजालैः त्रियामाचरबलपतयो निर्भिद्यन्ताम् । त्रियामाचराः

---

१. 'रःअ' इति प. पाठः.

आदिष्टोऽस्मि गुरुणा, यथा 'वत्स! कौण्डिन्य! संवरणशरपरामृष्टानां पिशिताशिनां परिग्रहास्तं प्रति प्रकाशं प्रहर्तुमक्षमा मन्ये मायाः प्रयुञ्जीरन् । अतस्तत्प्रशमनकराय कर्मणे कुशपूलीर्बिल्वसमिधः सितसरोरुहाणि च समुपाहरे'ति । उपयुक्तप्रायहोमसाधनत्वादाश्रमोपशल्यानां दूरादानीतोऽयं भारः । अतः खल्वतिक्रान्तमहः । प्रक्रान्तः प्रदोपसमयः । ( समन्तादवलोक्य ) अहो पतत्रिणाम-

स्वतो दुर्जयाः, तेषां बलपतयः सेनापतयः । पर्वताकारकाया इति भेददैषम्यहेतुः । शातामशल्यैः स्फुरदनलशिखाभासुरैश्चेति विग्रहः । अन्यथा शातामशल्यत्वं निर्भेदानुगुणं गुणीभवेत् । भल्लः क्षुद्रिकाकारफलः स्थूलकायनिर्भेदनानुगुणः, तत्सन्नद्धः निर्भिद्यन्ताम् । तत् प्रयोक्तृशक्त्या साधनपौष्कल्येन च घटताम् । तदनि(च्छ)याप्यनुमोदामह इति कामनिरुक्तम् । नैतदाश्चर्यम् उक्तादेव हेतोः । किं पुनस्तदित्याह—आसीदाश्चर्यमिति । एतद् वक्ष्यमाणम् । शरमरुद्भिर्विद्राविताः, न स्वयं, निरवशेषं निधनानत्वात् । ते आश्रमाद् बाह्यभूमानिति निश्चयः । तत्र व्याप्ते देशे कुत्र पर्यस्ताः निरस्ता इति । वयम् अत्रस्थाः । अधुना दिनान्ते । अन्विच्छन्तोऽपि न विद्मः शत्रवो हन्यन्ताम्, आश्रमदूषणं परिहर्तुं महाकायाः कुत्र निरस्ता इति न विद्म इत्याश्चर्यम् ॥ १ ॥ एवं राक्षसवधं राज्ञो विरहकार्श्यं च सूचयित्वा स्ववृत्तिमाह — आदिष्ट इत्यादिना । वत्सेत्यादि तदादेशप्रकारः । संवरणेत्यादिनोपरितनो मोहिनिकाद्युपक्रमः सूचितः । अतिक्रान्तमहरित्येतालम् । प्रक्रान्तः प्रदोपसमय इति प्रदोषवर्णनोपक्रमः । तपस्विना दृश्येषु दृष्टिपातो वस्तुविचाराय । अतः समन्तादवलोकनेन सिद्धमाह—अहो इति । मायाप्रभाव इति शेषः । पतत्रिणामपीति । तिरश्चामपीति विवक्षित, तद्विशेषाणां तद्दर्शनेन पतत्रिणामित्युक्तम् । अतिक्रूरगः अतितुच्छः । संसारवर्गः एवमपारनश्वरादिः । केऽपि जीवननामाभोगा, न निरवधि-पेक्षिणामित्यपिशब्दार्थः । दृश्यत इति शेषः । तच्चार्ति दर्शनपूर्वकं समर्थयति—

१. 'मल्ल' इति ख-ग. पाठः, 'मनाय' इति क. पाठः.

प्यातकृपणः संसारधर्मः । तथा ह्यमुष्मिन् सरसि—

अर्द्धाभ्युद्गतपत्रकं परिलुठत् पत्रेषु पङ्केरुहां
प्रायः पोतकजातकं कुररिकाः पक्षैः समूहन्त्यमूः ।
अन्तःसुप्तमधुव्रतां शिशयिषुः शीतांशुसङ्कोचितां
भृङ्गी दत्तदलार्गलां कमलिनीं पर्येति पर्युत्सुका ॥ २ ॥

(परिक्रामन्नग्रतो विलोक्य) अये असौ राजर्षिः सवयस्यः संरम्भदूषितमुखश्रीरित एवाभिवर्त्तते। तन्नायमाशीर्वादावसरः । साधयामि तावदाश्रमपदम् । (निष्क्रान्तः)

विष्कम्भकः ।

---

तथा हीत्यादि । अस्मिन् सरसि । कुररिकाः पक्षिणीविशेषाः । पोतकजातकं पक्षैः समूहन्ति कवलीकृत्य पुञ्जीकुर्वन्ति बाहुल्येन । पङ्केरुहां पत्रेषु परितो लुठत् परिवर्तमानम् । यतः अर्धाभ्युद्गतपत्रकं पत्राणामर्धोद्गतत्वादुड्डयनासमर्थमित्यर्थः । तत्र जलपतने मत्स्यादिग्रहणशङ्कया समूहीकरणम् । अत्र पुत्रवात्सल्यं संसारधर्मः । अन्यत्र भृङ्गी कमलिनीं कमलम् । अत्र कमलवाची कमलिनीशब्दः । *'नलिनी पद्मिनीत्याद्याः पद्मस्तम्बे सरस्यपी'ति वचनात् । पर्येति परित एति, न प्रविशति । यतः शीतांशुसङ्कोचितां शीतांशुना दिनावसाने सङ्कोचं नीताम् । अत एव दत्तदलार्गलां कृतदलार्गलबन्धाम् । अनेन शयनागारत्वं गम्यते । तर्हि (कं ? किमर्थं) पर्यटनं, पर्युत्सुका, बन्धेऽप्यौत्सुक्येन परिभ्रमत्येव । किमर्थमौत्सुक्यं, शिशयिषुः शयनापेक्षिणी । तर्ह्यन्यत्र शक्यं तद्, अत्राह—अन्तःसुप्तमधुव्रतां निजकान्तस्य पूर्वं प्रविष्टस्यान्तः स्वापस्तत्र निर्बन्धहेतुः । शिशयिषुरिति भोगेच्छाकथनानौचित्येनोक्तिरिति पतिवात्सल्यं संसारधर्मः ॥ २ ॥ एवं सन्ध्यां वर्णयित्वा राज्ञोऽवस्थाविशिष्टं प्रवेशं सूचयति—अये इत्यादि । संरम्भेण दूषिता अपसारीकृता मुखकान्तिर्यस्य सः सवयस्य इत एवाभिवर्तते ।

---

१. 'ते । नाथ' इति प. पाठः.

---

* 'बिसिनीप्रभिनीत्याद्याः पद्मस्तम्बे सरस्यपि' इति माद्यः.

(ततः प्रविशति राजा विदूषकश्च)

राजा—(ससंरम्भम्) आः दुरात्मन्! अङ्गजन्मजनङ्गम!

मत्वा मामस्त्रजालक्षपितसुरगणप्रत्यनीकं तृणाय
श्लाघां मोघावसानामतनुमतनुतावर्मितस्त्वं तनोषि।
कच्चिन्नालं त्वदीया हरनयनशिखिप्लोषसंक्षोभलघ्वीः
कामं कन्दर्प! शक्तीर्मुषितमुनिधृतीर्मार्गितुं मार्गणा मे ॥ ३ ॥

---

तन्नायमाशीर्विवादावसरो व्याक्षिप्तचित्तत्वात् सन्ध्यासन्निधानाच्च। एवं सवयस्यस्य कुपितस्य राज्ञः प्रवेशं सूचयित्वा निष्क्रान्तः॥

अथ नायको नायिकां प्रति नवोदयमनुरागमवलम्बमानोऽयोगविप्रलम्भोचितचिन्तानिश्वासजागरक्षामतासन्तापविवशीकृतः चित्तविभ्रमरूपमुन्मादमवलम्बमानः ससंरम्भं मदनमधिक्षिपति—आ इत्यादि। दुरात्मन्! अनुचितप्रवृत्त्या तव दौरात्म्यमवगम्यते। अत एव मम कोपः। अङ्गजन्मजनङ्गम! अशुद्धा(त् पा)पादङ्गाज्जननात् जनङ्गमविशेष एव त्वम्। जनं जननमात्रं गच्छति, न कमपि संस्कारमिति जनङ्गमश्चण्डालः। अनुचिताचरणेनाशुद्धजन्मतया संस्कारहीनतया च चण्डालविशेष एव त्वमित्यधिक्षेपातिशयः। अनुचिताचरणं प्रकाशयति—मत्वेत्यादि। मां तृणाय मत्वा अतनुं श्लाघां त्वं तनोषि। अहो मौढ्यस्यातिशयः। अस्त्रजालैः क्षपिताः हिंसिताः सुरगणप्रतिभटाः तैरवध्या येन तादृशं मां तृणवदनादृत्येति "प्रकृष्टकुत्सितग्रहणं कर्तव्यम्" इत्यस्य प्रायिकत्वान्नञोऽभावः। मम नेयमात्मस्तुतिः। मूढं भवन्तं बोधयितुमेवमुक्तम्। एवं पर(र?)निरसनमेव न। श्लाघाम् आत्मन इति शेषः। तत्राप्यतनुम् "आत्मप्रशंसा मरणं परनिन्दा च" इति मुनिवचनमपि त्वया न श्रुतम्। अतनुतावर्मितः अशरीरतयाच्छादितस्वरूपः। अतनुता मम रक्षा, तत् किं मां प्रति क्रियत इति तवाभिमानः। मोघावसानाम् अवस्तुपर्यवसायिनीम्। अङ्गस्याभावे केन मोघत्वमिति चेत्, त्वदीयाः शक्तीः अंशेन तत्र तत्र निलीनाः, न त्वेकगौरवेण समुदिताः। यतो हरनयनशिखिप्लोषसम्भ्रमेण लघ्वीः निर्वाणाङ्गारप्रायाः। कामं पर्याप्तं यावत्फलोदयम्। मार्गितुं मम मार्गणाः कच्चिन्नालं, शक्ता एव। देहं बाधितुमेव शक्तिः, स तु मम नास्ति, अतः किं मां प्रति करोषीति बुद्धिं मा कृथाः। मुषितमुनिधृतीः, न तु विक्रमानुगुणाः। अत एव दण्ड्याः ॥ ३ ॥ एवं मदनमधिक्षिप्य पुनः [illegible]

(पुनः प्रत्याकलय्य) हन्त धिङ् मामनवस्थितवचसम्। सकृदभ्यनुज्ञातपराक्रमोऽयं मयि तपस्वी। तदनुनयामि तावदेनम्। भगवन्! मृष्यतामयमपराधः। एतावत्तु भवन्तमभ्यर्थये—

अभिनवसहकारैः षट्पदालीढसारै-
रलमलमतिलोलैर्दाक्षिणैर्मारुतैर्वा।
यदि कुवलयनीलैरद्य शक्नोषि तस्याः
प्रहर कुसुमधन्वन्नायताक्ष्याः कटाक्षैः ॥ ४ ॥

---

वदति। भ्रमकोऽवान्तरालम्बनमेवात्र प्रत्याकलनं न तत्त्वनिरूपणम्। हन्तेति विषादे। धिङ् मामिति। अहमेव कुत्सनीयः। अनवस्थितवचसम् अस्थिरवचसं पूर्वापरविरुद्धभाषिणमित्यर्थः। तदेव स्फुटयति—सकृदिति। एकवारं मद्विषये अनुज्ञातपराक्रमः 'तुहिनगिरी' (अङ्क. २ श्लो. ११) त्यादिना, तद्विरुद्धमिदानीं भाषणम्। तपस्वी ऋजुधीः। मदुक्तिं प्रमाणीकृत्य प्रवृत्तवानेव। इदं कार्यकरं न वेति न निरूपितम्। तत्रैवं न कर्तव्यमित्येव वक्तुं युक्तं, नाधिक्षेप इति पूर्वापरविरोधः। तद् ममापराधित्वादनुनयामि। तावत् प्रथमम्। पश्चात् साध्यं प्रार्थयामि। भगवन्! समग्रैश्वर्यसम्पन्न! विश्वोदयस्य त्वदधीनत्वात् त्वद्गौरवमहं जानामि। तदपराधः क्षम्यताम्। मर्षणे परिभवे च त्वादृशामेव सामर्थ्यम्। अयमिति। इतः पूर्वं मया नापराधः कृतः। अयमेक एव। अतः क्षन्तव्यम्। किं पुनरपेक्षितमित्यत्राह—एतावत्तु, नातीव प्रमेयविरोधः। अभ्यर्थये, न प्रेषयामि। भवन्तं पूज्यतमम्। अभिनवेत्यादि। "पुष्पतूणी कुसुमशरैः पूरिते कुरु" इत्येव मयोक्तम्। चूतबाणत्वात् त्वया तैरेव प्रहारः कृतः। तैरलमलम्। अभिनवत्वमेव सहकारकुसुमानां त्वया निरूपितं, न निस्सारत्वम्। तेषां न कार्यकरत्वं, षट्पदालीढसारत्वान्निरवशेषमास्वादितमकरन्दत्वान्निस्सारत्वम्। अतः अलमलम् अतःपरं न सकृदपि प्रयोक्तव्यम्। दाक्षिणैः मालयैर्मारुतैश्चालं, तेषां दोषान्तरं निरतम्, अतिलोलैः स्पृष्ट्वा धावद्भिरेव, न खलु यावत् साध्यं स्थितिपरैः। तर्हि पूर्वमेव किं न निरूपितमिति चेत्, तत्सन्निधानेऽमीभिरेवालमिति बुद्धिः। अतो न निरासः कृतः। त्वयापि तदेवाङ्गीकृतम्। तर्हीदानीं किं क्रियतामिति चेत्, अद्य

विदूषकः—(सनिर्वेदमात्मगतम्) (क) अहो अच्चाहिदं। एसो असङ्गदाणि पळविदुं पवुत्तो। अहं खु एदस्स अणङ्गामए दुव्वेज्जो विअ उवट्ठिएसु महावाहिसु उवक्कमं अआणन्तो अदिमत्तं सम्भमामि। उम्मूळिदो णेण णअरगमणवुत्तन्तो, जेण सअळं आणुअत्तं विसज्जिअं। एत्थ अडवीअं एआई अहं किं करिस्सं। होदु एव्वं दाव भणिस्सं। (प्रकाशम्) भो वअस्स! अअहावुरो दे वअणवदिअरो कादरेइ मे हिअअं। ता धीरो होहि।

(क) अहो अत्याहितम्। एषोऽसङ्गतानि प्रलपितुं प्रवृत्तः। अहं खल्वेतस्यानङ्गामये दुर्वैद्य इवोपस्थितेषु महाव्याधिषूपक्रममजानन् अतिमात्रं सम्भ्रमामि। उन्मूलितोऽनेन नगरगमनवृत्तान्तः, येन सकलमानुयात्रं विसर्जितम्। अत्राटव्यामेकाक्यहं किं करिष्यामि। भवत्वेवं तावद् भणिष्यामि। भो वयस्य! अयथापुरस्ते वचनव्यतिकरः कातरयति मे हृदयम्। तद्धीरो भव।

शक्तोपि यदि तस्याः कटाक्षैः प्रहर। अथ प्रहारे शक्तश्चेत् तत् प्रार्थये कालक्षेपमसहमानः। अथ प्रहारं प्रति यदि शक्तोपीत्युक्तं, न तु सर्वथा तत्र कोऽपि कल्पः। यतः कुसुमधन्वन्! मृदुना शरासनेन सर्वधानुष्कातिशायिन्! कुवलयनीलैः, न तु कुवलयत्वारोप सहमानैः। तेषां विलासशून्यत्वात्। भवतः कुसुमशरत्वमपि कथञ्चित् साम्यद्वारा सिद्धम्। विशेषत आयताक्ष्याः अक्षिकोणस्यैव कटाक्षत्वम् अतस्तद्दैर्ध्यमपि कटाक्षाणां शरीकरणोपयोगि। एव कटाक्षैः प्रहर भवत्कारुण्यमेव पूर्वं मयि मनोवृत्तेर्निमित्तम्। इदानीं साम्मुख्यं नेतुं प्रार्थये ॥ ४ ॥

एवं तस्योन्मादतरलं वचनमाकर्ण्य नर्मसचिवश्चिन्तयति—अहो इत्यादि - प्रमस्यातिशयं निरूप्य विषादः। अत्याहितम् अतिक्रूरम्। सार्वभौमस्यातिविदेशगमनम् अमात्यादिराहित्यं मदनोन्मादवैवश्यमिति सर्वमतिक्रूरमेव प्रवृत्तमिति नास्यावसानं दृश्यते। दुर्वैद्यः अशास्त्रज्ञः केवलचिकित्साप्रवृत्तः। महाव्याधिषु ज्वरकुष्ठभगन्दरादिषु। उपक्रम्यत इत्युपक्रमः कर्तव्यम् अन्यत्र चिकित्सा। आनुयात्रं परिजनः। वचनव्यतिकरः वाक्प्रवृत्तिः, परस्परसङ्घटनं वा। अधीरतास्य निमित्तमिति प्रकल्प्य धीरो भवेति प्रार्थनम् ॥

१. 'सो दाणिं अ' इति ख. पाठः. २. 'स्स। ए' इति क. पाठः.

**राजा** — (आत्मगतं सखेदम्) सखे ! सत्यमाह भवान् । वचांसि नाम मनस्कारमूलानि । तस्मिन्निर्मूलमुन्मूलिते तया तनुमध्यया कथमनाकुलानि प्रवर्त्तेरन् ।

**विदूषकः** — (सविषादम्) (क) एव्वं गदे किं दाणिं मे सरणं ।

**राजा** — (दीर्घं निश्वस्य) किमन्यत् । तदङ्गसंसर्गश्लाघनीयः स एव शुचिमणिमण्डपः शरणम् । आदिश्यताममुष्य पन्थाः ।

(क) एवं गते किमिदानीं मे शरणम् ।

सखे ! इति । मद्रूपम्यसर्वस्ववेदी कथमेवं वदसि । वचांसि नामेति । वचांसि मनस्कारमूलानि । नामेति प्रसिद्धौ । प्रसिद्धोऽयमर्थः शास्त्रादिषु । मनस्कारो विमर्शः । स एव मध्यमायाः शक्तेः प्रवृत्तिः । अनेन शब्देनायमर्थो वक्तव्य इति प्रथमं निरूप्य बुद्धौ पौर्वापर्यपरिकल्पनं कर्तव्यम् । तेन क्रमेण वैखरीशक्त्या स्थानादिविशिष्टवर्णादिरूपेण शब्दस्य प्रसरः । तत्र बुद्धिसंस्था मध्यमा शक्तिः । तया प्रयोगव्यवस्थाकल्पनम् । स एव मनस्कारः । तस्मिन्निर्मूलमुन्मूलिते निरवशेषमपहृते । मनस्यपहृते विमर्शापहरणमेव फलितम् । तया तनुमध्ययेति । मदुक्तिं विना त्वयापि दृष्टं तद्रूपचातुर्यम् । तनुमध्ययेति नात्रापहरणेऽनौचित्यमिति प्रकाश्यते । एवं स्थिते कथमनाकुलानि प्रवर्त्तेरन् उन्मत्तप्रलपितवदसम्बद्धत्वमेवैषां दृष्टम् ॥

एवं गते इत्यादि । भवत्येवं विषमामवस्थां प्राप्ते किमिदानीं मे शरणम् । मे इति भवतः पारवश्येन मयैकेन निरूपणीयम् । अतः किं शरणं व्यसनोपशमाय कमाश्रये इति तस्य विचारः ॥

एवं प्रणयिनीवियोगे किमिदानीं शरणं कालविनोदनोपाय इति तेन पृष्टे मत्वा कथयति — किमन्यदिति । तदङ्गसंसर्गश्लाघनीयः तदङ्गसंसर्गस्य त्रिविधैः परीत्येनालाभे आसनशयनादिषु तत्तनुलतासंश्लेषणातिसुभगः । स एव पूर्वमस्माभिस्तदाश्रयत्वेन दृष्टः । शुचिमणिर्धवलमणिः स्फाटिकमण्डपः शरणम् । विरहविनोदनायेति शेषः । तदादिश्यतामिति । नान्यत् किञ्चिदत्र वक्तव्यमित्यौत्सुक्यानुबद्धा त्वरा सूचिता ॥

१. 'खे । व' इति क्व. पाठः.

विदूषकः—(सप्रत्याशम्) (क) एदु एदु भवं[1] ।

(उभौ परिक्रामतः)

विदूषकः—(ख) एसो सो । पविसह्मे ।

(उभौ प्रवेशं नाटयतः)

राजा—(सर्वतो दत्तदृष्टिः सविषादम्) अहो अस्थिरता वस्तुसम्पत्तीनाम् । पश्य—

विहीनं पार्वत्या भसितसितमङ्गं पशुपते-
र्विना भागीरथ्या तुहिनधवलं धूर्जटिगुरुम् ।

(क) एत्वेतु भवान् ।

(ख) एष सः । प्रविशावः ।

अथ तेनोपदिश्यमानमार्गः स्फटिकमण्डपं प्रविश्य प्रियतमाधिष्ठितत्वेन तस्य निरन्तरानुसन्धानादिदानीमपि तथैव द्रष्टुं शक्यमिति कामिजनसुलभामाशां वहन् औत्सुक्येन समन्तादवलोक्य केवलस्य मण्डपस्य दर्शनेन विषण्णो वस्तूनामुत्कर्षस्य सामान्येनानित्यत्वं प्र(ति) विशेषप्रतिपादनायाह—अहो इत्यादि । अहो आश्चर्यम् । अनिष्टस्याप्युत्कर्षे आश्चर्यजनकत्वम् । वस्तूनां सम्पत्तिः समृद्धिः गुणवैशिष्ट्याद्रिरूपा । वस्तूनां बहुत्वात् तद्द्वारा सम्पत्तिबहुत्वम् । एकस्य वस्तुनो यादृशी शोभा रम्यता वा, तस्यैवोत्तरक्षणे सा विपर्यस्ता दृश्यते । इदमिदानीमस्माभिरनुभूयते । शुचिमणिगृहमधुना शोच्यं मन्ये । शुचिमणिना स्फटिकमणिना सङ्घटितं न तु केवलशिलानिर्मितम् । तदधुना शोच्यं मन्ये जानामि । अधुनेत्यनेन पूर्वमन्यथाज्ञानस्यापि ममैव कर्तृत्वमिति प्रकाशितम् । शोच्यमित्यनेन तत्कारणं मन्दशोभत्व लक्ष्यते । तत्र हेतुः—तया प्राणसमया शून्यमिति । शून्यं विरहितम् । घटशून्यं भूतलमितिवत् । प्राणसमयेति । एवंसम्बन्धस्य वस्तुनो निजसम्बन्धेन सौभाग्यसम्पादनसामर्थ्ये निरूप्यमाणे मम प्राणसमेति निश्चयो युक्त एवेति व्यज्यते । एवं मुख्यस्यापि वस्तुनो विशिष्टवस्त्वन्तरविरहे मन्दशोभत्वे उपमानस्य न यत्नसाध्यत्वमिति वहूपमानपरिग्रहः । पशुपतेः अङ्गमिति । पशुपतिः

१. 'व । (प)' इति क-ख. पाठः. २. 'ह्म । राजा प्रवेश नाटयन् सर्व' इति ख. पाठः, 'ह्म । राजा 'प्रवेश रूपयित्वा सर्व' इति घ. पाठः. ३. 'दृष्टिः) अ' इति घ. पाठः.

श्रिया दुग्धाम्भोधिं विगतामिव च प्राणसमया
तया शून्यं मन्ये शुचिमणिगृहं शोच्यमधुना ॥ ५ ॥

**विदूषकः** — (क) एसो ताए अहिट्ठिदपुरुवो दिव्वपरिमळुग्गारी तुह सहधम्मआरीहि फुळ्ळन्धएहि अहिळसिज्जन्तो अअं पदेसो । एत्थ उपविसिअ विणोदेहि अत्ताणं ।

---

(क) एष तयाधिष्ठितपूर्वो दिव्यपरिमलोद्गारी तव सहधर्मचारिभिः फुल्लन्धयैरभिलष्यमाणोऽयं प्रदेशः । अत्रोपविश्य विनोदयात्मानम् ।

---

संसारपाशबद्धानां मोचकः परमशिवः, तस्य निरवयवस्य सच्चिदानन्दरूपस्य नित्यसमवेतनिरतिशयशक्तिविश्लेषो न घटते, कथं पुनर्मन्दशोभत्वं, विश्वानुग्रहाय लीलया परिगृहीतविग्रहस्य तादृश्या शक्त्या विश्लेषोऽपि घटतामिति पार्वत्या विहीनं पशुपतेरङ्गमित्युक्तम् । असितसितमिति उपमेये शुचिशब्देन निर्दिष्टस्य धावल्यस्य व्याप्त्यर्थम्, तुहिनधवलमित्यपि । तथा भागीरथ्या विना स्वर्लोकगमनाद्वा भगीरथनयनाद्वा विनाभावः । धूर्जटिगुरुमित्यनेन स्वतो गौरवं प्रकाशितम् । श्रिया विगतं दुग्धाम्भोधिमित्यत्रापि दुग्धपदेनैव धावल्यप्रतीतिरिति पृथङ् नोक्तम् । अत्र त्रिविधोपमानपरिग्रहेण नायिकायाः सकलवनिताचूडामणित्वं पावनत्वं निरतिशयसौन्दर्यास्पदत्वं च क्रमेण प्रकाश्यते । इवशब्दस्य सर्वोपमानसाधारणत्वं चशब्देन द्योतितम् ॥ ५ ॥

एवं तस्य विषादगर्भं वचनमाकर्ण्याश्वासनाय प्रियतमाधिष्ठितं प्रदेशं निर्दिशति — **एष** इत्यादि । तयाधिष्ठितपूर्वमित्यनेन तदलाभे तत्सम्बन्धेनास्याप्याश्वासकरत्वमिति सूचितं ज्ञायते । दिव्यपरिमलोद्गारी दिव्यम् अमानुषं माल्याङ्गरागादिजनितं परिमलं बाहुल्येन प्रसारयन् । अत एव फुळ्ळन्धयेहि फुल्लन्धयैः भ्रमरैरभिलष्यमाणः प्रदेशः । तव सब्रह्मचारिभिः तेषामपि तदधिष्ठितत्वेन दिव्यपरिमलविशिष्टप्रदेशान्वेषणे निर्बन्धो दृश्यत इति मया सब्रह्मचारिभिरित्युक्तम् । प्रदेशप्रदर्शनस्य साध्यमाह — अत्रेत्यादि । आत्मविनोदनार्थमिहागमनं, तस्य न वैषम्यमित्यर्थः ॥

राजा—सखे! मा मैवम् । अमीभिः खलु—

धन्यैर्मधुकरराजैर्गेयाभिरिह प्रियाभिरुचिताभिः ।
भुक्त्वा भोगमभीष्टं विचरद्भिरहं न तुलनीयः ॥ ६ ॥

(उपविश्य दाहवेदनां भावयन्) मां प्रत्यहो विधेर्वैपरीत्यम् । स एवायमतिनिर्वाणकरत्वेन परिकल्पितो देशः सन्तापमतिदुस्सहं तनोति । सखे! न शक्नोम्यात्मानं धारयितुम् । तदमुष्मात् करतलोदकादानीय शिशिरवस्तूनि विरचय शयनीयम् ।

विदूषकः—(क) तह । (तथा कृत्वा) भो एत्थ सइदव्वम् ।

---

(क) तथा । भो अत्र शयितव्यम् ।

---

तव सहधर्मचारिभिरित्युक्तं प्रतिक्षिपति—मा मैवमिति । अमीभिः खलु मधुकरराजैरहं न तुलनीयः । खल्विति प्रसिद्धौ । मधुकरराजत्वेन प्रसिद्धा अमी "कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम्" इति वाल्मीकिनाप्युक्तम् । तेषां राजत्वमुपपादयति—गेयाभिः गायन्तीभिः । "भव्यगेय.. ."(३-४-६८) इत्यादिना कर्तरि निपातितः । इह भुवनराज्ये । उचिताभिः सदृशीभिः निरन्तराभ्यस्ताभिश्च । प्रियाभिः सह अभीष्टं भोगं भुक्त्वा यथेष्टं विचरद्भिः । न काप्यभीष्टस्य मकरन्दादेरलाभः । न क्वापि सञ्चरणनिषेध[1] । अत एव धन्यैः भाग्यवद्भिः । अहं न तुलनीयः राजत्वमपि मम हासास्पदमेवाभीष्टालाभे । गिरिकान्तारादिषु दिवानिशं परिभ्रमणादहमधन्य एवेति निर्वेदगर्भं वचनम् ॥ ६ ॥ एवमुक्त्वा तत्रोपविष्टो ज्वलनमध्यपतित इव सन्तापपीडामवलम्बमानो विधिवैपरीत्यं विमृशति—मां प्रतीति । विधेर्मां प्रति प्रातिकूल्यमाश्चर्यकरम् । वस्तुस्वभावस्यापि मा प्रत्यन्यथाकरणनिर्बन्धेन प्रातिकूल्यं ज्ञायते । अतिनिर्वाणकरत्वेन अतिसुखकरत्वेन सरसीतीरे स्फटिकमणिभिः परिकल्पितः स एव पूर्वनिर्मितप्रकारेणैव स्थितो निर्वाणकरत्वेन पूर्वमनुभूतश्चेदानीमतिदुस्सहं सन्ताप तनोति येन तूष्णीमासितुमपि न शक्य तादृश सन्तापं तनोति ।

---

१. 'कः (तथा' इति क-ख. पाठः.

**राजा** (शयनं नाटयित्वा पार्श्वतो विलोकयन्) §सखे! येन तस्याः शिशिरसमीरदानादुपकृतं, तेनैवामुना नलिनीपत्रेण वीजय माम् ।

(विदूषकः तथा करोति)

**राजा**—(स्मृत्वा सनिःश्वासम्) अयि प्रेयसि! तदानीमनेन नलिनीपत्रेण वीज्यमानायां त्वयि चोदितयापि सख्या विलोचने

एवमुक्त्वा शिशिरोपचाराय निर्दिशति—सखे! इत्यादि ॥

अथ तेन सम्पादितं शयनीयमाश्रितश्चिन्तासन्तापानुबद्धनिश्श्वासस्वेदरोमाञ्चबाष्पवेपथुविवशीकृतः प्रियतमानुसन्धानसध्रीचीनपूर्वावस्थासङ्कल्पनरसिकः पूर्वं तद्वीजनसाधनं कदलीपत्रमालोक्य तदेवात्मनः सुखकरं मत्वा निर्दिशति—सखे! इति । तवैव परिश्रमहेतुरहं जातः । तन्नियोक्ष्ये । येन तस्याः शिशिरसमीरदानात् स्वसम्बद्धस्य शीतलस्य वायोः समर्पणाद् उपकृतं, तदप्यस्मदुपकार एव, अस्माभिः कर्तव्यं कृतमनेनेति । तेनैव पूर्वोपकर्त्रा । अमुना सुकृतिना । नलिनीपत्रेण वीजय । नान्यस्यैवं सन्तापहरत्वमित्यवधारणम् । एवं तेन नलिनीपत्रेण वीज्यमानः पूर्वं तत्र शायितां सखीभ्यामाश्वास्यमानामात्मना बहिर्दृष्टां तां तरुणीं प्रत्यक्षवद् भावयन् निरन्तरानुसन्धानेन परिकल्पितं विस्रम्भमाश्रित्य तदानीन्तनावस्थानिवेदनाय सम्बोधयति—अयि प्रेयसीत्यादि । अयि आभिमुख्यं देहि । प्रेयसि! एवम्भूतं मां प्रत्यनिष्टाचरणं तव न शोभनम् । तदेव प्रकाशयति—तदानीं त्वयि सन्तापेन शायितायां सख्योश्च शिशिरोपचारेण पार्श्वयोरुपविष्टयोर्मयि रूपामृतपानलालसया बहिः स्थिते च, त्वयि अनेनेदानीं मदनुग्राहिणा नलिनीपत्रेण वीज्यमानायां सख्या चोदितयापि त्वया नोत्तरीयमपनीतम् । चोदितयापीति ननु स्वयमनवधानेन 'सखि! स्तनांशुकं नलिनीपर्णसमीरप्रसरं रुणद्धि, तदेतदपनय येन स्तनतटे समीरप्रसरो भवेद्' इति सख्या अनिवार्यवचनया चोदितया सन्तप्तयापि त्वया उत्तरीयं स्तनांशुकं नापनीतम् । तत्र विमर्शे नान्यो हेतुः स्फुरति । मम अनन्यापेक्षिणः त्वदेकशरणस्य विलोचने रूपामृतस्यार्द्धपानेनातितृषिते । विफलयितुम् अपरिपूर्णफले कर्तुम् इच्छन्त्या,

१. 'टयति । पा' इति क पाठः. २. 'क्य) ये' इति क. पाठः.

§ पदमिदं मूलकोशेऽस्पष्टमपि व्याख्यानुरोधान्निवेशितम्.

मम विफलयितुमिच्छन्त्या त्वया नोत्तरीयमपनीतम् ।
तथापि मम—

पश्चात्कृतस्फटिकभित्तिनिरोधयत्नै-
रप्यावृते नयनरश्मिभिरंशुकेन ।
प्रालेयपाण्डुकलधौतपयोरुहाभे
पर्युत्सुकैः पतितमेव पयोधरे ते ॥ ७ ॥

---

न त्वत्यन्तवैफल्यम्, अवश्यद्रष्टव्यस्यादर्शनाद् वैफल्यमेव फलितमिति तथोक्तम् । उत्तरीयस्यानपनयनेऽयमेव हेतुः—इच्छन्त्येति । इच्छैवात्र जाता, अभिलषितं न सिद्धम् । अस्मदुत्साहेन त्वदनिष्टमपि साध्यं निर्व्यूढमित्याह — तथापीति । तथापि त्वत्प्रातिकूल्ये सत्यपि । मम नयनरश्मिभिः ते पयोधरे पतितमेव । त्वत्प्रातिकूल्येन खिन्नयोर्नयनयो रश्मिभिः पर्युत्सुकैः प्रतिबन्धेन कालातिपातमसहमानैः । कथं स्फटिकमण्डपान्तः स्थिताया स्तनकञ्चुकवत्या मम पयोधरे बहिः स्थितैः पतितमिति तवानुपपत्तिश्चेद् बोधयामि — पश्चात्कृतस्फटिकभित्तिनिरोधयत्नैः स्फटिकभित्त्या निरोधः स्फटिकभित्तिनिरोधः, तत्र यत्न उद्यमः असौ मां मा द्राक्षीदिति, स पश्चात्कृतोऽन्यथाकृतो यैः स्फटिकभित्तिलङ्घनात् । अथवा पश्चात्कृतस्फटिकभित्तिनिरोधः पृष्ठतःकृतस्फटिकभित्तिनिरोधो यत्नः येषां तैः । आवरणान्तरं कथं निरस्तमिति चेत्, तत्र कार्यकरत्वेन नाङ्गीकृतमित्याह — अंशुकेनावृतेऽपीति । पूर्वोक्तस्य स्फुटीकरणमेतत् । त्वया नापनीतमित्युक्ते किमन्येनापनीतम् अथवा नयनरश्मिभिरित्याशङ्कायाम् अपनीतमेवाविष्कर्तुं पुनरुक्तिः । दृढतरस्फटिकभित्तिलङ्घनसमर्थानामतिसूक्ष्मस्तनांशुकलङ्घने कः प्रयास इति युक्त्या विरोधमङ्गीकृत्य पतनं समर्थितम् । प्रतिबन्धे सति साध्यसिद्धिं प्रत्यवधारणं पराजयपरिहारायैव । अन्यथोभयसंवादसुभगं लक्षणं कथनीयमिति चेत्, तदपि कथयामि । प्रालेयपाण्डुकलधौतपयोरुहाभे प्रालेयेन हिमजलेन पाण्डु ईषद्विवर्णं यत् कलधौतपयोरुहं कनककमलं तस्येव आभा यस्य । कनककमलस्य प्रालेयसम्बन्धेन पाण्डुतैव भवति, अन्यस्य विशीर्णदलत्वम् । पाण्डुता च न पूर्वोत्तरकालानुबद्धा प्रालेयस्यान्तरालिकत्वात् । कलधौतग्रहणं पाण्डुतया नातीव शोभाहानिरिति । कलधौतपयोरुहाभे इत्युक्तं पयोधरस्य पाण्डुत्वमपि तद्वदान्तरालिकमेवेति

सखे! नलिनीपलाशपवनैः सन्धुक्षितः स्मरवह्निः । तद् विरम मुहूर्तम् ।

**विदूषकः**— (क) वाढं (विरमति)

(ततः प्रविशत्यम्बरयानेन नायिका मेनका च)

**नायिका**— (दीर्घं निःश्वस्य) (ख) सहि! किं संपत्तह्म हत्थिणउरसमीवं ।

**मेनका**— (सविषादमात्मगतम्) (ग) कदाणु खु पिअसहिं उवसन्त-

(क) वाढम् ।

(ख) सखि! किं सम्प्राप्ते स्वो हस्तिनपुरसमीपम् ।

(ग) कदानु खलु प्रियसखीमुपशान्तमदनोन्मादां द्रक्ष्यामि । सखि! किं तत्रास्माक प्रयोजनम् ।

---

च स्फुरति । एवं त्वद्धृदयसंवादिनि लक्षणे (नि? सि)द्धे पतितमेवेत्यवधारणं युक्तमेव ॥ ७ ॥ एव सङ्कल्पेन कामिनीं प्रति सरसं संवादमवलम्बमानः सङ्कल्पपरम्परापरिम्लानचित्त सन्तापमसहमान आह—सखे! इत्यादि । विरुद्धकार्योत्पत्तिरत्र फलिता । सन्तापशमनार्थं नलिनीपलाशपवनोऽभ्यर्थितः, तेन मदनानलसन्धुक्षणं कृतम् । तद् विरम ॥

एवं तस्योन्मादावस्थां प्रतिपाद्य नायिकाप्रवृत्तिमाह । अथ नायिका नारदमुखादाकर्णितगुणगणे मरतकशिलासन्निधौ नयनानन्दीकृते नरपतौ निरन्तरप्रवर्धमानमनुरागमवलम्बमाना तत्सिद्धये वामनमाराधयन्ती साध्यालाभेन देहत्यागोद्यता सखीभ्यामाश्वास्य स्वभवनं प्रापिता अनन्यपरतया रणरणिकाचिन्तासन्तापजागरपरिक्षीणा तद्वृत्तान्तपरिज्ञानाय रम्भां नियुज्य तपनवन गन्तु मेनकया सह नभसा प्रस्थिता व्याक्षिप्तचित्ततया प्रस्तुतं विस्मृत्य दयितदर्शनस्थानतया सुभगं नगर पृच्छति — किमित्यादि । पुरस्वामिनि सदा लग्नचित्ता तदनुबन्धिनि सर्वत्र प्र-(स्मृ? सृ)तमनोवृत्तिः कान्तचिन्तानुसारेण पुरं पृच्छति ॥

तदाकर्ण्य विषण्णा मेनका निरूपयति —कदानु खल्विति । खल्विति विचारे । तेन चिरकालारब्धत्वेन दुस्सहता प्रकाश्यते । अत एवोपशान्तमदनो-

१. 'का आत्म' इति ख. पाठः.

मअणुम्मादं दक्खिस्सं । (प्रकाशम्) सहि! किं तत्थ अह्माणं पओअणं ।

**नायिका**— (सविलक्षमात्मगतम्) (क) हं किं मए मन्तिदं । (प्रकाशम्) सहि! रमणिज्जो खु कत्तिएआवासपरिसरारामो ।

**मेनका**— (ख) सहि! अज्ज अण्णहिं सो ।

**नायिका**— (ग) कीस असम्बद्धं मन्तेसि ।

---

(क) हं किं मया मन्त्रितम् । सखि! रमणीयः खलु कार्त्तिकेयावासपरिसरारामः ।

(ख) सखि! अद्यान्यस्मिन् सः ।

(ग) कस्मादसम्बद्धं मन्त्रयसे ।

---

न्मादामित्युक्तम् । उन्मादेन वक्तव्यं न जानाति । कथितं न स्मरति । उक्तं न शृणोति । श्रुतं नावधारयति । पुरोगतं न पश्यति । परोक्षं दृष्टवद् वदति । स्वैरक्रीडां विस्मरति । अनुनयं न गृह्णाति । कर्तव्यान्तरमुपेक्षते । किं बहुना देशकालौ न जानाति । एवम्भूतां प्रियसखीं कदाचिदप्यनुपेक्षणीयां कदानु प्रकृतिस्थां द्रक्ष्यामि । सर्वथा नानुसरामि । तेन वर्धत एव । तदुक्तमाक्षिप्य कथयामीति निरूप्याह — किं तत्रेत्यादि । तत्र मनुष्याधिपपुरे । अस्माकं देवतानां किं प्रयोजनम् । प्रयोजनं विना प्रश्नोऽपि न घटते, अन्यथानवस्थानात् ॥

इति तस्या आक्षेपवचनं श्रुत्वा सहसारमनोक्तमघटमानं निरूप्य सलज्जं विमृशति — किं मया मन्त्रितमिति । निजवचनमघटमानं मत्वोपपत्तिमुद्भाव्य कथयति — रमणीयः खल्विति । तदप्यनुभवसिद्धोऽयमिति प्रकाशयति — कार्त्तिकेयावासपरिसराराम इति । देवालयसन्निधिना रम्यतया चारामे पक्षपातः । तमन्तर्निधाय तदाश्रयस्य पुरस्य समीपागमनं पृष्टम् ॥

इति तस्याः समाधानभणितिं श्रुत्वा निपुणा मेनका वक्रोक्त्यैतदभिप्रायं प्रकाशयितुमाह — अन्यस्मिन् सः । त्वया विवक्षित आरामः अद्यान्यत्र । आरामव्यपदेशेन नृप एव त्वया विवक्षितः, स इदानीं न तत्रेत्यभिप्रायमाच्छायोक्तिः ॥

ऋजुतया तदभिप्रायमविदित्वा तदुक्तमाक्षिपति — कस्मादिति । आराम इदानीमन्यस्मिन्नित्यसम्बद्धं त्वया कथितम् ॥

---

१. 'अ' इति क. पाठः.

**मेनका**— (सस्मितम्) (क) जाणिज्जई एव्व एदं, को[2] वा एत्थ असं-बद्धं मन्तेदि त्ति।

**नायिका**— (ख) उम्मत्तिए! किं सो जङ्गमो।

**मेनका**— (ग) आम जङ्गमो।

**नायिका**— (घ) को दे अभिप्पाओ।

**मेनका**— (ङ) जो दे हिअअगओ।

---

(क) ज्ञायत एवैतत्, का वात्रासम्बद्ध मन्त्रयत इति।

(ख) उन्मत्तिके! किं स जङ्गमः।

(ग) आम जङ्गमः।

(घ) कस्तेऽभिप्रायः।

(ङ) यस्ते हृदयगतः।

---

तदाक्षिपति—ज्ञायत एवैतत् का वात्रासम्बन्धं मन्त्रयत इति ज्ञायते तटस्थैः। यदि तटस्थः श्रोता तेनैव ज्ञातुं शक्यं का वासम्बन्धवादिनीति। आवयोर्विवाद एव। प्रकृत विस्मृत्यान्यथा व्याहरन्ती त्वमेवासम्बन्धवादिनीत्यभिप्रायः॥

तमजानाना पूर्वोक्तेऽनुपपत्तिमुद्भाव्य तस्या असम्बन्धवादिनीत्वं साधयति—उम्मत्तिए इति। उन्मत्तैव त्वम्। तदेव स्फुटयति—कि स जङ्गम इति। आरामस्यान्यदेशस्थितिः कथम्। कि स जङ्गमः। जङ्गमानामेव देशान्तरप्राप्तिर्घटते॥

असङ्गतत्वेन पृष्टं विशेषविवक्षयानुवदति—आम जङ्गमः। त्वया विवक्षितो जङ्गमः। आमेत्यनुवादे॥

एवमुक्ते स्थावरस्य जङ्गमत्वकथनं साक्षान्न घटत इत्यभिप्रायं पृच्छति—कस्तेऽभिप्रायः। त्वदुक्तेर्वाच्यनिरूपणे ममानुप(पत्ति)र्न शान्ता॥

तदभिप्रायेण परिहारं स्फुटीकर्तुमभिप्रायमप्यन्यत्र सङ्क्रमय्योत्तरमाह—यस्ते हृदयगत इति। आवयोरेक एवाभिप्रायः। तत्र त्वयाभिप्रायमाच्छाद्यान्यथा कथित, त(देव) मयाङ्गीकृत्य कथितमित्येव विशेषः॥

---

१. 'इ एदम्' इति क. पाठः. २. 'वा ए' इति क-ख-ग. पाठः.

**नायिका**[1]—(क) को मे हिअअगओ ।

**मेनका**— (सस्मितम्) (ख) महाराअसंवरणो ।

**नायिका**[2]— (सरोषम्) (ग) अण्णगअमणोरहं तं जणमुद्दिसिअ कीस मं विडम्बेसि[3] ।

**मेनका**—(घ) तुह हिअअं एव्व जाणइ अहं विडम्बेमि ण वत्ति ।

---

(क) को मे हृदयगतः ।

(ख) महाराजसंवरणः ।

(ग) अन्यगतमनोरथं तं जनमुद्दिश्य कस्माद् मां विडम्बयसि ।

(घ) तव हृदयमेव जानात्यहं विडम्बयामि न वेति ।

---

तथोक्तेऽपि तात्पर्यमविज्ञाय पृच्छति—**को मे हृदयगत** इति । पराभिप्रायं ज्ञातुं ते पाण्डित्यमिति चेत् मदभिप्रायं कथयेतीपदमर्पगर्भमुक्तिः ॥

तच्छ्रुत्वेदानीं स्पष्टीकरोमि, किं परिस्फुटस्य गोपने प्रयासेनेति(हृ?ष्ट)-एमाह—**महाराजसंवरण** इति । महाराज इत्यनेन मनोवृत्तेरनौचित्यकलङ्कितत्वं च न शङ्कनीयं, तत् किं गूहस इत्यभिप्रायः ॥

एवं श्रुते नायकं प्रति पूर्वोद्भूतामाशङ्कामनास्थाविषयत्वेन प्रकाशयाह—**अन्यगते**त्यादि । अन्यगतहृदयं स्वदेवीनिविष्टचित्ततयास्माभिः परिज्ञातम् अत एवास्मासु तटस्थवृत्तिं तं जनमुद्दिश्य किं मां परिहससि । अन्यगतहृदयस्तव हृदये वर्तत इत्यस्मद्विडम्बनमेव त्वया क्रियते ॥

एवमुक्ते तस्या गुप्तप्रकाशनेनानिष्टं शङ्कमाना विषादं विमुच्यानुनयपूर्वमाह—तव हृदयमेव जानात्यहं विडम्बयामि न वेति । महाराजसंवरणस्तु तव हृदयगत इति मयोक्तम् । त्वयाप्यन्यगतहृदय इत्यनेन तस्यायोग्यत्वमेव कथितम् । तत्रापि ममानुवादः । तत् तिष्ठतु । तथापि तव हृदये वर्तत इति मम परिहासो वा वस्तुवृत्तं वेति तव हृदयं पृच्छ । नान्येन ज्ञातुं शक्यम् । सर्वथा स एव तव हृदयगतः ॥

---

१. 'का म' इति क-ख-घ. पाठः. २. 'का अ' इति क-ख. पाठः. ३. 'ळ' इति क-ख. पाठः.

नायिका --- (क) अळं परिहसिअ । को मग्गो भअवदो भिउणो अस्समपदस्स ।

मेनका --- (ख) ण अह्मे अस्समं पत्थिआ । तहिं रम्भं पेसिअ तवणवणमुद्दिसिअ आअदह्म ।

नायिका --- (ग) आ तवणवणं पत्थिदह्म । कहिं पुण तं ।

मेनका --- (अधो विलोक्य) (घ) एदं फाळिहमण्डवस्स सिहरं दीसइ । ता ओदरह्म ।

(अवतरणं नाटयतः)

(ततः प्रविशति बद्धकर्णपूरदण्डहस्ता रम्भा)

रम्भा --- (ङ) अहं हि सहीहि णिउत्ता, जह --भिउणो अस्समपदं

(क) अलं परिहस्य । को मार्गो भगवतो भृगोराश्रमपदस्य ।
(ख) नावामाश्रमपदं प्रस्थिते । तत्र रम्भां प्रेष्य तपनवनमुद्दिश्यागते स्वः ।
(ग) आ तपनवनं प्रस्थिते स्वः । क्व पुनस्तत् ।
(घ) एतत् स्फाटिकमण्डपस्य शिखरं दृश्यते । तदवतरावः ।
(ङ) अहं हि सखीभ्यां नियुक्ता, यथा --- भृगोराश्रमपदं गत्वावधारय स राज-

इत्युक्तेऽपि तत्रापि परिहासमङ्गीकृत्य व्याक्षिप्तचित्ता पृच्छति --- अलं परिहस्येत्यादि । भृगोराश्रमे नायकस्थितिमनुसन्धाय तत्प्रश्नः ॥

मेनका तमप्याक्षिप्य प्रकृतं स्पष्टयति --- नावामित्यादि । नावामाश्रमं प्रस्थिते । तत्र जिज्ञासामनुग्राह --- तत्र रम्भां प्रेष्य तपनवनमुद्दिश्यागते स्व इति । व्याक्षिप्तचित्तामेनां न पीडयामीति बुद्ध्या तत्त्वकथनम् ॥

तदानीं तत्प्रत्यभिज्ञापुरस्सरमाह --- आ तपनवनं प्रस्थिते स्व इति । क्व पुनस्तदिति परिश्रमेण सामीप्यमपेक्ष्योक्तिः ॥

तद् विदित्वाह --- एतत् स्फटिकमण्डपस्य शिखरं दृश्यते तदवतराव इति ॥

अथ प्रस्तुतगमनाभिप्राया रम्भा गमनकार्यस्य सिद्धत्वात् प्रसन्ना स्वगतिं कथयति --- अहं सखीभ्यामित्यादि । सखीभ्यां नियुक्तेति वात्सल्येन

१ 'नमर प' इति गन्प पाठ.

गत्तूण अवहारेहि सो राएसी तत्थ सण्णिहिदो ण वे त्ति । सो उण अज्ज पओसोवक्कमे एव्व तवणवणाहिमुहो वअस्सेण सह पत्थिओ । ता तवणवणं एव्व गदुअ सहीओ दक्खिस्सं । (परिक्रामति)

मेनका — (विलोक्य) (क) सहि! एसा रम्भा बद्धकण्णेउरलट्ठिं घेत्तूण आअच्छइ ।

रम्भा — (उपसृत्य) (ख) सहि! सुहावेइ तुमं जोह्लादुऊलावउण्ठिओ अअं पओसो ।

---

र्विस्तत्र सन्निहितो न वेति । स पुनरद्य प्रदोषोपक्रम एव तपनवनाभिमुखो वयस्येन सह प्रस्थितः । तत् तपनवनमेव गत्वा सख्यौ द्रक्ष्यामि ।

(क) सखि! एषा रम्भा बद्धकर्णपूरयष्टिं गृहीत्वागच्छति ।

(ख) सखि! सुखयति त्वा ज्योत्स्नादुकूलावगुण्ठितोऽयं प्रदोषः ।

---

तन्नियोगानुष्ठाने कृतार्थता व्यज्यते । यथेति तत्प्रकारोपक्रमः । अवहारेहि अवधारय निश्चिनु सन्निहितो न वेति । पूर्वं तत्रस्थ इति श्रुतत्वादिदानीं तत्र सन्निधानमवधारयितव्यम् । इतिशब्दोऽवधारणप्रकारे । नियोगोपसंहारे यथार्थेनैवालम् । तपनवनाभिमुख इत्यनेन आश्रमसन्निधानात् तपनवनप्राप्तिरस्मत्साध्यानुगुणा । प्रदोषोपक्रम इत्यनेन झटिति ततो निवर्तनाभावश्च प्रकाशितः । तत् तपनवनमेवेति । प्रियसख्योरपि तत्र गमनात् तत्रैव गन्तव्यम् ॥

इति निश्चित्यागतां रम्भामवेक्ष्य मेनका सखीसमाश्वासनोपायं निरूपयन्ती तामाह — एषेत्यादि ॥

समागता रम्भा झटिति समाश्वासनाय साध्यसिद्धिं व्यङ्ग्यत्वेन प्रकाशयति — सखीत्यादि । ज्योत्स्नादुकूलावगुण्ठितोऽयं प्रदोषसमयस्त्वां सुखयतीति प्रश्नगर्भकाकुरूपेण सुखजनकत्वं बोधयति । अयं प्रदोषः प्रदोषान्तरात् सुभगः, यतः प्रारम्भ एव ज्योत्स्नारूपेण दुकूलेन सर्वतो व्याप्तः । ज्योत्स्नाया दुकूलत्वा-

---

१ 'वे' इति क ख पाठ. २ 'दो' इति क ख पाठ. ३ 'व गुण्ठिदो अ' इति घ पाठ. ४ 'दोसोवक्कमो । ता' इति घ पाठ

**नायिका** — (निःश्वस्य) (क) अळं मम सुहवुत्तन्तेण । कुदो इदं समासादिअं ।

**रम्भा** — (ख) तवोवणादो पडिणिवत्तन्तीए मम उवरि कुदो वि सहआरसाहग्गादो एदं पडिअं । अहं पुण किण्णु हु एदं त्ति गेह्णिअ आअदह्मि ।

**मेनका** — (निर्वर्ण्य) (ग) सहि! एदाणि ताणि गाहक्खराणि । तदाणिं हत्थिणउरे अह्माणं करादो पब्भट्ठो वतंसओ । ता

(क) अलं मम सुखवृत्तान्तेन । कुत इदं समासादितम् ।
(ख) तपोवनात् प्रतिनिवर्तमानाया ममोपरि कुतोऽपि सहकारशाखाग्रादेतत् पतितम् । अहं पुनः किंनु खल्वेतदिति गृहीत्वागतास्मि ।
(ग) सखि! एतानि तानि गाथाक्षराणि । तदानीं हस्तिनपुरेऽस्माकं करात् प्रभ्रष्टो

रोपेण प्रदोषस्य शृङ्गारमिश्रपीठमर्दरूपत्वं प्रतीयते । अत्रायं प्रदोषः समाश्वासयतीत्युक्तौ समाश्वासयत्येव तन्निमित्तमहं जानामीति व्यज्यते । तदाच्छादनायैव ज्योत्स्नादुकूलावगुण्ठित इति हेतुगर्भत्वेन कथनम् । अत्र सुखयतीत्युक्ते सुखस्यानन्यलभ्यत्वादस्मत्सुखहेतुसिद्ध्येयं वदतीति ज्ञातुं शक्यमिति तस्या अभिप्रायः ॥

व्याक्षेपेण तदभिप्रायमविज्ञाय मन्दभाग्याया मम सुखवृत्तान्तेनालमिति तदुक्तिमाक्षिप्य गमनवृत्तान्तप्रस्तावाय तत्करगतं पृच्छति — कुत इत्यादि । तत्प्रसङ्गेन वाञ्छितसिद्धिर्भवेदित्यभिप्रायः ॥

रम्भा तद् विदित्वैवं साध्यमाच्छाद्यान्यत् पृच्छति, अहमपि तस्यैवोत्तरं कथयामि, पुनरपेक्षायामन्यत् प्रकाशयामीति निश्चित्याह — तपोवनादित्यादि । तपोवनप्राप्त्यादिकमनुक्त्वा प्रतिनिवर्तनावस्थैव कथिता ॥

मेनका तद् दृष्ट्वाह — एतानीत्यादि । अस्माकं कराद् भ्रष्ट इति पूर्ववृत्तं व्याजमेव साधयति । एतानि तानीत्यनेन वतंसकनिश्चयहेतुः । कथमस्यात्र सङ्गतिरिति शङ्कां निरस्यति — तस्य इत्यादि । तस्य राजवयस्यस्य प्रसादादित्यनेन राजस्वाभिजनाभ्यां परिहरति । नष्टेत्यनेन तथापलम्भस्य पूर्वमिदत्वं समर्थितम् ॥

१. 'उ' इ। ख. पाठः. २. 'ओ। उ' इ। क. पाठः.

*तक्केमि तस्स राअवयस्सस्स को वि पमादो एसो त्ति ।

**नायिका**—(रम्भा विलोक्य) (क) सहि! दाणिं कहि सो वह्मणो ।

**रम्भा**—(सस्मितम्) (ख) एदस्सिं एव्व तवणवणे कहिं पि वट्टइ ।

**नायिका**—(खेदमभिनीय) (ग) सहि! अम्बरगमणाआसो मं अ-
तिमत्तं पीडेइ । ता एदस्सिं फळिहमण्डवे विस्समह्म ।

**सख्यौ**—(घ) सहि! एव्वं करह्म ।

(प्रवेश रूपयन्ति)

**विदूषकः**—(ससम्भ्रमम्) (ङ) कहं पओसोवक्कमे एव्व पहादं ।

वत्सक । तत् तर्कयामि तस्य राजवयस्यस्य कोऽपि प्रमाद एव इति ।

(क) सखि! इदानीं क स ब्राह्मण ।

(ख) अस्मिन्नेव तपनवने क्वापि वर्तते ।

(ग) सखि! अम्बरगमनायासो मामतिमात्र पीडयति । तदेतस्मिन् स्फटिकमण्डपे विश्राम्याम ।

(घ) सखि! एव कुर्म ।

(ङ) कथ प्रदोषोपक्रम एव प्रभातम् ।

एव वत्सकवृत्तान्तेन साध्यसिद्ध्यभावात् प्रकारान्तरेण ज्ञातु तत्सम्बद्ध ब्राह्मण पृच्छति—इदानीमित्यादि । क स राजवयस्य इति पृष्टेऽतिप्रसङ्गो भवेदिति बुद्ध्या क स ब्राह्मण इति पृच्छति ॥

एवमस्या वैषम्य ज्ञात्वा रम्भा मया ज्ञातं त्वद्वेषम्यामिति स्मितेन बोधयित्वाह—अस्मिन्नेव तपनवने क्वापि वर्तत इति ॥

एव तत्सन्निधिं ज्ञात्वा हेत्वन्तर प्रकाश्य तत्र विश्रमापेक्षा कथयति—अम्बरगमनेत्यादि । अतिमात्र पीडयतीत्यनेन विश्रमनिर्बन्ध प्रकाशयति । अत एवोक्तम् एतस्मिन् स्फटिकमण्डपे विश्राम्याम इति ॥

एव तासा मण्डपप्रवेशारम्भे प्रभाप्रसरव्यामोहितो नर्मसचिव आह—कथ

१. 'य)अ' इति क पाठ २ ह्म । (सर्वा प्र' ' क पाठ ३ 'भा' इति ख पाठ

* 'मन्ये' इति तु व्याख्यानुसारी पाठ

**मेनका**—(जनान्तिकम्) (क) सहि! एसो सो राएसी बळिअं सन्दावं उव्वहन्तो सिसिरोवआरेहिं उवअरिज्जन्तो सइदो चिट्ठइ। एसो उण बह्मणो तुह पआसीकिदमण्डवब्भन्तरेण पहाजाळेण विप्पळद्धो पभादं त्ति विप्पळवदि। ता तिरक्खरणीविज्जाए पडिच्छण्णाओ दक्खह्म एदाणं वावारं।

(तथा कृत्वा तिष्ठन्ति)

---

(क) सखि! एष स राजर्षिर्बलीयांसं सन्तापमुद्वहन् शिशिरोपचारैरुपचर्यमाणः शयितस्तिष्ठति। एष पुनर्ब्राह्मणस्तव प्रकाशीकृतमण्डपाभ्यन्तरेण प्रभाजालेन विप्रलब्धः प्रभातमिति विप्रलपति। तत् तिरस्करणीविद्यया प्रतिच्छन्ना द्रक्ष्याम एतयोर्व्यापारम्।

---

प्रदोषोपक्रम एव प्रभातम् इति। प्रभास्फुरणस्यान्यथानुपपत्तिबोधेन प्रभातमिति तस्य बुद्धिः॥

एवं प्रवेशोपक्रमे तत्र शयितं नायकं दृष्ट्वा विदूषकवचनं चाकर्ण्य मेनका नायिकामाश्वासयन्ती बोधयति—सखीत्यादि। एषः अस्माभिरन्विष्टो विधिवशाद् दृष्टिगोचरः। पश्येति शेषः। सः अखिलभुवनप्रसिद्धः पूर्वमेवास्माभिरनुभूतरूपचातुर्यस्तदा तदा प्रस्तुतः। राजर्षिः राजोचितरञ्जनादिगुणानाम् ऋषिसमुचितजितेन्द्रियत्वादिगुणानामाश्रयत्वेनोभयप्रकाशकराजर्षिशब्दवाच्यः। बलीयांसं सन्तापमुद्वहन् त्वत्सन्तापादतिशयितं सन्तापमुद्वहन् गुरुं भारमिव वहन्। शयितस्तिष्ठति शयितो वर्तते। केन सन्तापो ज्ञायत इत्यत्राह—शिशिरोपचारैरुपचर्यमाणः उपचारसाधनैर्नलिनीपत्रादिभिर्वयस्येन परिचर्यमाणः। शिशिरोपचारेण शयनेन च सन्तापोद्वहनं निश्चीयते। अत्रैवम्भूतो राजर्षिस्त्वन्निमित्तमेव वैवश्यमवलम्बते। तद् आदरणीये आत्मनि विरागं मा कृथाः। साध्यालाभेन विषादं च परित्यजेत्याश्वासपरं वचनम्। तिष्ठतीत्यत्र धातोर्गतिनिवृत्त्यर्थत्वादवस्थानोपवेशनशयनसाधारणत्वाद् विशेषं बोधयितुं शयित इत्युक्तिः। एवमाश्वास्य पुनरवस्थामाह—एष पुनरित्यादि। तव प्रभाजालेन विप्रलब्धः प्रभातमिति विरुद्धभाषणं करोति। तत् प्रतिच्छन्ना एतद्व्यापारं पश्यामः॥

**विदूषकः**— (सविस्मयम्) (क) भो वअस्स! पुणो वि रत्ती आसी । एत्थ रम्मे पदेसे उदुसङ्करो विअ अहोरत्तसङ्करो संवुत्तो । को एत्थ हेदू ।

**राजा**— (सविमर्शं) सखे! सन्निहितदिव्यजनेषु प्रदेशेषु किमसम्भावनीयं नाम । सखे! किमिति न वीजयसि ।

**विदूषकः**— (सोद्वेगमात्मगतम्) (ख) खणे खणे वड्ढन्तो भाआवेइ मं एदस्स मअणुम्माओ । (प्रकाशम्) भो वअस्स! को दे सम्मोहो । णं तुए णिवारिदो ।

(क) भो वयस्य! पुनरपि रात्रिरासीत् । अत्र रम्ये प्रदेशे ऋतुसङ्कर इवाहोरात्रसङ्करः संवृत्तः । कोऽत्र हेतुः ।

(ख) क्षणे क्षणे वर्द्धमानो भाययति मामेतस्य मदनोन्मादः । भो वयस्य! कस्ते सम्मोहः । ननु त्वया निवारितः ।

एवमुक्त्वा देहतिरोधानेन झटिति तेजःसहृतो पुनरपि रात्रिबुद्ध्या कथयति— **पुनरपीत्यादि** । अत्र रम्ये प्रदेशे ऋतुसङ्करोऽस्माभिर्दृष्टः, इदानीमहोरात्रसङ्करो दृश्यते । सङ्करः प्रतिक्षणं व्यत्यासः । अत्र को हेतुः ॥

इति तस्य भ्रमनिमित्तं वचनमाकर्ण्य विमृशन् नायको दिव्यजनसञ्चारादिना प्रभाप्रसरसङ्कोचाभ्यामस्य भ्रम इति जानन्नपि सन्तापवैवश्येन हास्यवचनं समर्थयितुमनिच्छन् गम्भीरोक्त्या परिहरति— **सन्निहितदिव्यजनेष्विति** । किमसम्भावनीयं किमुत्प्रेक्षितुमशक्यं दिव्यजनस्य प्रभावेनाविर्भावतिरोभावादिभिश्च अद्भुतत्वेन घटमानमघटमानं वोत्प्रेक्षितुं शक्यम् । दिव्यजनसान्निध्यमेवात्र हेतुः, न देशविशेषः । तत् तिष्ठतु । प्रकृतं किं त्वया विस्मृतम् । किमितीदानीं न वीजयसि ॥

इति तस्य वचनमाकर्ण्य स स्वयं निरूपयति— **क्षणे क्षण** इत्यादि । क्षणे क्षणे वर्धमान एव, न तु शाम्यन् । अतो मां भाययति । कोऽस्य परिणाम इति निरूप्याक्षेपं प्रकटयति— **ननु त्वयेत्यादि** । विरम मुहूर्तमिति त्वया ननु निवारितः । स एवेदानीं किमिति न वीजयसीति ममापराधमारोप्य कथयसि ॥

१ 'उ' इति ख पाठः   २ 'ए' इति ख पाठः

राजा— सखे! हृदयमत्रापराध्यति। अयि हृदय! भवतु तावदलभमानस्य तां मम सम्भ्रमः। त्वं तु—

चकितनयनं चुम्बस्यंसे निवर्तितमाननं
प्रतिनववधूं लज्जालोलां बलादुपगूहसि।
अनतिशिथिलं नीवीग्रन्थिं पुनः परिलोलयद्
विचरसि शनैः श्रोणीचक्रे कुतः परिखिद्यसे॥८॥

---

इति तद्वचनमाकर्ण्य व्याक्षिप्तचित्त एवोत्तरमाह—हृदयमपराध्यति नाहम्। हृदयस्य सम्भ्रम एवात्र निमित्तमिति प्रसङ्गे हृदयं परीक्षत्याह—अयि हृदयेति। अयि हृदय! निरर्गलं स्वार्थं प्रति मामनवेक्ष्य धावता त्वया किमर्थं चापलमवलम्ब्यते; नावयोः साम्यम्। मम चापलं तावद् भवतु चापल (ए? मे) व भवतु। तस्यैव योग्यता, यतस्तामलभमानस्य, ताम् अलाभे अनुपेक्षायोग्याम्, अलभमानस्य इदानीमेवासिद्धतल्लाभस्य सम्भ्रम एवोचितः। त्वं त्वतीव विसदृशः कुतः परिखिद्यसे। सम्भ्रमस्य परिखेदो निमित्तमिति कुतः परिखिद्यस इत्युक्तम्। किमर्थं संभ्राम्यसीत्यर्थः। परिखेदाभावस्य हेतुमाह—चकितनयनमित्यादि। आवयोरतीवान्तरम्, अहं तामलभमानः गिरिकान्तारादिषु परिभ्रमामि, त्वं क्षणमपि तत्सन्निधिं न मुञ्चसि। वयोवस्थासदृशस्य स्वभावस्यानुसरणं रसावहमिति नववधूस्वभावमनुसृत्य तदाननं चुम्बसि लज्जयापरिचयेन च रतिवैलोम्येन चुम्बने अंसे निवर्तितमाननम् औत्सुक्येन तत्रापि प्रसरत् चुम्बसि, नानुकूल्यमपेक्ष्य तिष्ठसि। एवं प्रतिनववधूं भोगाद्यपरिचिता ताम्। अत एव लज्जालोलां वेपथुशरीरसङ्कोचादिकमाचरन्तीम्। बलात् सहसा, ननु हठात्। छिद्रमन्विष्य प्रत्यालिङ्गनमनपेक्ष्याप्युपगूहसि न वैलोम्येन निवर्तसे प्रतिपालयसि वा। पुनरिति भोगे क्रमोऽपि लक्ष्यते। आश्लेषानन्तरम् अनतिशिथिल प्रेम्णा ईषदुच्छ्वसितं "नीवी च स्खलति स्थितापि जघने कामेङ्गितं योषिताम्" इत्युक्त्वा ईषच्छिथिल नीवीबन्ध शनैः परिलोलयत् तदुद्वेगमनापादयत् शिथिलयत्, आक्षिपन्नित्यर्थः। श्रोणीचक्रे शनैर्विचरसि सम्भ्रमेण विभ्रान्तरेण वा साध्य न मुञ्चसि। सर्वत्र वर्तमाननिर्देशेनेदानीमपि भोगं न मुञ्चसि, मदुक्तावपि तत्रैव ते क्रटा.. इति प्रकाश्यते। कुत इति कस्माद्धेतोः। प्रधानभूतान्येव मयोक्तानि।

**नायिका** — (सासूयमात्मगतम्) (क) वम्मह! अहो दे अविवेओ, जं अप्पत्थिअं पि एदेण मम हिअअं अच्छिन्दिअ दिण्णं। चिरप्पत्थिअं पि एदस्स हिअअं मम अहिमुहं कादुं ण पारेसि। (प्रकाशम्) एसो दाव देवीविरहुक्कण्ठिओ परिदेविउं पवुत्तो। ता किं एत्थ अह्माणं पओअणं।

(क) मन्मथ! अहो ते अविवेक, यदप्रार्थितमप्येतेन मम हृदयमाच्छिन्द्य दत्तम्। चिरप्रार्थितमप्येतस्य हृदयं ममाभिमुखं कर्तुं न पारयसि। एष तावद् देवीविरहोत्कण्ठितः परिदेवितुं प्रवृत्तः। तत् किमत्रास्माकं प्रयोजनम्।

रूपावलोकने मधुरालापश्रवणे गमनशयनासनादिषु क्षणमपि तव न विप्रयोगः। आकृष्यमाणमपि बलाद्धावसि। तत् कुतः परिखिद्यसे। साध्यसिद्धौ सत्यां परिखेदस्यैव न योग्यता, किं पुनस्तत्कार्यस्य सम्भ्रमस्येत्येव निजहृदयं परीकृत्य कथनेनोन्मादस्य प्रकर्षः प्रकाशितः ॥ ८ ॥

अत्राभिलाषविप्रलम्भे वर्ण्यमाने 'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते' इति युक्त्योपरितनसम्भोगसौभाग्यजनकं तमेव मूर्च्छापर्यन्तं परिपोषं नयति। तत्र नायकस्य नायिकाया आत्मविषयमनुरागं जानतोऽप्यलाभेन सन्तापपरिपोषः। नायिकायास्त्वात्मविषयानुरागे उन्नीतेऽपि देवीप्रेमशङ्कयोपर्युपरि विषादपरिपोषः। रागसमर्थनेन नायिकासमाश्वासने प्रयासः। एवं स्थिते नायिका नायकस्य हृदयं प्रति वचनमाकर्ण्याय देवीविरहेण प्रलपतीति तत्रासूयामवलम्ब्यमानोन्मादस्याविच्छिन्नतया मदनमभिमुखीकृत्य वदति—**मन्मथे**त्यादि। निरन्तरमस्मन्मनोमथनदीक्षित त्वां किञ्चिदाधिक्षिपामि। अहो ते अविवेकः। ते वीरमन्यस्य विमर्शाभाव आश्चर्यकरः। कुत इति चेत् शृणु। मम हृदयं शरैर्मां पीडयित्वा बलादपहृत्यैतस्मै दत्तम्। अप्रार्थितमपि एतस्या हृदयं मय्यर्पयेति तत्प्रार्थना विनापि दत्तम्। लोके यच(न्य)स्य धनमन्यस्मै दीयते तर्हि प्रतिग्रहीतुः प्रार्थनामनुसृत्य सामपूर्वं परिगृह्य दीयते, नतु हठान्निरपेक्षया, इत्यनिरूपणमेकोऽ

१. 'शम्) सहि! ए' इति ग पाठः २ मा द' इति क पाठः ३ ह्मअ। मेन' इति क पाठः

**मेनका**— (क) सहि! अहिणवा खु तुवं। ण एसो देवीविरहुक्कण्ठिओ। किं ण सुदो तुए णववहूसद्दो।

**नायिका**— (ख) तह वि किं मम।

**रम्भा**— (ग) अदो खु संसओ। पुणो वि सुणह्य।

---

(क) सखि! अभिनवा खलु त्वम्। नैष देवीविरहोत्कण्ठितः। किं न श्रुतस्त्वया नववधूशब्दः।

(ख) तथापि किं मम।

(ग) अतः खलु संशयः। पुनरपि शृणुमः।

---

विवेकः। एतस्य हृदय पुनर्मया चिरप्रार्थितमपि ममाभिमुखीकर्तुं मय्यर्पयितुं न समर्थो भवसि। तत्र चिरप्रार्थितस्यादानमप्यविवेकः। अयं मयि नानुरक्तः, स्वदेवीसक्त एव प्रलपतीति मदनमधिक्षिप्य तमेवार्थं नैराश्यगर्भं सख्यो बोधयन्ति—एष तावदिति। अस्य मद्विषयोऽनुराग इति तव भ्रमः। असौ देवीविरहोत्कण्ठितः प्रलापाय प्रारब्धवान्। प्रवृत्त एव, अस्य व्याप्तिः कियतीति न ज्ञायते। तत् किमत्रेतत्प्रलापश्रवणेनास्माकं प्रयोजनम्॥

इत्युक्तावन्यत्र गन्तव्यमित्यभिप्रायं ज्ञात्वा मेनकान्यथा साधयति—सखीत्यादि। मदनवृत्तान्तेऽपरिचिता खलु त्वम्। इदम्प्रथममेव तवात्र मनोवृत्तिः। नैष देवीविरहोत्कण्ठितः। एतदुक्तं सम्भोगप्रकारं त्वां बोधयितुं न शक्यं, तथापि मदुक्तिं विनापि ते निःसंशयत्वं युक्तम्। त्वया नववधूशब्दः किं न श्रुतः, अपरिचयेऽपि शब्दश्रवणमात्रेण ज्ञातुं शक्यम्। तत् संशयं मा कृथाः॥

इत्युक्तमपि निरस्यति—**तथापि कि ममेति**। नववधूशब्दमात्रेण किं मम लब्धम्, अन्याश्च सन्ति नववध्वः, नाहमेकैव॥

इति नैराश्यगर्भं वचनमाकर्ण्य रम्भा तत्र युक्तिमाह—**अतः खलु संशय**। नववधूशब्देन संशय एव योग्यः, न नैराश्यं विशेषानिर्देशात्, पुनरपि श्रोतव्यमेवेति गमननिर्बन्धं रुणद्धि॥

अथ नर्मसचिवः शिशिरोपचारादिकं विफलमालक्ष्योपायान्तरं स्वतः सिद्धतया

विदूषकः— (क) भो! एदे पदुमराअगवक्खन्तरप्पविट्ठा किं णावणअन्ति दे अणङ्गमोहं चन्दमोहा।

राजा—सखे! असम्भृतपुण्यसञ्चयानामतिप्रतीपाः पदार्थशक्तयः।

पश्य—

अबहुलविनिपातादार्जिताभिः कलाभिः
कुशलि कुमुदबन्धोश्चन्द्रिकोद्गारि बिम्बम्।
अपि मनसि गुरोर्मे हारगौरैः कराग्रै-
रपिहितगुणदोषानर्पयत्यन्धकारान्॥ ९॥

(क) भो! एते पद्मरागगवाक्षान्तरप्रविष्टा किं नापनयन्ति ते अनङ्गमोहं चन्द्रमयूखा।

निर्दिशति—भो वयस्य! एते पद्मरागगवाक्षान्तरप्रविष्टाः पद्मरागमयस्य गवाक्षस्य अन्तरेण छिद्रेण मण्डपं प्रविष्टाश्चन्द्रमयूखास्ते अनङ्गमोहं किं नापनयन्ति, अपनेतुं शक्ता एव। तद् अनायाससिद्धे सन्तापशमनोपाये सति किमेव परितप्यसे॥

इत्याश्वासवचनमाकर्ण्य तेषामपि (मोहकरत्वं) साधयति—सखे[1] इत्यादि। सखे! आत्मनिर्विशेषं त्वा मद्वैषम्यं बोधयामि। लोके तावद् असम्भृतपुण्यसञ्चयानां निरन्तरमनार्जितपुण्यपूराणां जनानाम्। पदार्थशक्तयः पदार्थानां स्रक्चन्दनादीनां, शक्तयः तत्तदर्थक्रियानिर्वहणसमर्थाः शीतोष्णादिस्वरूपाः तत्त्वस्थितयः। अतिप्रतीपाः अतिविरुद्धाः। तत्र पुण्यार्जनाभावस्यैवापराधः। इममर्थं तत्पङ्क्तिनिवेशयोग्ये मयि निरूपय। 'चन्द्रमयूखा अनङ्गमोहं किं नापनयन्ती'ति त्वयोक्तम्। मयि तदन्यथा दृश्यते। कुमुदबन्धोः बिम्बं मे मनसि कराग्रैरन्धकारानर्पयति, अन्धकारविध्वंसनं खल्वस्य स्वभावः, कराग्राणां च तत्साधनत्वमिति युक्तं, मयि त्वन्धकारानर्पयति, पूर्वसिद्धमन्धकारं नापनयतीत्येव न, आत्मना समुच्छेद्य मम मनस्यर्पयतीत्यतिप्रतीपा इति मयोक्तम्। तर्हि कराग्राणां वैकल्येनेति चेत् तन्न। हारगौरैः हारवन्निर्मलैः। तर्हि बिम्बस्य किमपि वैकल्यमिति चेत् तदपि न शङ्कनीयम्। अबहुलविनिपातादार्जिताभिः कलाभिः कुशलि। बहुलः कृष्णपक्षः तेन विनिपातः उपप्लवः, बहुलस्य विनिपातः प्राप्तिर्वा तदभावात्, अथवा अबहुलस्य शुक्लपक्षस्य प्राप्तेर्वा। आर्जिताभिः

१ 'जा—अ' इति ख पाठः।

**नायिका**— (आत्मगतम्) (क) मूढहिअअ! तुवं दाव अण्णाए णामहेअस्स असङ्कित्तणमत्तं ओळम्बिअ दुरासाए मरणकिदव्ववसाअं मं पडिबन्धेसि।

**राजा**— सखे! पश्य मदीयां दशां, यतः शयितुमपि न शक्नोमि।

---

(क) मूढहृदय! त्वं तावदन्यस्या नामधेयस्यासङ्कीर्तनमात्रमवलम्व्य दुराशया मरणकृतव्यवसाया मां प्रतिबध्नासि।

---

प्रतिदिनं प्रवृद्धाभिः कलाभिः। कुशालि पूर्णत्वेन वर्तमानम्। अत एव चन्द्रिकोद्गारि चन्द्रिकोद्गमनयुक्तं न मेघादिनिरुद्धम्। अविभक्तावयवा कान्तिश्चन्द्रिका। विभक्तावयवा रश्मय इति भेदः। एवं बिम्बस्य न वैकल्यं शङ्कनीयम्। मा मत्येवैव विरोधः, यतः कुमुदबन्धोः अनन्यशरणेषु तत्र तत्र प्रसूतेषु कुमुदेषु जडेष्वपि विकासजननेनास्य बन्धुत्वमेव लक्ष्यते। मय्येकस्मिन्नेव वैपरीत्यम्। अतोऽप्यधिकं शृणु, गुरोरपि अस्मत्कुलगुरोरपि। तथा निरूपणेऽप्यन्धकारनिरोध एव युक्तः, नार्पणम्। अत्र गु(रु)शब्दनिर्वचनं स्मारयति। अन्धकारानर्पयतीत्युक्तं कार्येण साधयति—अपिहितगुणदोषानिति। अत्र मोहस्यान्धकारत्वेनाध्यवसायाद् मोहेऽन्धकारधर्मं योजयति। पदार्थावरणमन्धकारस्य धर्मः, सोऽत्रापि विद्यते। अपिहितगुणदोषान् आच्छादितगुणदोषान् अयं गुणोऽयं दोष इति विवेकनिरोधसमर्थान्। एवम्भूतानन्धकारान् मम मनस्यर्पयतीति मयातिप्रतीपाः पदार्थशक्तय इत्युक्तम्। चन्द्ररश्मिसंस्पर्शेनापि वर्द्धत एव मोहः। तत् कथं त्वयोक्तं मोहोपनयनं घटत इत्यभिप्रायः॥ ९॥

अथ नायिकाशङ्कापरिपोषं नयति—मूढेत्यादि। अन्यस्या नामधेयस्यासङ्कीर्तनमात्रमवलम्व्य दुराशया मरणकृतव्यवसाया मा प्रतिबध्नासि। अन्यस्यां सक्तिरिति निश्चय, तन्नामासङ्कीर्तनमेव तदाशानिमित्तम्। अतो दुराशैव। मरणकृतव्यवसायाम्, असावन्यत्र सक्तः, तथापि मम मनो न निवर्त्तते, तन्मरणमेव साध्यमिति कृतव्यवसायां कथं निवारयसीति नैराश्यगर्भोक्तिः॥

सखे! पश्येत्यादि। मदीयामवस्थां यतः शयितुमपि न शक्नोमि केवलं शयनेऽपि न शक्तिः॥

**विदूषकः**— (सविषादम्) (क) किण्णु हु मएं मन्दभाएण कादव्वं । जो किञ्चि अस्सासहेदु त्ति सम्भाविओ, सो वि कण्णेउरो मम प्पमादेण मक्कडहत्थगओ आसि ।

**मेनका**– (साकूतम्) (ख) सहि! अविस्सम्भसीळे! जइ तइं एसो उदासीणो, कहं तुह केरएण कण्णेउरेण से आसासो ।

**नायिका**— (ग) किं तुए ण सुदं देविं अणुणअन्तस्स वअणं 'अब्भुअरसो एत्थ अवरज्झदि' त्ति ।

**मेनका**— (घ) बाळिआ खु तुवं । अणहिण्णा चउरचाडूणं ।

(क) किंनु खलु मया मन्दभाग्येन कर्तव्यम् । यः किञ्चिदाश्वासहेतुरिति सम्भावितः, सोऽपि कर्णपूरो मम प्रमादेन मर्कटहस्तगत आसीत् ।

(ख) सखि! अविस्रम्भशीले! यदि त्वय्येष उदासीनः, कथं त्वदीयेन कर्णपूरेणास्याश्वासः ।

(ग) किं त्वया न श्रुत देवीमनुनयतो वचनम् 'अद्भुतरसोऽत्रापराध्यति' इति ।

(घ) बालिका खलु त्वम् । अनभिज्ञा चतुरचाटूनाम् ।

इति तस्य वैवश्यमालक्ष्याह — **किन्वित्यादि** ॥

अथ मेनका 'आश्वासहेतुः कर्णपूरो मर्कटहस्त(गत)' इति तद्वचनं श्रुत्वा साभिप्रायं वदति – **अविस्रम्भशीले**। अविस्रम्भः अपरिचय. तेन तत्कार्यमविश्वासो लक्ष्यते, अस्मदुक्तौ कुत्रापि तव न विश्वासः । यदि त्वय्युदासीनः, कथं त्वदीयेन कर्णपूरेणास्याश्वासः । तत् शङ्कां परित्यजेत्यर्थः ॥

वैराग्येण तद्वचनं प्रतिक्षिपति — **कि तुए** इत्यादि ॥

तदुक्तमन्यथाकरोति मेनका –**त्वं बालिका** मूढा । मौढ्य च न सर्वत्र । चतुरचाटूनामनभिज्ञा चतुराणां प्रियभाषण न जानासि 'अद्भुतरसोऽयमत्रापराध्यती'ति आत्महृदयमाच्छाद्य तदनुसरणायैवोक्तिः । मनस्तु त्वय्येव ॥

१. 'आसास' इति ख. पाठ.. २. 'ओ कण्णेउरो सो वि म' इति क ख. पाठ. ३ 'इ उ, इति क. पाठः. ४. 'ज्झो त्ति' क. पाठः. ५. 'भि' इति क-ख. पाठ.

**नायिका**—(क) होदु एदं । विवित्ते पिअवअस्सस्स 'अक्खित्तोह्मि केवळं विह्मएण, ण अण्णह' त्ति भणिअं । एदं [1]पि किं चाडू ।

**मेनका**—(ख) अदिगम्भीरा हि पुरिसा अत्तणो अहिणवं चावळं सव्वदो रक्खन्ति ।

**रम्भा**—(ग) सहि ! जाणिदो कण्णेउरस्स आगमो बह्मणादो । ता दीणस्स एदस्स एदं दइस्सं । (विदूषकस्य पुरतो निक्षिपति)

**विदूषकः**—(विलोक्य सविस्मयम्) (घ) भो ! सदण्डअट्ठस्स सव-

---

(क) भवत्वेतत् । विविक्ते प्रियवयस्यस्य 'आक्षिप्तोऽस्मि केवलं विस्मयेन, नान्यथे'ति भणितम् । एतदपि किं चाटुः ।

(ख) अतिगम्भीरा हि पुरुषा आत्मनोऽभिनवं चापलं सर्वतो रक्षन्ति ।

(ग) सखि ! ज्ञातः कर्णपूरस्यागमो ब्राह्मणात् । तद् दीनस्यैतस्यैतं दास्यामि ।

(घ) भो ! सदण्डकाष्ठस्य सनह्मसूत्रस्य कर्णपूरस्य कथमतर्कित आगमः । मन्ये

---

इत्युक्ते अर्द्धाङ्गीकारेण प्रतिक्षिपति—भवत्वेतत् । विविक्ते अन्यजनरहिते । प्रियवयस्यस्य आत्मतुल्यस्य 'आक्षिप्तोऽस्मि केवलं विस्मयेन, नान्यथे'ति भणितम् । अत्र केवलमित्युक्त्या स्वहृदयमेव प्रकाशितम् । एतदपि किं चाटुः । देवीं प्रति चाटुरस्तु, विविक्ते प्रियवयस्य प्रत्युक्तमेतत् सत्यमेव ॥

इत्याक्षिप्ता मेनका पुनरपि समाधत्ते—अतिगम्भीराः स्वविकारगोपननिपुणा पुरुषा आत्मनो नूतनं हृदयचापलं सर्वतो रक्षन्ति, नात्राप्तानाप्तविशेषः । अतश्चापलगोपनायैव त प्रत्युक्तम् । तच्छङ्कां परित्यज ॥

अथ रम्भा तस्य वैपम्यमालक्ष्याह—सखीत्यादि । कर्णपूरस्यागमो ब्राह्मणात् ज्ञात. 'य. किञ्चिदाश्वासक इति सम्भावित', कर्णपूरो मम प्रमादेन मर्कटहस्तगत आसीद्' इत्यनेनाप्याश्वासकरत्वं प्रमादेन परित्यागश्च ज्ञातः । तदिदानीं गमनोपयोगो भवति । दीनस्यैतस्यैत दास्यामि ॥

इति तदग्रत· कर्णपूरे क्षिप्ते सविस्मय आह—सदण्डकाष्ठस्येत्यादि ॥

---

१. 'पि' च्चा ईन ६ पाठः.

ह्मसुत्तस्स कण्णेउरस्स कहं अतक्किओ आगमो । मण्णे भीदाहि अन्तलिहिदाहि वाणरजादीहि पक्खित्तो त्ति ।

**रम्भा** —(क) धस्स गोमिळ! वटुअ! तुमं एव्व वाणरो ।

**राजा** —(सालसं दृष्टिमुन्मील्य पश्यन्) सखे! समर्पयैनं मम हृदये ।

(विदूषको दण्डकाग्रादेवमुच्यार्पयति)

**मेनका** —(ख) सहि! इदाणिं पच्चेहि ।

**राजा** —(स्मृत्वा सावज्ञम्) आः कस्या अयं कर्णपूरः । अपनीयतां तावत् ।

(विदूषकोऽपनयति)

---

भीताभिरन्तर्हिताभिर्वानरजातिभिः प्रक्षिप्त इति ।

(क) अपगच्छ ग्रामिळ! वटुक! त्वमेव वानरः ।

(ख) सखि! इदानीं प्रत्येहि ।

---

भीताभिर्वानरजातिभिः परित्यक्त इत्युक्ते रम्भा निरसनं प्रतिक्षिपति — धस्स अपगच्छ, मैवमनुचित वादीरिति शेषः । ग्रामिल! ग्रामाश्रय! वटुक! ब्रह्मबन्धो! त्वमेव वानरः, न वयमिति तेनाश्रुतमपि प्रतिक्षेपं करोति । वैरूप्यस्यातिदूरीकरणमत्राभिप्रायः ॥

अथ शयितः सादातिशयेन नयनोन्मीलनेऽप्यशक्त सालसं दृष्टिमुन्मील्य पश्यन् वदतीत्यनेन परकाष्ठां प्राप्तस्योन्मादस्यासन्नमूर्च्छत्व प्रकाशितम् । समर्पयैनमित्याश्वासो भवेद् वेत्याशसयोक्तौ ॥

तेन कर्णपूरस्य हृदयसमर्पणे कृते मेनका ता विश्वासयति — सखि! इदानीं प्रत्येहि प्रत्ययं गच्छ । पूर्वं सर्वत्र त्वया युक्तिभिरविश्वास एव साधित. । इदानीं त्वत्कर्णपूरस्य हृदयार्पणे विश्वसिहि ॥

एवं कर्णपूरे न्यस्ते नायिकाया विपर्ययज्ञानपरिपोषाय नायकस्यानास्था प्रकाशयति — आः कस्या अयमिति । अनेनापि व्याक्षेपातिशयः प्रकाशितः ॥

---

१. 'त्त' इति क. पाठ , 'न्तर्हिदा' इति ख. पाठ  २ 'मुञ्ळ! च' इति ख-ग पाठः.  ३. 'कः—तह(द' इति ख पाठ  ४ 'द्विमु' इति क-ख-घ. पाठ  ५ 'जा— आः' इति ख. पाठः.  ६ 'र. । आ. अ' इति ख पाठः

**नायिका**—(आत्मगतम्) (क) हं णट्ठह्मि (प्रकाशम्) इदो वरं किं सोदव्वं।

**मेनका**—(ख) तक्केमि तुह केरओ ण होइ त्ति अवहत्थिओ कण्णेउरो।

**नायिका**—(सरोषम्) (ग) पुव्वं तुह एसो वतंसओ एदस्स अस्सासहेदु त्ति भणिअं। इदाणिं तुह ण होइ त्ति परिच्चत्तो त्ति भणासि। अहो दे एदस्सिं पक्खवादो। (प्रस्थातुमिच्छति)

**राजा**—प्रिये तपति निर्दये

(क) ह नष्टास्मि। इत. परं किं श्रोतव्यम्।

(ख) तर्कयामि त्वदीयो न भवतीत्यपहस्तित. कर्णपूरः।

(ग) पूर्वं तवष वतसक एतस्याश्वासहेतुरिति भणितम्। इदानीं तव न भवतीति परित्यक्त इति भणसि। अहो तवैतस्मिन् पक्षपातः।

---

एव कर्णपूरेऽपनीते नैराश्यनिश्चयेनाह—नष्टास्मीति। मत्सम्बधिनि कर्णपूरेऽस्य विरागो जात। तदह नष्टेवेति निश्चित्याधिक्षेपगर्भं सखीं प्रत्याह—इत परं कि श्रोतव्यमिति। अस्मासु विराग पूर्वमेव मया निश्चित, युष्मन्निर्बन्धेन श्रोतव्य श्रुत, तद् गन्तव्यमेवेति शेष॥

मेनका राज्ञ एतद्विषयमनुराग निश्चिन्वाना तत्र तत्र शङ्का प्रतिक्षिपति—त्वदीयो न भवतीति भ्रमेण कर्णपूरस्त्यक्त इति मे बुद्धि., न त्वय्यनास्थया॥

तदुक्ति प्रतिक्षिपति—पूर्वमित्यादि। पूर्वं तवेष वतस एतस्याश्वासहेतुरिति भणितम्। इदानीं परित्यागे त्वदीयत्वेनाज्ञान हेतुरिति वदसि। कदाचिदपि तस्यापराधो मा भवत्विति ते बुद्धि। अत्र तवास्मिन् पक्षपातो विस्मयनीयः। आदित आरभ्य त्व तस्य मदानुगुण्यमेव बोधयसि। तत्र पक्षपात एव निमित्तम्। पक्षपातो वास्तवमप्याच्छादयति। तत् त्वदुक्तिमनङ्गीकृत्याह यास्यामीति निराशया प्रस्थातुमुद्यता॥

अथ त॥ प्रस्थितायाः पुनरपि व्यभिचारिभावैर्नैराश्यमेव परकाष्ठां नेतु नायकस्य तदानुगुण्येनोन्मादप्रलाप प्रतिपाद्यते—प्रिये इत्यादि। अत्र चित्त्याक्षेपानुगमेण पदनिन्यास। प्रिये सर्वदये। तपति पीडयति। निर्दय इति विशेष्यगामात्स्य विशेषण प्रथम निर्दिष्टम्। तत्रासन्नमूर्च्छतया विश्रम्य कथनम्॥

**मेनका** — (क) अप्पावमाणिणि! णिवत्तेहि दाणिं ।

**नायिका** — (सहर्षं प्रतिनिवृत्यात्मगतम्) (ख) हिअअ! दे गओ संसओ सुणाहि गअसंभमं

**राजा** — शुचमुपैमि चन्द्रातपे ।

**नायिका** — (सशोकम्) (ग) हदह्मि

**राजा** — रविसम्भवे

**नायिका** — (पुनः सप्रमोदम्) (घ) हिअअ! तुस्स

(क) आत्मावमानिनि! निवर्तस्वेदानीम् ।

(ख) हृदय! ते गतः सशयः । शृणु गतसम्भ्रमम् ।

(ग) हतास्मि ।

(घ) हृदय! तुष्य ।

तथोक्तेऽपि तन्निवर्तनोपायमन्विच्छन्ती मेनका 'प्रिये तपति' इति हृदिस्थाया एतत्सम्बोधनं कृतं, विस्रम्भभावनया निर्दये इत्युक्तमिति निश्चित्य प्रस्थिता तां साधिक्षेपमाह — **आत्मावमानिनि**! आत्मावमानन तव स्वभाव । तच्च सर्वदा न शोभते, तेन एतदनुरागस्याह न पात्रभूतेति भावयित्वा मदुक्तावप्यविश्वासमवलम्बमाना खिद्यसे, इदानीमेवं सम्बोधिता शङ्का परित्यज । निवर्तस्व ॥

इत्युक्ता हर्षेण सह सन्निवृत्य हृदय प्रत्याह — **हृदय**! ते संशयो गतः वचनामृतस्यार्द्धपानेन ते संशयक्षुन्निवृत्ता । अत क्षुदुपशान्त्या संभ्रम विमुच्य स्वैरामिकामवलम्बमानं वचनामृतशेषेण सन्तृप्तिं कुरु । सबोधनमेव कृत, श्रोतव्यमुपरितनमेव ॥

एव हर्षे तस्योक्तिशेष — **शुचमुपैमि चन्द्रातपे** ॥

एवमुक्ते नैराकाङ्क्ष्येण वाक्य परिपूर्णम् । तदान्यथाप्रतीत्या पुनरपि सविषादमाह — **हतास्मि** अनिष्टसिद्ध्याह नष्टव जन्मकार्याभावाद् इति ॥

पुनरुक्तस्य दृष्टान्तैकदेशमाह — **रविसम्भवे** इति सप्तम्यन्ततया ॥

पुनरपि पितृगोत्रपूर्वं सविशेष सम्बोधन मत्वा सहर्षमुक्तिः — **हृदय**! तुष्य । मुक्तः सशय । पूर्वं नाम्ना पुनश्च गोत्रनाम्ना सम्बोधन । शुचमुपैमीत्यवस्थानिवेदनं मां प्रति ॥

१. 'का (प्र' इति क. पाठ .

राजा – सत्यातपे यथैव कुमुदाकरो

नायिका – (पुन. सशोकम्) (क)ण अरिदं खु पुण्णं मए ॥ १० ॥

राजा – (दीर्घमुष्ण च नि.श्वस्य सकृपणम्) दयिते! तत्र खलु सख्या समुच्चारिते संवरणध्वनावन्यार्थेऽपि सम्भ्रान्तदृशा त्वया –

चलितधृति तदानीमार्यपुत्रेति वाचः
कतिचिदमृतगर्भाण्यक्षराण्युक्तवत्या ।
करकमलमिदानीं कान्तमङ्के मदीये
कथमिव निदधत्या नाहमुज्जीवनीयः ॥ ११ ॥

(क) न चरितं खलु पुण्यं मया ।

एवं हर्षावलम्बने सत्यातपे यथैव कुमुदाकारः रविसम्भवे आतपे सति यथैव कुमुदाकर इति दृष्टान्तदार्ष्टान्तिकबुद्ध्या पुनरपि विषादपुरस्सरं वैराग्ये विश्रम्याह – न चरितं खलु पुण्यं मया । पुण्याभावेनैवमनिष्टप्राप्तिः ॥ १० ॥

एव तस्या आत्मवैराग्ये प्रकर्षं नीते परिपोषं गतस्य पुनरुद्दीपनं रसभङ्गहेतुरिति नायकस्य प्रलापेन तस्याः संशयमपाकरोति – दयिते! इत्यादि । तदा त्वयि परिश्रमेण विषण्णायां स्तनांशुकापनयनप्रस्तावे सख्या भित्त्यर्थे सवरणध्वनावुच्चारिते सवरणशब्दे कथिते शब्दश्रवणमात्रेणैव मदागमनबुद्ध्या सम्भ्रान्तदृशा 'आर्यपुत्रे'ति वाचः कतिचिदक्षराणि न समग्राणि तान्यपि वदनामृतकिरणान्निर्गतान्यमृतकल्पान्येव । (तथा त्वया) उक्तवत्या मयि निर्व्याजः पक्षपातस्तदा प्रकाशितः । इदानीं मय्यनन्यशरणे शयाने कान्त करकमलं मदीयेऽङ्के निदधत्या कथमिव नोज्जीवनीयः इदानीमेव स्नेहातिशयः प्रकाशयितुं योग्यः । उज्जीवनीय इति मृतकल्पत्वादन्यन्मम जीवनसाधनं नास्तीति च प्रकाशितम् । अत्रैकवाक्यतया निर्देशः । अत्र निदधत्येति निधानक्रियायाः कर्तरि निगूढत्वेऽप्युज्जीवनीय इत्यत्र निधानस्य जीवनसाधनत्वापेक्षया मदीयेऽङ्के करकमल निधाय कथं नोज्जीवनीय इत्यर्थः सिध्यति । कथमित्यनेनेदमेव युक्तमिति प्रार्थनागर्भं वचनम् ॥

१. 'र्घं नि' इति ब-पाठ.

**नायिका**—(सस्पृह सरोमविक्रिय च स्वगतम्) (क) अम्महे एसो एव्व किळ जणो एदस्स कामुम्मादहेदू। (हर्षमूर्च्छिता पतति)

**मेनका**—(सहर्षेनापगद्गदम्)(ख) सहि! मुच्छेहि मुच्छेहि। अणुमदं मए।

**रम्भा**—(ससम्भ्रमम्) (ग) सहि! को दे सम्मोहो। पमोदणिमित्तं पि एसा मुच्छइ एव्व। ता समासासह्म णं।

**उभे**—(उपसृत्य) (घ) समस्ससदु समस्ससदु पिअसही।

(नायिका प्रत्यागत्य प्रेमविस्मृतनिमेषा राजानं पश्यन्ती तिष्ठति)

**राजा**—(अविस्पष्टाक्षरम्) सखे!

(क) अहो एष एव किल जन एतस्य कामोन्मादहेतु ।
(ख) सखि! मूर्च्छ मूर्च्छ। अनुमत मया।
(ग) सखि! कस्ते सम्मोह.। प्रमोदनिमित्तमप्येषा मूर्च्छत्येव। तत् समाश्वासयाव एनाम्।
(घ) समाश्वसितु समाश्वसितु प्रियसखी।

एवमात्मसशयान्धकारनिध्वसन नायकस्य वचनचन्द्रिकाप्रवाहमवधार्य हर्षपरवशा रोमाञ्चवेपथुप्रभृतिभिर्विकारै सह नायिका स्वयमेव वदति--**अम्महे** इत्यादि। आश्चर्यम् एष एव किल जन एतस्य कामोन्मादहेतु। एष इत्यस्मान निर्दिश्योक्ति। किलेति पूर्वं मया न निरूपितम् इदानीमस्य वचनेनैव निश्चितम्। एतस्य महापुरुषस्य। अहो मम भाग्योदय इति प्रकाश्यते। अत एव हर्षपारवश्येन मूर्च्छया पतनम्॥

तद् दृष्ट्वा मूर्च्छ मूर्च्छ, अनुमत मयेति निमित्तगौरव निरूप्य मेनकाया उक्ति। एव हर्षपारवश्येन मूर्च्छन युक्तमेवेत्यभिप्राय॥

तत्रापि रम्भा दोष निरूपयति–कस्ते सम्मोहः, प्रमोदनिमित्तेऽप्येषा मूर्च्छत्येव॥

इत्युक्त्वा ताभ्या समाश्वासिता निवृत्तसशया प्रेमविस्मृतनिमेषा राजान

१. 'का (सरोमविक्रियम्) अ' इति क पाठ, 'वा स्व इति ख पाठ २. 'भ स' इति कख पाठ. ३ 'प रा' इति कघ पाठ ४ 'न तियक्प' इति क पाठ.
५. 'म्) मु' इति क पाठ.

मुक्तमूलममी प्राणाः प्रायः कण्ठविलम्बिनः ।
निर्गच्छन्ति पुरा सोऽयं सुदृष्टः क्रियतां जनः ॥ १२ ॥

विदूषकः — (ससम्भ्रम सास्रैगद्गदम्) (क) हा हदो म्हि । एव्वं मयि उवक्कन्तं विहिणा । (सत्वरमुपसृत्य राज्ञोऽङ्गानि परामृशति)

राजा — हा प्रिये! (इत्यर्धोक्ते मूर्च्छया परामृष्टः)

विदूषकः — (सविषादम्) (ख) समस्ससदु समस्ससदु वअस्सो । (पुनर्विलोक्य सविषादम्) कहं गदो एव्व अन्तं वअस्सो । (सशिरस्ताडनम्) हा वअस्स! हा सअळहरामण्डलेक्कणाह! हा मइ अआरणबद्धसिणेह! कीस मं अणण्णसरणं सव्व-

(क) हा हतोऽस्मि । एवं मय्युपक्रान्तं विधिना ।

(ख) समाश्वसितु समाश्वसितु वयस्यः । कथं गत एवान्तं वयस्यः । हा वयस्य! हा सकलधरामण्डलैकनाथ! हा मय्यकारणबद्धस्नेह! कस्मान्मामनन्यशरणं सर्वकालसहचरं बालमित्रं दयितं परित्यज्य गच्छसि । दीर्घायुषं वशकरं पुत्र लभमानो भवेति सिद्धादेशिकानां वचनमप्यलीकं सञ्जातम् । अथ वा किं मम परिदेवितैः । भृगुपतनेनानुसरामि प्रियवयस्यम् ।

पश्यन्ती स्थिता ॥

इति नायिकाया विप्रलम्भपरिपोषस्य सम्भोगोन्मुखत्वं प्रकाश्य नायकस्य मोहावस्थापर्यन्तं प्रकाशयति — मुक्तमूलमित्यादि । प्राणानां यात्रोन्मुखत्वेनोर्ध्वगतिरेवास्ति, अतो मुक्तमूलमित्युक्तम् । आधारकन्दं कुण्डलिन्यनुबद्धं मूलमिति निर्दिशति । तत्परित्यागो यथा भवति तथा । कण्ठविलम्बिनः कण्ठकुहरमात्रे सक्ताः । निर्गच्छन्ति पुरा इदानीं निर्गमिष्यन्ति । किमत्र कर्तव्यमिति चेत्, सोऽयं जनः सुदृष्टः क्रियताम् । सोऽयं मदनोन्मादहेतुः । सुदृष्टः पुनस्तिरोधानरहितं दृष्टः क्रियताम् ॥ १२ ॥

इति वैवश्येनाविस्पष्टाक्षरं वयस्यं प्रति कथनं तस्य सम्भ्रमप्रलापादिकम् ॥

१. 'कः (सा' इति क-ख-घ. पाठः. २. 'सम्' इति क-घ. पाठः. ३. 'पराम्य रा' इति क पाठः. ४. 'राजान स्पृश' इति ख. पाठ.. ५. 'ऽः—सम' इति क. पाठः. ६. 'दु मित्र' इति ख पाठः. ७. 'वय) क' इति क-ख. पाठः. ८. 'कस्स' इति ख-ग. पाठ.

आळसहअरं वालमित्तं दइअं परिच्चेय्य गच्छासि । दि-
ग्घाउं वंसअरं[2] पुत्तं लहन्तो होहि त्ति सिद्धादेसिआणं
वअणं पि अलिअं सञ्जाअं[3] । (स्मृत्वा) अहव किं मम परिदे-
विएहिं । भिउपडणेण अणुसरामि पिअवअरसं । (निष्क्रान्त.)

**नायिका** — (खेदनिःसह भूमौ पतन्ती) (क) हा मं एव्व आळविअ कहं गदो अय्यउत्तो । अय्यउत्त ! खणं मं पडिवाळेहि । एसह्मि आअदा (मोहमुपगच्छति)

**सख्यौ** — (ससम्भ्रममुत्सङ्गे कुर्वा) (ख) समस्ससदु समस्ससदु पिअसही ।

**नायिका** — (समाश्वस्य) (ग) सहीओ ! मा च्छिवह मा च्छिवह मं पदिवहपावमळीमसं[6] । अणुमण्णह परळोअगअं पि तं जणं अहिसरिदुं ।

**रम्भा** — (विचिन्त्य) (घ) सहि ! अहो अह्माणं मूढदा । तुह कर-

(क) हा मामेवालप्य कथ गत आर्यपुत्रः । आर्यपुत्र ! क्षण मा प्रतिपालय । एषा-स्म्यागता ।

(ख) समाश्वसितु समाश्वसितु प्रियसखी ।

(ग) सख्यौ ! मा स्पृशतं मा स्पृशत मां पतिवधपापमलीमसाम् । अनुमन्येथा परलोकगतमपि त जनमभिसर्तुम् ।

(घ) सखि ! अहो अस्माकं मूढता । तव करकमलसंसर्गं प्रार्थ्य एप महाराज

अथ मूर्च्छित तं दृष्ट्वा वयस्यस्य नायिकायाश्च प्रलापप्रकार' ॥

'मा च्छिवह इति । मा स्पृशतं पतिवधपापमलीमसत्वादह स्प्रष्टुमपि न योग्येत्यर्थः ॥

१. 'त्तजसि । दि' इति क. पाठः. २ 'र सुपु' इति ख-ग. पाठः ३. 'अ अ' इति ग-घ. पाठः. ४ ममुपसृत्य तामु' इति क ख-ग पाठ ५ 'त्वा) सहि! समस्सासेहि समस्सासेहि' इति क-ख-ग. पाठ . ६ स । मं अ' इति ख. पाठ . ७. 'म्भा – स इति ख-घ. पाठः.

कमळसंसग्गं पत्थिअ एसो महाराओ एरिसं दसं पडिव-
ण्णो। ता एदस्स हिअए तुरिअं णिहेहि करकमळं। जइ
एदं पि विहळं होई, पच्छा सव्वाओ विवज्जह्म।

(नायिका सत्वरमुपसृत्य तिरस्करणीमपनीय ससाध्वसकम्पं तस्योरसि करकमलमर्पयति)

**राजा** — (सत्वरमुत्तिष्ठन् करमाक्षिपन्तीं नायिकां दृष्ट्वा)

अलमलमाक्षिप्यामुं पाणिं पाणौ निधत्स्व गलदमृतम्।
यो मामुज्जीवयितुं हरिणाक्षि! समर्पितो हृदये॥ १३॥

(ग्रहीतुमिच्छति)

(नायिका सलज्जं सख्यौ तिर्यक् पश्यन्ती तिष्ठति)

**मेनका** — (राजानमुपसृत्य) (क) महाराअ! अळं दाणिं तुवरिअ।

---

ईदृशीं दशां प्रतिपन्नः। तदेतस्य हृदये त्वरितं निधेहि करकमलम्। यद्ये-
तदपि निष्फलं भवति, पश्चात् सर्वा विपद्यामहे।

(क) महाराज! अलमिदानीं त्वरित्वा। इयमावयोः प्रियसखी त्रैलोक्यप्रदीपस्य

---

अथ यथाप्रार्थितं नायिकाकरकमले हृदि न्यस्ते मूर्च्छां परित्यज्य सत्वर-
मुत्तिष्ठन् नायको हृदयन्यस्तं करकमलमाक्षिपन्तीं नायिकां दृष्ट्वा सहर्षमाह —
अलमलमित्यादि। अमुं पाणिमाक्षिप्यालमलं हृदये न्यस्तं मा माक्षिप।
किं पुनः कर्तव्यमिति चेत्, पाणौ निधत्स्व पूर्वं हृदये न्यस्तम्, इदानीं
पाणौ। यो मामुज्जीवयितुं हृदये समर्पितः, तं जीवनप्रदातारम्। अत एव गल-
दमृतम् अमृतस्राविणम्। अन्यथा कथं जीवनं भवेत्। हरिणाक्षीति। त्वद्गुणगौ-
रवमेव मां सम्भ्रमयति, तत् पाणौ निधत्स्व। इदानीमेव पाणिग्रहणमभिमतम्॥

इति ससम्भ्रमं नायके वदति मेनका कामुकानां प्रेमचापलस्वभावं जानती
एतत्प्रार्थनस्य नायमवसर इति मत्वा द्वयोरन्तरं प्रविश्य करग्रहणोन्मुखस्य राज्ञः
प्रेमचापलं शमयति — महाराजेति। अलमिदानीं त्वरित्वा प्रणयोऽवलम्ब्यतां महा-

---

१. 'हि स' इति क-ख पाठ  २ 'नयन्ती स' इति ख पाठ  ३. 'स्योपरि क' इति क. पाठ..  ४. 'दृष्ट्वा प्रहृ' इति क. पाठ.  ५ 'ससम्भ्रम ति' इति ग पाठ.  ६. 'ष्ठिपता)' इति ख-ग.पाठ.

इअं णो पिअसही तेळ्ळोक्कप्पदीवस्स भअवदो सुय्यस्स धीदा भअवदीए सावित्तीए अवरआ तवदीणामहेआ। तस्स वि किल महाराओ एव्व जामादुओ त्ति सङ्कप्पो। ता अब्भत्थिअ देवं गेह्ण एदाए पाणिं। एसो उण दे व-अस्सो तुह अवत्थं दक्खिअ णिरासो भिउपडणं कादुं [2]पत्थिओ। ता तुरिअं गत्तूण पच्चुज्जीवेहि णं। गच्छह्म पुणो दंसणाय।

(सह सखीभ्यां निष्क्रान्ता नायिका)

**राजा** — (ससम्भ्रमं मण्डपनिष्क्रमणं रूपयित्वा परिक्रामन्) कासौ कासौ।

(प्रविश्य)

**विदूषकः** — (क) ह्णाणसंसुद्धो अहं जहसमीहिदं करिस्सं।

(शिखरारोहणं नाटयति)

---

भगवतः सूर्यस्य पुत्री भगवत्याः सावित्र्या अवरजा तपतीनामधेया। तस्यापि किल महाराज एव जामातेति सङ्कल्पः। तदभ्यर्थ्य देवं गृहाणैतस्याः पाणिम्। एष पुनस्ते वयस्यस्तवावस्थां दृष्ट्वा निराशो भृगुपतनं कर्तुं प्रस्थितः। तत् त्वरितं गत्वा प्रत्युज्जीवयैनम्। गच्छामः पुनर्दर्शनाय।

(क) स्नानसंशुद्धोऽहं यथासमीहितं करिष्यामि।

---

राजस्य तवेदानीमेव त्वरा न युक्ता। इयमावयोः सखी न स्वतन्त्रा, अस्मदनुवादेनैव प्रवर्तते, अस्मदुक्तिमनुसरति चेति प्रकाशितम्। तर्हि युवयोरेव सेव्यत्वमिति चेत् तत्राह — त्रैलोक्यप्रदीपस्य भगवतः सूर्यस्य धीदा पुत्री। त्रैलोक्यप्रदीपस्य भगवत इत्यनेन पितृगौरवं प्रकाशितम्। ततोऽपि गौरवान्तरमाह — भगवत्याः सावित्र्या अवरजा तपतीनामधेयेति। तपतीत्यस्या मङ्गलं नाम। विस्रम्भे सर्वं बोद्धव्यमिति मयापृष्टयापि निर्दिष्टम्। तर्हि दुर्लभेयमिति तस्य विषादमालोक्योक्तिः — तस्यापि किल पितुरपि, न केवलमस्माकं, महाराज एव जामातेति

---

१. 'णो स' इति क-ख. पाठः २ 'पउत्तो। ता' इति ख. पाठः. ३. 'क्रामति)' इति ग-घ. पाठः, 'क्रम्य' इति क. पाठः-

राजा — (सत्वरमुपसृत्य) न खलु न खलु साहसमनुष्ठेयम् । अयमहं प्राणिमि ।

विदूषकः— (श्रुत्वा ससम्भ्रमम्) (क) कहिं सि कहिं सि । बप्फंधा मे दिट्ठी । तेण तुमं ण पेक्खामि (राजानं परिष्वज्य मुक्तकण्ठं रुदित्वा) एदस्सिं एव्व जम्मे तुवं मए आलिङ्गिदव्वो आसी ।

राजा — सखे ! अलमावेगेन । उत्तीर्णा वयममुतो व्यसनार्णवात् ।

विदूषकः — (ख) कहं विअ ।

राजा — एवमिव ।

विदूषकः— (सहर्षम्) (ग) भो दिट्ठिआ वड्ढसि । अदो वरं किं अह्माणं आरम्भो ।

---

(क) क्वासि क्वासि । बाष्पान्धा मे दृष्टि । तेन त्वा न पश्यामि । एतस्मिन्नेव जन्मनि त्व मयालिङ्गितव्य आसी ।

(ख) कथमिव ।

(ग) भो दिष्ट्या वर्धसे । अत पर क आवयोरारम्भ ।

---

किल सङ्कल्प । किलेति वार्तया सिद्धमिदम् । तथापि घटनोपाय न जानामीत्यत्राह — तत् सूर्यमभ्यर्थ्य गृहाणैतस्या पाणिम् इत्युपायमप्युपदिश्यान्यत्र मनो व्याक्षिप्य तस्य चापलं शमयति — एप पुनरिति । ते वयस्यो भृगुपतन कर्तुं प्रवृत्त । तत् त्वरित गत्वा मरणात् प्रागेव प्रत्युज्जीवन तस्य कर्तव्यम् । इदानीं कथनीयमुक्तम् । तद् वय गच्छाम पुनर्दर्शनायेत्यनेन यात्रानिर्बन्ध आस्थानुबन्धश्च सूचित ॥

एव परस्परानुरागे निश्चिते सखीसहिताया नायिकाया निर्गताया राजा भृगुपतनोन्मुख तम् 'अयमह प्राणिमि' जीवामीत्युक्त्वा मरणान्निवर्त्य सिद्धमर्थं त बोधयित्वेत्त पर कोऽस्माकमारम्भ इति तद्वचनमाकर्ण्य निश्चितत्वेन कर्तव्य-

---

१ 'क —क' इति ख पाठ २ 'रा) क' इति ग पाठ. ३ 'गी । तु' इति क-ख ग पाठ ४ 'क्खदि (रा' इति क पाठ ५ 'जा परिष्वजते। विदूषक मु' इति ख घ पाठ ६ 'क दि' इति ख पाठ ७. 'किं कादव्व । रा' इति ख. पाठ ८ 'ण कत्तव्व रा' इति क. पाठ

राजा — किमन्यत् —

आचराम्यहमतः परं सखे! तामुपोढनियमः पुरस्क्रियाम् ।
प्रीणितः प्रणतवत्सलो यया नांशुमानलमदातुमात्मजाम् ॥ १४ ॥

(इति निष्क्रान्तौ)

इति तृतीयोऽङ्कः ।



---

माह — किमन्यदिति । आरम्भाणां बहुत्वं न शङ्कनीयम् । अत एवं करोमि । सखे! मम सम्पद्व्यसनयोस्त्वमेवाकृत्रिमं मित्रम्, अतः विपद्दशामतीत्य सम्पदं प्रत्येवं तीव्रमनुष्ठानं करोमि । अतः परम् उपोढनियमः अङ्गीकृताचरणव्रतः तां पुरस्क्रियामाचरामि । अंशुमन्तं प्रतीति शेषः । यया पुरस्क्रियया प्रीणितोंऽशुमान् आत्मजामदातुं नालम् अस्मै न दास्यामीति कृतबुद्धिरपि सपर्याकृतेन सन्तोषेण विवशीकृतो न दास्यामीत्यध्यवसायं निर्वोढुं न शक्नुयात्, प्रीत्या दास्यत्येव, तादृशीं सपर्यामाचरामि । हठान्न वशीकरणमित्याह — प्रणतवत्सल इति । प्रणतेषु वात्सल्यं भगवतः प्रसिद्धम् । अतो मयैवं साध्यनिश्चयेनोक्तम् ॥ १४ ॥ इत्यनन्तरकर्तव्य निश्चित्य वयस्येन सह निष्क्रान्तः ॥

इति तृतीयोऽङ्कः ।



## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति[1] मणिचपकहस्ता चेटी )

चेटी — (क) आणत्तह्मि भट्टिदारिआए 'हळा! सोअन्धिए! महुअराणुच्छिट्टं कुसुमासअं आणेहि' त्ति । ता विइणिस्सं दाव अहं । (परिक्रम्य तरुषु दृष्टिं व्यापारयन्ती) एदं खु एदाए कप्पळदाए हेमणळिणमुउळं अप्पच्छिद्दग्गं[2] दीसइ । एत्थ दुक्खरो महुअराणं पवेसो । ता एदं गेह्णिस्सं[3] । (नाट्येन गृहीत्वा) अम्मो[4] एदस्स महुपेसळदा । एत्तिएण च्चिअ एसो मणिचसओ पुण्णकप्पो आसी । (अन्यतो विलोक्य) एदं हि एदस्सिं[5] मन्दारे कणअकण्णिआरकुसुमं विअसिअं पि[6] चूदपल्लवेहि पिहिदमुहं चिट्ठइ । एदं पि तेहि अणुवज्जुत्तं । (आवर्जयति)

---

(क) आज्ञतास्मि भर्तृदारिकया 'सखि! सौगन्धिके! मधुकरानुच्छिष्टं कुसुमासवमानये'ति । तद्विचेष्यामि तावदहम् । एतत् खल्वेतस्याः कल्पलताया हेमनलिनमुकुलमल्पच्छिद्राग्रं दृश्यते । अत्र दुष्करो मधुकराणां प्रवेशः । तदेतद् ग्रहीष्यामि । अम्मो एतस्य मधुपेशलता । एतावतैवैष मणिचषकः पूर्णकल्प आसीत् । एतद्ध्येतस्मिन् मन्दारे कनककर्णिकारकुसुमं विकसितमपि चूतपल्लवैः पिहितमुखं तिष्ठति । एतदपि तैरनुपयुक्तम् ।

---

अथ चतुर्थेऽङ्के नायकयोः सम्भोगश्रृङ्गारे वर्णयिष्यमाणे अन्तरा सूच्यसूचनार्थं नीचपात्राभ्यां चेटीभ्यां प्रवेशकप्रस्तावः । प्रमेयसङ्घटनार्थमपेक्षितस्य नीरसस्य वृत्तान्तस्य सूचनं विष्कम्भप्रवेशादिभिः क्रियते । अत्र सूर्यप्रीणनार्थमुद्यतो नायकोऽङ्कान्ते निर्गतः । पुनः सूर्यं प्रति नियमालम्बनम् । तत्र वसिष्ठेन राज्ञो द्वादशवासरमात्रं नियम निर्वर्त्य सूर्यलोक प्राप्य भगवन्नियोगेन तपती तपनवनमानीय राज्ञे दत्ता । तत्र यथाविधि परिणीतया सह नायकस्य सुखवासे नायिकायाः

---

१. 'ति चे' इति क-ख-ग. पाठः. २. 'ह दी' इति ग. पाठः. ३. 'स्स (ण्हि' इति क.पाठः. ४. 'अ म्म' इति क. पाठः. ५. 'एदस्सिं' इति ख. पाठः. ६. 'पि' इति क. पाठः, 'खु' इति घ, पाठः.

(ततः प्रविशति समुद्गहस्ता आकाशयानेन चेटी)

**चेटी** — (क) एदं तवणवणं। ओदरिस्सं दाव[1]। (अवतरणं नाटयति[2]) (पुरतो विलोक्य) अम्मो पिअसही सोअन्धिआ[3]! सहि! सोअन्धिए! किं कॅज्जइ।

**प्रथमा** — (विलोक्य) (ख) अम्मो जम्बूणदिआ। सहि! रइपूअणत्थं कुसुमासवं गेह्णामि। कुदो उण तुवं।

**द्वितीया** — (ग) सहि! जदा महाराओ देवं उद्दिसिअ तवस्सं कादुं पवुत्तो, तदा भट्टिदारिआए कुसळवुत्तन्तं णिवेदिउं बहिणिआए जमुणादेवीए सआसं पेसिदह्मि।

**प्रथमा** — (घ) तदो तदो।

**द्वितीया** — (ङ) तदो अत्थि बहिणिआए तवदीए अणुरूवो तेळ्ळोक्कमुळ्ळो हारो। तेण भूसिअ गङ्गा हरसेवणत्थं केळासं गआ। सा जदा आगमिस्सदि, तदा तं गेह्णिअ ग-

---

(क) एतत् तपनवनम्। अवतरिष्यामि तावत्। अम्मो प्रियसखी सौगन्धिका। सखि! सौगन्धिके! किं क्रियते।

(ख) अम्मो जम्बूनदिका। सखि! रतिपूजनार्थं कुसुमासवं गृह्णामि। कुतः पुनस्त्वम्।

(ग) सखि! यदा महाराजो देवमुद्दिश्य तपस्यां कर्तुं प्रवृत्तः, तदा भर्तृदारिकया कुशलवृत्तान्तं निवेदयितुं भगिन्या यमुनादेव्याः सकाशं प्रेषितास्मि।

(घ) ततस्ततः।

(ङ) ततोऽस्ति भगिन्यास्तपस्या अनुरूपस्त्रैलोक्यमूल्यो हारः। तेन भूषयित्वा गङ्गा हरसेवनार्थं कैलासं गता। सा यदागमिष्यति, तदा तं गृहीत्वा गच्छसीत्येतावन्तं कालं तया स्थापितास्मि। अद्य पुनस्तं गृहीत्वागतास्मि। तत् कथयात्रगतं वृत्तान्तम्।

---

१. 'व। (नाट्येनावतरन्ती वि' इति क पाठः. २. 'ति) अ' इति ख पाठः. ३. 'आ। सो' इति क पाठः. ४. 'क्रि' इति ख-ग. पाठः.

च्छासि त्ति एत्तिअं कालं ताए ठाविदह्मि। अज्ज उण त
गेह्लिअ आअदह्मि। ता कहेहि एत्थगअं वुत्तन्तं।

**प्रथमा**—(क) जइ एव्वं, सुणाहि। जदा महाराअं वारहवासर-
मत्तणिअमं अणुचिट्ठन्तं भअवो वसिट्ठो णिवत्तिअ
णिअमादो भट्टिदारिअं अब्भत्थेदुं गओ भअवन्तं सुय्यं।

**द्वितीया**—(ख) तदो तदो।

**प्रथमा**—(ग) तदो देवेण अणुमदा भट्टिदारिआ महेसिणा महा-
राअस्स दिण्णा। अण्णं च भट्टिदारिआए सिविणे गब्भं
लम्भिअ सत्तिहरप्पहावो कुमारो पसूदो विअ दिट्ठो।
एसो एत्थगओ वुत्तन्तो। (मणिचपकं विलोक्य) पूरिदो मए
महूहि मणिचसओ। ता भट्टिदारिआए सआसं गच्छह्म।

(निष्क्रान्ते)

प्रवेशकः।

---

(क) यद्येवं, शृणु। यदा महाराजं द्वादशवासरमात्रनियममनुतिष्ठन्तं भगवान् वसिष्ठो निवर्त्य नियमाद् भर्तृदारिकामभ्यर्थयितुं गतो भगवन्तं सूर्यम्।

(ख) ततस्ततः।

(ग) ततो देवेनानुमता भर्तृदारिका महर्षिणा महाराजाय दत्ता। अन्यच्च भर्तृदारिकया स्वप्ने गर्भं लब्ध्वा शक्तिधरप्रभावः कुमारः प्रसूत इव दृष्टः। एषोऽत्रगतो वृत्तान्तः। पूरितो मया मधुभिर्मणिचषकः। तद् भर्तृदारिकायाः सकाशं गच्छावः।

---

पुत्रोत्पत्तिः तत्र स्वप्नभ्रमश्च, पुना रतिपूजनार्थमुद्यमः, चेट्या कालिन्दीसन्निधेः नायिकाभूषणार्थं हारसमानयनमित्यादिकोऽर्थश्चेट्योः संव्यवहारेण प्रवेशके प्रकाशितः॥

---

१. 'त' इति क पाठः. २. 'वव्वसि' इति क. पाठः. ३. 'आ महारा' इति क. पाठः. ४. 'ण उ' इति क. पाठः. ५. 'दो मद्दू' इति क. पाठः. ६. 'गमिस्स' इति घ. पाठः.

(ततः प्रविशति ललितवेषो राजा विदूषकश्च)

**राजा**—(स्मृत्वा सानन्दम्) अहो दुरवबोधरसान्तरो मदनव्यापारः ।
तथाह्यद्य—

अप्रत्यस्तकरावलेपमनतिव्याक्षिप्तनीवीग्रहं
प्रक्षीणप्रतिषेधजल्पितमपि प्राप्य प्रियाया रतम् ।
लज्जालौल्यनिरुद्धरागलसितं नात्यर्थमाकाङ्क्षति
व्यावृत्तं रतिदुःखशीलललितं विरमतुमस्मन्मनः ॥ १ ॥

अथ विवाहानन्तर कृतार्थस्य तपनवने वर्तमानस्य सवयस्यस्य राज्ञ प्रवृत्ति प्रतिपाद्यते । करतलोदकर्तारगते मन्दारलतामण्डपे प्रियतमा प्रतिपाल्य तिष्ठन्ननुभूत वयोवस्थासमुचित तत्सङ्गममनुसन्दधान परमानन्दपरवश सम्भोगविशेष श्लाघते—अहो इत्यादि । मदनव्यापार मदनेन मदनविकारेण व्यापारो भोगरूप । दुरवबोधरसान्तर एवमस्य स्वरूपमिति दुर्विज्ञेयरसविशेष । रस आस्वाद । लोकेऽन्येषा वस्तूनामास्वादव्यवस्था दृश्यते अकृच्छ्रेण सिद्धौ सुखरूपत्वम्, अन्यथा तु खरूपत्वामिति । अथ न तथा, लिप्साया प्रकृष्टायामपि लाभादलाभस्य सुरसकरत्वम्, आनुकूल्यवत् प्रातिकूल्येऽप्यास्वाद, आनुकूल्यापेक्षिणस्तदानामेव प्रातिकूल्ये प्रीतिरिति दुर्विज्ञेय इत्येव वक्तु शक्यम् । तथाह्यद्यास्मदवस्थाया दृश्यते । प्रियाया रतम् एव प्राप्याप्यस्मन्मनो व्यावृत्तम् अननुकूल रत विस्मर्तुमत्यर्थं नाकाङ्क्षति । इदानीन्तनमाह—अप्रत्यस्तेति । अनिरस्तो देहसङ्कोचहस्तादिना करस्य प्रेमचापलकृतोऽवलेपोऽतिप्रवृत्ति अर्थात् स्तनकेशादिषु यस्मिन् रते । क्रियाविशेषण वा । तथापि नीवीविस्रसने प्रतिषेधो भवेदिति शङ्काया पुन कथनम्—अनतिव्याक्षिप्तनीवीग्रहम् । अनतिशब्देन अङ्गान्तरस्पर्शाद् विशेष । निर्बन्धेन क्रमेण वैपरीत्यगलनमिति प्रकाश्यते । तथा प्रक्षीण प्रतिषेधजल्पित यत्र मा मा मुञ्चेत्यादि, प्रक्षीणशब्देन क्रमगलनमुक्तम् । सम्प्रयोगान्तरोपलक्षणमेतत् । एवमनुकूल प्राप्यापि पूर्वं व्यावृत्तम् उत्क्रमवियोगि अननुकूलम् अत्यर्थं विस्मर्तुमस्मन्मनो नाकाङ्क्षति, अन्तरान्तरा तत्रापि प्रसरति । व्यावृत्तस्य दिङ्मात्र प्रकाशयति—लज्जया यत् लौल्य चापल तेन निरुद्ध रागलसित

१ 'शात गृहान्तरलुब्धा रा' इति ज पाठ

विदूषकः — (क) जइ एव्वं, कामरसो भोअणरसो वि एक्का जादी। भोअणरसो वि सुहळद्धो तह पीदिं ण उप्पादेदि, जह दुःखळद्धो। किं एदिणा। दप्पणं विअ दे दिट्ठिं पमज्जिदूण दक्ख मे ळळिअबह्मवच्चससोहग्गं रूवं। एदं खु कुदो वि सन्दाणरुक्खादो[1] पडिग्गहगहीदं तवणीयबह्मसुत्तं[2]। अण्णदो ळद्धं हेमदण्डअट्ठं। एत्तिअं काळं वाणरदूसिअजण्णोपवीदेण मए माणसेण[3] बह्मसुत्तेण णिव्वत्तिदाणि णिच्चकम्माणि। अज्जप्पहुदि मुक्खेण एव्व अणुट्ठाणं करेमि। (राज्ञो मुखमालोक्य) भो अन्धआरे[4] मए णच्चिदं[5]। अत्तभवं पुण अण्णं चिन्तेदि। अण्णं मए पळविदं। कि विअ[6] एदं।

(क) यद्येव, कामरसो भोजनरसोऽप्येका जाति । भोजनरसोऽपि सुखलब्धस्तथा प्रीतिं नोत्पादयति, यथा दुःखलब्ध । किमेतेन। दर्पणमिव ते दृष्टिं प्रमृज्य पश्य मे ललितब्रह्मवर्चससौभाग्य रूपम्। एतत् खलु कुतोऽपि सन्तानवृक्षात् प्रतिग्रहगृहीत तपनीयब्रह्मसूत्रम्। अन्यतो लब्ध हेमदण्डकाष्ठम्। एतावन्त काल वानरदूषितयज्ञोपवीतेन मया मानसेन ब्रह्मसूत्रेण निर्वर्तितानि नित्यकर्माणि। अद्यप्रभृति मुख्येनैवानुष्ठान करोमि। भो अन्धकारे मया नर्तितम्। अत्रभवान् पुनरन्यच्चिन्तयति। अन्यन्मया प्रलपितम्। किमिवैतत्।

यत्र। लसित प्रसरणम्। यत्र यत्र रागस्य स्फुरण तत्र तत्र लज्जा रुणद्धि। तेन प्रत्यालिङ्गनादिष्वप्रवृत्ति। एवम्भूतमपि हृद्यमिति मनस प्रतीति। रतौ दुःखरूप यच्छील स्वभाव तेन ललितम्। तत्रापि ललितत्वमेव स्फुरति। अलब्धे कृच्छ्रलब्धे सुखलब्धेऽपि सुखप्रतीतेर्दुरवबोधत्वम् ॥ १ ॥

एव प्रियानुसन्धानपरतन्त्रतया वयस्यस्य हास्यवचनानवधानेन भवानन्य-

१ 'दो गहिदो पडिग्गहो त' इति क-ख पाठ  २ 'य' इति क-ख पाठ  ३ 'ण ज'ण्णोपवीदेण' इति क पाठ  ४ 'रेण म' इति क. पाठ  ५ 'ण णच्चिदम्' इति क. पाठ.  ६. 'पि ए' इति क पाठ

राजा— सम्यगाह भवान्। न केवलं तव सख्या विप्रयोगविधुरं हृदयमेव। कुतः—

वक्षः कुचकलशाभ्यां चक्षुर्वपुषा ममास्यमधरेण।
नैतत् क्षणमपि तस्याः क्षमते विश्लेषवैक्लव्यम्॥ २॥

विदूषकः— (विहस्य) (क) परिणअणादो पुव्वं सङ्गमो सङ्गमो त्ति परिदेविअं। अज्जे उण विरहो विरहो त्ति अक्कन्दसि[२]। ता अदिदुस्सहो दे संसारो। (कर्णं दत्त्वा) भो मा सन्तप्प। एदेण णेउरसद्देण कमळिणी विअ कळहंसरवेण पच्चासण्णा सूइज्जइ तत्तहोदी।

(ततः प्रविशति नायिका मेनका चैव विभवतः सपरिवारा)

नायिका—(ख) सहि! अदिदुक्खरं खु मए किदं, जं पडिकम्म-

(क) परिणयनात् पूर्वं सङ्गम सङ्गम इति परिदेवितम्। अद्य पुनर्विरहो विरह इत्याक्रन्दसि। तदतिदुस्सहस्ते संसार। भो मा सन्तप। एतेन नूपुरशब्देन कमलिनीव कलहंसरवेण प्रत्यासन्ना सूच्यते तत्रभवती।

(ख) सखि! अतिदुष्करं खलु मया कृतं, यत् प्रतिकर्मप्रसङ्गेनार्यपुत्रमपश्यन्त्या

चिन्तयति, अन्यन्मया प्रलपितमिति तद्वचनमनुवदति — सम्यग् भवानाह। प्रियाविप्रयोगवैधुर्यमत्र हेतुरित्यनुवादरूपेणाह — न केवलमिति। तव सख्या मत्सख्युस्तव मत्प्रिया सख्येवेति तथोक्तम्। विप्रयोगे प्रसाधनादिकृतं तेन विधुरं हृदयमेव न केवलं विश्लेषवैक्लव्यं न सहते। ममैतद् वक्षः क्षणमपि कुचकलशाभ्यां विश्लेषवैक्लव्यं न सहते कुचकलशसंश्लेषे वक्षसोऽधिकार इति वक्षसः कथनम्। चक्षुर्वपुषा। आस्यमधरेण। शेषं पूर्ववत्। वक्षःप्रभृतीनां वैक्लव्यमारोपितम्॥ २॥

अथ नायिकाया विरहासहत्वं प्रकाशयति — सखि! अतिदुष्करं खलु मया

१ 'अवि' इति क पाठः। २ मि। 'मए अदिदुक्खहो दे' इति क-ख पाठः। ३ सू. एदि त' इति क पाठः। ४ 'च) मा' इति ख पाठः।

प्पसङ्गेण अय्यउत्तं अपेक्खन्तीए मए जुअसहस्सं विअ णीदो कालो । आकप्पविहाणं पि सुट्ठु ण परिणिट्ठिअं । तह वि तुवरइ मे हिअअं अय्यउत्तदंसणुस्सवस्स । ता कहिं अय्यउत्तो ।

**मेनका**---(क) एसो करदळोदअतीरगए मन्दारळदामण्डवे वअस्सेण सह एदं एव्व दिसं ओळोअअन्तो चिट्ठइ । ता एदु एदु पिअसही ।

(परिक्रामतः)

**राजा**---( नायिकामवलोक्य) सखे !---

मया युगसहस्रमिव नीतः कालः । आकल्पविधानमपि सुष्ठु न परिनिष्ठितम् । तथापि त्वरते मे हृदयमार्यपुत्रदर्शनोत्सवस्य । तत् कार्यपुत्रः ।

(क) एष करतलोदकतीरगते मन्दारलतामण्डपे वयस्येन सहैतामेव दिशमवलोकयंस्तिष्ठति । तदेत्वेतु प्रियसखी ।

कृतं, यत् प्रतिकर्मप्रसङ्गेन अलङ्करणप्रवृत्त्या आर्यपुत्रमपश्यन्त्या युगसहस्रमिव नीतः कालः । अल्प इति शेषः । इष्टवियोगेन मनसः खेदादतिदैर्घ्यप्रतीतिः । (अखम्? एवम् ) उभयोर्विरहासहिष्णुतया सम्भोगशृङ्गारस्य सौभाग्यातिशयः प्रकाशितः ॥

अथ नायिकामवलोक्याह—सखे! प्रियतमागमनचातुर्यदर्शनेऽहं नापेक्षित इति कोपं मा कृथाः । सैषा अस्मन्नयनचकोरचन्द्रिका प्रतिपालिता एषा । देवी इदानीमपूर्वां कान्तिमुद्वहन्ती । समुपैति साम्मुख्येन समीपमागच्छति । इदानीमेवमुत्प्रेक्षितु शक्यं—प्रेम्णा स्नेहेन 'अस्मत्स्वामिनो दुहितेयं तदनुसराम' इत्यनुयातैः पितृसङ्ग्रहैः सङ्गृह्णन्त इति सङ्ग्रहाः सारथ्यादयः तैः सङ्गता संश्लिष्टेव । के ते सग्रहा इत्याकाङ्क्षायामुत्प्रेक्षानिर्वहणायारोपः । बिम्बाधरेण

१. 'ळो । ण आ' इति घ. पाठ. २. 'ण सपरि' इति घ. पाठः. ३. 'ता तु' इति क-ख. पाठः. ४. 'अ । ता' इति ख घ. पाठः. ५. 'हिं' णु खु अ' इति ख. पाठः, 'हिं एव्व अ' इति घ. पाठः. ६. 'वि' इति ख. पाठः. ७. 'इ । ए' इति घ. पाठः, ८. 'ही । रा' इति क-ख-ग. पाठः.

विम्बाधरेण सुतरामरुणेन सैषा
क्षौमस्य कल्पकभुवः किरणैर्हरिद्भिः।
आताम्रकोमलकरा समुपैति देवी
प्रेमानुयातपितृसङ्ग्रहसङ्गतेव ॥ ३ ॥

**नायिका**—(उपसृत्य) (क) जेदु अय्यउत्तो।

**मेनका**—(ख) जेदु महाराओ।

**राजा**—(सादरमुत्तिष्ठन्)

सर्वाङ्गीणेन तन्वङ्गि! स्तनस्पर्शामृतेन मे।
निर्वापयन्ती गात्राणां परिपूरय लालसम् ॥ ४ ॥

(परिष्वज्योपविशन्) सखि! मेनके! सनाथीक्रियतामासनम्।

---

(क) जयत्वार्यपुत्रः।

(ख) जयतु महाराजः।

---

अरुणेन सारथिना। विम्बाधरस्यारुणत्वमारोपितम्। आरुण्यमपि स्फुरति। अत्र सुतरामित्यरुणपदेन सम्बन्धे अरुणत्वमेव वाच्यं भवेत्। तत आरोपो न सिध्यति। अतः सुतरां प्रेमानुयातेति योज्यम्। एवं कल्पकभुवः तदुद्भवस्य क्षौमस्य परिधानीयस्य उत्तरीयस्य वा किरणैः कान्तिभिरेव हरिद्भिः सूर्याश्वैः। हरिद्वर्णैरिति च स्फुरत्यारोपसङ्गतये। तथा आताम्रकोमलकरा रूपकरा इति श्लिष्टं वाचकम्। रश्मीनामपि तत्सग्रहात् तत्राप्यारोपः। अत्र श्लेषकृतं रूपकृतं च चातुर्यं प्रकाशितम् ॥ ३ ॥

आगता प्रार्थयते—तन्वाङ्गि! अहं त्वदङ्गसौकुमार्यमनुसराम्येव। अतः स्तनस्पर्शामृतेन गात्राणां लालसम् आलिङ्गनोत्सुक्यम्। परिपूरय सफलय। कथं स्तनस्पर्शेन सर्वाङ्गतुष्टिः तत्राह—सर्वाङ्गीणेन सर्वाङ्गव्यापिना। अत्र स्पर्शामृतत्वारोपः। अमृतस्यैकदेशसिक्तस्य सर्वाङ्गव्यापकत्वम्। अमृतासेकापेक्षया पूर्वं मृतप्रायत्वं ध्वनितम् ॥ ४ ॥

---

१. 'तें' इति ख. पाठः २. 'सात' इति क-ग. पाठः

**मेनका**—(क) जं महाराओ आणवेदि।

(सर्वे उपविशन्ति)

**राजा**—(मेनकां विलोक्य) किंकृतमसन्निधानमद्य सख्या मे रम्भायाः[3]।

**मेनका**—(ख) महाराअ! केण वि कज्जन्तरेण भअवदीए सावित्तीए सआसं पत्थिआ।

**विदूषकः**—(नायिकामवलोक्यै ससम्भ्रमम्) (ग) भो! वअस्स! किं चिकिच्छओं वि आणुजत्तेण एव्व सह गआ।

**राजा**—किमिदानीं चिकित्सकैः प्रयोजनम्।

**विदूषकः**—(घ) तत्तहोदीए पण्डुरोओ समुप्पण्णो। एदस्स जुत्तिं पि कहेमि। पुव्वं कामोपद्दव त्ति सक्कं भणिदुं। अज्ज उण तुए सङ्गदाए कहं अणिमित्तं आपण्डुरं गत्तं होइ।

**राजा**—कोऽन्यः परिज्ञाता व्याधिविशेषाणाम्। मूर्ख! हारप्रभा भवन्तं व्यामोहयति।

**विदूषकः**—(निरूप्य) (ङ) जुज्जइ। (पुनर्मेनकां विलोक्य) भोदि! माणु-

---

(क) यन्महाराज आज्ञापयति।

(ख) महाराज! केनापि कार्यान्तरेण भगवत्याः सावित्र्याः सकाशं प्रस्थिता।

(ग) भो वयस्य! किं चिकित्सका अप्यानुयात्रिकेण सह गताः।

(घ) तत्रभवत्याः पाण्डुरोगः समुत्पन्नः। एतस्य युक्तिमपि कथयामि। पूर्वं कामोपद्रव इति शक्यं भणितुम्। अद्य पुनस्त्वया सङ्गतायाः कथमनिमित्तमापाण्डुरं गात्रं भवति।

(ङ) युज्यते। भवति! मानुषचापलाद् द्विगुणं ब्राह्मणचापलं त्वां पृच्छति।

---

१ 'आ—(क' इति ख. पाठः. २ 'स्नया।' इति क-ग. पाठः. ३. 'कृतम्) भो' इति ग. पाठः. ४. 'आ आ' इति क. पाठः. ५ 'अ' इति ग. पाठः. ६. 'दु। इदाणिं दु' इति क ग. पाठः, 'दु। अम्म दु' इति ग. पाठः. ७. 'ण्डुरा हो' इति घ. पाठः.

सच्चावलादो विउणं बह्मणच्चावलं तुमं पुच्छइ । कुदो[1] एद-
स्स विह्मअणिज्जस्स हारस्स आगमो ।

**मेनका**—(क) अत्थि पञ्चजण्णसम्भूदेहि मोत्तिएहि रइओ भअ-
वदा तिविक्कमेण अत्तचरणसम्भूदाए[2] गङ्गाए दिण्णो हारो ।
सो एसो तिस्से सहीए कालिन्दीए बहिणिआए पेसिदो ।

**राजा**—अयि सवितृसम्भवे! सोऽयमतिचिरादात्मोचितां भुवम-
वतीर्णः । अपि च—

कुचसरसिजबन्धोरस्य हारस्य गौराः
परभृतपरिपाटीपक्षतिश्यामलेऽस्मिन् ।

---

कुत एतस्य विस्मयनीयस्य हारस्यागमः ।

(क) अस्ति पाञ्चजन्यसम्भूतैर्मौक्तिकै रचितो भगवता त्रिविक्रमेणात्मचरण-
समुद्भूतायै गङ्गायै दत्तो हारः । स एष तस्याः सख्या कालिन्द्या भगिन्यै
प्रेषितः ।

---

अस्तीत्यादि । आत्मचरणसमुद्भूतायै गङ्गायै दत्त इति दानौचित्यमुक्तम् ।
एष तस्याः सख्या कालिन्द्येति स्वाधीनताद्योतकम् । अत एव भगिन्ये अन्ये
कालिन्द्या प्रेषितः चेद्या समर्प्य दत्त ॥

एवं हारागमनं श्रुत्वा गुणवर्णनेन नायिकाया विस्रम्भं परिपोषयति—
**अयीति** । सवितृसम्भवे! इति उत्पत्तिगौरवस्य सदृशमेव तव सर्वम् । यतः सोऽयं
हारोऽतिचिरात्, पूर्वं पाञ्चजन्यत उत्पत्तिः, ततो भगवत्प्रतिग्रहः, ततो गङ्गा
प्राप्तिः, ततो यमुनापरिग्रहः, ततो जन्मान्तरसुकृतगौरवेण (चरणो[2] चिरेणा)पि
ततस्ततो निर्गम्येदानीं स्वगौरवसदृशीं भुवमवतीर्णः । अपि चात्र विशेषं कथ
यामि—**कुचसरसिजस्य** बन्धोः सन्निधानेन शोभाकरत्वाद् बन्धुत्वम् । अस्य हारस्य
कराणां पूरा नभसि परिपतन्तः परितः पतन्तः प्रसरन्तो भान्ति । गौरा इत्यौपम्य-
स्फुटीकरणाय । परभृतानां परिपाटी परम्परा, तत्पक्षतिवत् श्यामले । अत्रापि
सादृश्यवैशद्याय श्यामलत्वकथनम् । अस्मिन् पतन्तः कथं भान्ति । तत्र स्वसुर्यमु-

---

१ 'दो वि' इति ख घ पाठः  २ 'म्भवाए' इति ख पाठः

नभसि परिपतन्तो भान्ति पूराः कराणां
स्यसुरिव तव सख्याः स्रोतसामम्बुराशौ ॥ ५ ॥

(नेपथ्ये)

सकुसुममधुगन्धधूपदीपाद्युपकरणान्युचितानि सम्भृतानि ।
अयमिह रतिपूजनाय देव्यै समय इति त्वरितं निवेदनीयम् ॥ ६ ॥

नायिका — हं ।

राजा — सखि ! मेनके ! किमेतदुपक्रान्तम् ।

मेनका — (क) सुणादु महाराओ । महाराअसङ्गमादो पुव्वं एदाए भअवदीए रदिदेवीए उवआचिदं — जदा अय्यउत्तेण सङ्गमिस्सं, तदा महुअराणुच्छिट्ठेहि कुसुमासवेहि अग्घं दे दइस्सं त्ति । एसो अत्थो सङ्गमसुहेण एत्तिअं कालं विसुमरिदो सहीए । तण्णिमित्तो एसु अअं आरम्भो ।

**राजा**—(नायिकामुखमवलोक्य सस्मितम्) अतिललितोऽयमाराधनक्रमः । इदं पुनर्विपरीतं वर्तते ।

सम्प्राप्तुं रतिरसिताक्षि! कामदायाः
सा कामं वरमुपयाचतां भवत्याः ।
नामुष्याः पशुपतिलुप्तभर्तृकायाः
सम्प्राप्यं तव दयिते! समर्थयामि ॥ ७ ॥

**नायिका**—(क) अय्यउत्तमुहे एव्व किदवसदीणि चाडुवअणाणि ।

**मेनका**—(ख) एत्तिएण वि काळक्खेवेण सङ्किदं णो हिअअं । ता अणुमण्णेदु[3] महाराओ ।

**राजा**[4]—प्रिये! यद्येवं, निर्वर्त्त्यतां तव सखीप्रणयः ।

(क) आर्यपुत्रमुख एव कृतवसतीनि चाटुवचनानि ।

(ख) एतावतापि काल्क्षेपेण शङ्कित नो हृदयम् । तदनुमन्यता महाराज ।

कुसुमासवैरर्घ्यं ते दास्यामीति । एषोऽर्थ सङ्गमसुखेनेयन्त काल विस्मृत सख्या । तत् तन्निमित्तोऽयमारम्भ ॥

इति मेनकावचनमाकर्ण्य नायिकाभिमुख सस्मितमाह—अतिललितोऽयमाराधनक्रम । ललितत्वेन तत्कार्य हृद्यत्व लक्ष्यते । इद पुनर्विपरीत वर्तते । विपरीतमित्याराध्याराधकभावस्य व्यत्यासेन सिद्धत्वाद् वैपरीत्यम् । तदाह—सम्प्राप्तुमिति । असिताक्षि! असिताक्षीनि स्वरूपचातुर्यमनिरूप्य तवोपयाचने सम्भ्रमो जात । रति भवत्या काम वर सम्प्राप्तुमुपयाचता 'मम भर्तार दास्यसि चेदहमेव करोमी'ति । यत कामदाया कामदाने तव स्वातन्त्र्यम्, अतो रतेस्त्वा प्रत्युपयाचन युक्तम् । दयिते! तवामुष्या रते सकाशाद् उपयाचनेन सम्प्राप्य न समर्थयामि । यत पशुपतिलुप्तभर्तृकाया पशुपतिना नयनाग्निदग्धकान्ताया, अशरणाया । तव सर्वकामसम्पूर्णाया । एव स्थिते उपयाचनदानाय रतिपूजनोपक्रम इत्युक्त विपरीतम् ॥ ७ ॥

१ 'का विलो' इति ख पाठ, 'काभिमुख स' इति घ पाठ २ 'क्व) अ' इति क पाठ ३ 'ण्ण' इति ग पाठ ४ 'जा—य' इति क पाठ

**विदूषकः**—(क) जइ एव्वं ववसिदं, जदा सोत्थिवा[1]अणकाळो भविस्सदि तदा सम्पण्णो बह्मणो सुमरिदव्वो ।

**मेनका**— (ख) मुक्ख! किं तव एदिणा[2] ।

(राज्ञो मुखात् कथमपि दृष्टिमाक्षिपन्ती सख्या सह सपरिवारा निष्क्रान्ता[3] नायिका)

**राजा**—वयस्य! केनेदानीं वि[4]नोदेन सहचरीविप्रवासमलीमसं कालं[5] यापयामि ।

**विदूषकः**[6]—(सनिर्वेदम्) (ग) को एत्थ णिम्माणुसे जिण्णाडवीमज्झे विणोदो[7] । एत्तिअं[8]मत्तं एत्थ सारं । जइ रक्खसीणं फुळ्ळीणं च मुहे अपाडिअ सञ्चरिदुं पारिज्जइ, तदो सक्कं सन्दाणरुक्खादो भिक्खं अडिदुं ।

(ततः प्रविशति भीषणवेषा राक्षसी)

---

(क) यद्येवं व्यवसितं, यदा स्वस्तिवाचनकालो भविष्यति, तदा सम्पन्नो ब्राह्मणः स्मर्तव्यः ।

(ख) मूर्ख! किं तवानेन ।

(ग) कोऽत्र निर्मानुषे जीर्णाटवीमध्ये विनोदः । एतावन्मात्रमत्र सारम् । यदि राक्षसीनां फुल्लीनां च मुखे अपतित्वा सञ्चरितुं पार्यते, ततः शक्यं सन्तानवृक्षाद् भिक्षामटितुम् ।

---

एवं प्रसक्ताय रतिपूजनाय तस्या गतायाः प्रवृत्तिः प्रतिपाद्यते । सारम् उपादेयम् । फुल्लीणं फुल्लीनां व्याघ्रीणाम् ॥

अथ नायकयोर्यादृच्छिकप्रणयकलहप्रस्तावाय राक्षसीप्रवेशः ॥

---

१. 'वं' इति ग. पाठः २. 'णा । (नायिका रा' इति क. घ. पाठः ३. 'न्ता । रा' इति क. घ. पाठः ४. 'नोदेन' इति क. घ. पाठः ५. 'च' इति क. ग. पाठः ६. 'क—का' इति ग. पाठः ७. दो । ज इति घ. पाठः ८. 'अ ए' इति क. पाठः ९. 'मअं' इति ग. पाठः

राक्षसी — (सरोषम्)

(क) अहके ळोशपळित्ता माआदण्डेहि णिक्खमोक्खेहि ।
शंवळणश्श शळीळं भञ्जिश्शं शळिळकुम्भं व ॥ ८ ॥

अज्ज शंवळणशळशदमुशिदजीविअशअन्धाहिं शअळळक्खशीहिं शाणुणअं अब्भत्थिदह्मि "शहि! मोहिणिए! तुज्झ माआबळेण इशिशळणं ळाआवशदं शंवळणं कहं वि गेह्निअ शमुद्दमज्झे पक्खिवऊण माळेहि" त्ति। शा वि अहं तेण वावादिअपुत्तशदा विउणिअळोशा शहीणं णिओअं कादुं ववशिदह्मि । ता अण्णेशिश्शं दाव । (परिक्रम्यावलोक्य) एशे एशे केण वि बह्मणेण शह शन्दाणळदामण्डवे चिट्ठइ (विदूषकमवलोक्य सृक्किणी परिलिहन्ती) एदं बह्मणं

(क) अह रोपप्रदीप्ता मायादण्डैस्तीक्ष्णमोक्षैः ।
सवरणस्य शरीरं भङ्क्ष्यामि सलिलकुम्भमिव ॥

अद्य सवरणशरशतमुषितजीवितसगन्धाभिः सकलराक्षसीभिः सानुनयमभ्यर्थितास्मि—"सखि! मोहिनिके! तव मायाबलेन ऋषिशरणं राजापसदं सवरणं कथमपि गृहीत्वा समुद्रमध्ये प्रक्षिप्य मारय" इति । साप्यहं तेन व्यापादितपुत्रशता द्विगुणितरोषा सखीनां नियोगं कर्तुं व्यवसितास्मि ।

प्रविष्टा सा सरोषमाह—अहके इत्यादि । अह रोषप्रदीप्ता मायादण्डैस्तीक्ष्णमोक्षैः । सवरणस्य शरीरं भङ्क्ष्यामि सलिलकुम्भमिव ॥ ८ ॥ सवरणशरशतमुषितजीवितसगन्धाभिः सकलराक्षसीभिः सानुनयमभ्यर्थितास्मि । सगन्धा बन्धवः । सखि! मोहिनिके! तव मायाबलेन तम् ऋषिशरणं राजापसदं कथमपि गृहीत्वा समुद्रमध्ये प्रक्षिप्य मारयेति । साप्यहं तेन व्यापादितपुत्रशता (स्मि [१]) द्विगुणितरोषा सखीनां नियोगं कर्तुं व्यवसितास्मि । तदन्वेषि(ष्ये [३] ष्यामि) तावत् । एष एष केनापि ब्राह्मणेन सह (मन्दार [२] सन्तान)लतामण्डपे तिष्ठति । एतं ब्राह्मणं

१ 'स्त' इति ख पाठ   २ 'ण श इति क पाठ   ३ 'म्य) ए' इति क पाठ'
४. 'रिलेलि' इति ख पाठ

खाइदुकामाए कुळुकुळाअन्ती विअ मे दन्ता, शवदि ळाळाशळिळं। किन्तु एदश्शश महाणुभावश्श शमक्खं शुमळिदुं पि ण शक्कं, किं पुण खाइदुं। ता एव्वं दाव कळिश्शं। (अतिरमणीयरूपा भूत्वा राजानमुपसर्पति)।

राजा — (विलोक्य सविस्मयम्) सखे! पश्य पश्य—

पृथुनितम्बपयोधरलोचनं
तरलकेशचयं तनुमध्यमम्।
अनघमस्त्रमनङ्गधनुर्भृतः
किमपि वस्तु कुतः समुपागतम्॥ ९॥

विदूषकः — (क) एदस्सिं रण्णे पडिच्छण्णं णिस्सरन्ति वञ्चणसीळाओ इत्थिआओ। ण आणामि किं होदि त्ति।

तदन्वेषिष्यामि तावत्। एष एष केनापि ब्राह्मणेन सह सन्तानलतामण्डपे तिष्ठति। एतं ब्राह्मणं खादितुकामायाः कुरुकुरायन्तीव मे दन्ताः, स्रवति लालासलिलम्। किन्त्वेतस्य महानुभावस्य समक्षं स्मर्तुमपि न शक्यं, किं पुनः खादितुम्। तदेवं तावत् करिष्यामि।

(क) एतस्मिन्नरण्ये प्रतिच्छन्नं निस्सरन्ति वञ्चनशीलाः स्त्रियः। न जानामि किं भवतीति।

खादितुकामायाः कुरुकुरायन्तीव मे दन्ताः, स्रवति लालासलिलम्। किन्त्वेतस्य महानुभावस्य समक्षं स्मर्तुमपि न शक्यम्, किं पुनः खादितुम्। तदेवं तावत् करिष्यामि। कुरुकुरेति दन्तसङ्घट्टनशब्दानुकरणम्॥

तस्या मायाविग्रहं वीक्ष्याह — पृथ्वित्यादि। मध्यपर्यायो मध्यमशब्दः। अनघम् अप्रतिहतम्। किमपि वस्त्विति स्त्रीलक्षणे दृष्टेऽपि शोभातिशयेनापरिच्छेद्यरूपत्वादुक्तम्। कुत इति कस्माद्देशात् कस्माद्धेतोरिति च॥ ९॥

१. 'चा न्' इति च. पाठ.. २. 'ष्न खचर' इति क. पाठ.. ३. 'न्तीओ व' इति ग. पाठः. ४. 'ष्षो रक्खशीओ विअ मव्याओ इ' इति घ. पाठः. ५ 'अविस्सरिद त्ति' इति ख. पाठः.

**राक्षसी** — (श्रुत्वा सविषादं सकम्पं च)[1] (क) कहं वञ्चणसीळ त्ति[2]। ल-क्खिदह्मि इमिणा । भस्शीहूदे मे मणोळहे ।

**राजा** — मैवं[3] वादीः । न सर्वा नार्यो विप्रलम्भशीलाः ।

**राक्षसी** — (सहर्षम्) (ख) दिट्ठिआ ण मं उद्दिसिअ एशे भणादि । (उपसृत्य) जेदु महाराओ ।

**राजा** — स्वागतं[4]मत्रभवत्यै । का त्वं । किञ्चागमनप्रयोजनम् ।

**राक्षसी** — (ग) सुणादु महाराओ । अत्थि गन्धव्वराअस्स चि-त्त[5]रहस्स धीदा गअणमाळा णाम रूवेण अप्पडिमा क-ण्णआ । अहं तिस्से वअस्सिआ सुमणा[6]वई णाम । सा महाराअस्स अणेअदेवासुरसङ्गामविजइणो गुणेहि अ-क्खित्तहिअआ मए सह महाराअं दक्खिउं हत्थिणउरं गआ ।

**राजा** — ततस्ततः ।

**राक्षसी** — (घ) तदो कत्तिएआवासपरिसरुज्जाणगअं अत्तणो प-दजुअळं सकामळे[7]हं कण्णऊरं च दक्खन्तस्स[8] महाराअस्स दिट्ठिराअं ओळोइअ किञ्चि अस्सासिअहिअआ पिदुपरा-

---

(क) कथ वञ्चनशीला इति। लक्षितास्म्यनेन । भस्मीभूतो मे मनोरथः ।

(ख) दिष्ट्या न मामुद्दिश्यैष भणति । जयतु महाराजः ।

(ग) शृणोतु महाराजः । अस्ति गन्धर्वराजस्य चित्ररथस्य पुत्री गगनमाला नाम रूपेणाप्रतिमा कन्यका । अह तस्या वयस्या सुमनावती नाम । सा महाराजस्यानेकदेवासुरसङ्ग्रामविजयिनो गुणैराक्षिप्तहृदया मया सह महाराज द्रष्टु हस्तिनपुर गता ।

(घ) ततः कार्तिकेयावासपरिसरोद्यानगतमात्मनः पदयुगल सकामलेखं कर्णपूर च पश्यतो महाराजस्य दृष्टिरागमवलोक्य किञ्चिदाश्वासितहृदया पितृपराधी-

---

१. ‘दम्) कहं’ इति क ख. पाठः. २ ‘त्ति आल’ इति ख. पाठ.. ३. ‘वम्। न’ इति क पाठः. ४. ‘त भ’ इति क. पाठः ५ ‘त्तमुह’ इति ख. पाठ. ६. ‘णोव’ इति ग. पाठः. ७. ‘हं च कण्णेउर द’ इति ख. पाठः. ८. ‘स्स दि’ इति ग पाठः.

हीणदाए अत्तणो णअरं पत्थिआ ।

**राजा** —(जनान्तिकम्) सखे! पदवतंसकयोरीदृशः परिणामः ।

**विदूषकः** —(क) जुज्जइ । एव्वं एदं । अण्णं च एसो णिरतिसओ गन्धो घाणगोअरं सम्पत्तो । ता तक्केमि अण्णाओ दिव्वकण्णआओ तुमं कामेदुं आअच्छन्ति त्ति ।

**राजा** —ततस्ततः ।

**राक्षसी** —(ख) तदो अज्ज तुज्झ सङ्गमणिबन्धणं किंचि अपेक्खन्ती भिउपडणाअ उच्चलिआ, मए कहं वि आसाजणणेहि वअणेहि णिवारिआ । जइ महाराओ सङ्गमाणुग्गहं ण करेदि, अवस्सं सा विवज्जइ । णाहं सहीमरणं दक्खिदुं पारेमि । ता पढमं महाराअस्स पुरदो अत्ताणं वावादइस्सं ।

**विदूषकः** —(अपवार्य) (ग) भो वअस्स! अपुव्वो खु एदाए दोसोवक्कमो । बळक्काळेण किल कामो उप्पादइदव्वो ।

**राजा**—(आत्मगतम्) अस्तु तावन्मम मनागप्यनौत्सुक्यजननममुष्या

---

नतयात्मनो नगरं प्रस्थिता ।

(क) युज्यते । एवमेतत् । अन्यच्चैष निरतिशयो गन्धो घ्राणगोचरं सम्प्राप्तः । तत् तर्कयाम्यन्या दिव्यकन्यकास्त्वां कामयितुमागच्छन्तीति ।

(ग) ततोऽद्य तव सङ्गमनिबन्धनं किञ्चिदपश्यन्ती भृगुपतनायोच्चलिता । मया कथमप्याशाजननैर्वचनैर्निवारिता । यदि महाराजः सङ्गमानुग्रहं न करोति, अवश्यं सा विपद्यते । नाहं सखीमरणं द्रष्टुं पारयामि । तत् प्रथमं महाराजस्य पुरत आत्मानं व्यापादयिष्यामि ।

(ग) भो वयस्य! अपूर्वः खल्वेतस्या दोषोपक्रमः । बलात्कारेण किल काम उत्पादयितव्यः ।

वचनम् । तथाप्येवमिदानीमेनां यापयामि । (प्रकाशम्) भद्रे! केषामनभिमतानि सचेतसामेतादृशानि स्वयमुपनतानि स्त्रीरत्नानि । किं बहुना, स्थिता वयमत्रभवत्या वचसि ।

राक्षसी --- (सहर्षम्) (क) जीवाविदह्मि महाराअस्स पसादेण । ता अज्ज पओसे सवअस्सेण महाराएण एत्थं[1] सण्णिहिदेण एव्व होदव्वं । मं पि विमाणं गेह्णिअ आअदं एव्वं[2] मण्णह । (निष्क्रान्ता[3])

विदूषकः[4] --- (ख) भो वअस्स! किं तुए ववसिदं ।

राजा --- अनभिज्ञो भवानस्मच्चित्तवृत्तीनाम् । किं वा तपतीगुणनिगलितां चित्तवृत्तिमन्यत्र चलयितुमलम् । साहसोपक्रमभीरुणा मयैतदुपन्यस्तम् । इदं पुनस्तदङ्गसम्पर्काभिमानदुर्ललितम् अन्यनारीगण्डोपश्लेषोपहतमपहरतय कर्णपूरम् ।

विदूषकः --- (विहस्य) (ग) अहो राअउळसेवआणं परिवाओ, जं एत्तिअं काळं भुअन्तरोवळाळिअस्स[6] एदस्स[7] कण्णेउरस्स खणेण अतक्किओ विणिवादो[8] संवुत्तो । (कर्णपूरं क्षिप्त्वा)

---

(क) जीवितास्मि महाराजस्य प्रसादेन । तदद्य प्रदोषे सवयस्येन महाराजेनात्र सन्निहितेनैव भवितव्यम् । मामपि विमानं गृहीत्वागतामेव मन्यस्व ।

(ख) भो वयस्य! किं त्वया व्यवसितम् ।

(ग) अहो राजकुलसेवकानां परिवादः, यदेतावन्तं कालं भुजान्तरोपलालित

---

१ 'त्थ ए' इति क-ख घ पाठ २ 'व्व अणुम' इति घ पाठ. ३ 'न्ता राक्षसा) वि' इति ग पाठ ४ 'क -- किं' इति क पाठ ५ त हृदयम' इति क पाठ ६ 'स्स क' इति ख पाठ. ७ स्स कह अतक्किआ खणण वि' इति घ पाठ, 'स्स अतक्किओ खणण वि' इति ख ग पाठ ८ 'दो (क' इति क पाठ

भो वअस्स! अच्छेरं अच्छेरं। एसो कण्णेउरो अम्बरेण णिईण्णो, ण उण पुहुवीअं पडिओ।

(नेपथ्ये)

याभिः कल्पितमभ्युपैति नृपतिः सङ्केतमाकस्मिकं
दुःखोदर्कमनात्मनीनमपृथुश्रोणीजनप्रापकम्।
दग्धास्ता भृगुकर्मभिः शुभतरैर्मायाः प्रपन्ना निजं
देहं मोहिनिका प्रयाति विफलीभूतक्रिया राक्षसी॥ १०॥

राजा—(सहर्षम्) सखे! तस्यां सविमानायामुपस्थितायां को नु खलु प्रत्याख्यानप्रकार इति पर्याकुलोऽहममुना सकलमेतन्मायाजालमुपपादयता विधिना साधु सङ्कटादुत्तारितोऽस्मि।

विदूषकः—(क) अहं पि रक्खसीए दाढाकुढारादो देव्वेण रक्खिदोह्मि।

(प्रविश्यापटाक्षेपेण कर्णपूरहस्ता)

मेनका—(ख) तुवरदु तुवरदु महाराओ।

---

स्यैतस्य कर्णपूरस्य क्षणेनातर्कितो विनिपातः संवृत्तः। भो वयस्य! आश्चर्यमाश्चर्यम्। एष कर्णपूरोऽम्बरेण निगीर्णः, न पुनः पृथिव्यां पतितः।

(क) अहमपि राक्षस्या दंष्ट्राकुठाराद् दैवेन रक्षितोऽस्मि।

(ख) त्वरतां त्वरतां महाराजः।

---

याभिरित्यादि। याभिर्मायाभिः। अभ्युपैति अङ्गीकरोति। आकस्मिकं निर्निमित्तम्। दुःखोदर्कम् उपरि दुःखावहम्। अनात्मनीनम् आत्मने अहितम्। अपृथुश्रोणीजनप्रापकं पृथुश्रोणीजनप्रापकं च न। भृगुकर्मभिः मायाशमनैः कर्मभिः। प्रपन्नेत्यादि वाक्यान्तरम्॥ १०॥

---

१. 'उ' इति क-प पाठः २. 'आ—गणं' इति ग पाठः. ३. 'शानन्दम्) मुणे' इति ग पाठः
४. 'क' इति क-उ-ग पाठः ५. 'सामिनसा) मे' इति क पाठः ६. 'ओ।ज' इति क-ग-प पाठः

राजा — (ससम्भ्रमम्) किमिति किमिति ।

मेनका — (क) जदा सा णिसाअरी तिस्से भिउपडणवुत्तन्तं कहेदुं पवुत्ता, तदा मए सह आअदा सही महाराअस्स सङ्केदवअणं सुणिअ कुविदा पत्थिआ । मए उण कहन्तं पडिक्खन्तीए ठिदाए जाणिदो परमत्थो । ता सिग्घं गदुअ अणुणेदु महाराओ ।

राजा — (सविषादम्) कासौ कासौ ।

मेनका — (विलोक्य) (ख) एसा सही कळ्लाणवामणघरं पविसइ । उवसप्प णं ।

(सर्वे ससम्भ्रमं परिक्रामन्ति) ।

(प्रविश्य)

नायिका — (सप्रणामम्) (ग) भअवं पदुमावळ्लह ! पुव्वं कामग्गिपळिज्जन्तं भअवदा पच्चुज्जीविअं मे सरीरं । अज्ज उण

---

(क) यदा सा निशाचरी तस्या भृगुपतनवृत्तान्त कथयितुं प्रवृत्ता, तदा मया सहागता सखी महाराजस्य सङ्केतवचन श्रुत्वा कुपिता प्रस्थिता । मया पुनः कथान्त प्रतीक्षमाणया स्थितया ज्ञातः परमार्थ. । तत् शीघ्रं गत्वानुनयतु महाराजः ।

(ख) एषा सखी कल्याणवामनगृहं प्रविशति । उपसर्पैनाम् ।

(ग) भगवन् पद्मावल्लभ ! पूर्वं कामाग्निप्रदीप्यमान भगवता प्रत्युज्जीवित मे श-

---

कहन्तं कथान्तम् ॥

भअवं इत्यादि । पदुमावळ्लह ! पद्मायाः वल्लभ ! कदाचिदप्यनिष्टानाचरणादन्यासां मन्दभाग्यानामेवं न भवेदिति व्यज्यते । पूर्वं कामाग्निप्रदीप्यमान

---

१. 'ए जा इति ख. पाठ. २. 'णुमण्णेदु' इति क. पाठः. ३. 'दु ण म' इति घ. पाठः. ४. 'का – ए' इति ख. पाठः. ५. 'ण प' इति ख. पाठ. ६. 'इ । वा उवसप्पम्ह । (स' इति ख. पाठः. ७ 'प्पदु ण' इति क-घ पाठः. ८. '(न्ति । ततः प्रविशति ना' इति ग. पाठः.

अय्यउत्तपरिभवाणळदाहेण विवज्जन्तं एदं अणुमण्णेहि।

राजा[2] --(ससम्भ्रममुपसृत्य) प्रेयसि! किं किं, परिभवानल इति।

(नायिका सभ्रूभङ्गं परावृत्य प्रस्थातुमिच्छति)

राजा--(अंशुकान्ते गृह्णन्)

मम भवतु न तत्त्वतः क्षमस्ते
प्रणयगतीरवगन्तुमन्तरात्मा।
असदृशमवमानमात्मनि त्वं
कथमिव मुग्धमृगाक्षि! सन्तनोषि॥ ११॥

---

रीरम्। अथ पुनरार्यपुत्रपरिभवानलदाहेन विपद्यमानमेतदनुमन्यस्व।

---

भगवता प्रत्युज्जीवितं मे शरीरं भवदनुग्रहेणैव भर्तृलाभप्रत्युज्जीवितं शरीरमिति जीवशरीरयोरभेदोपचारः। अस्मत्प्राणदानेन शरीरमपि रक्षितमित्यर्थः। अथ पुनरिति अवस्थाबलेन प्रार्थनाया वैपरीत्यं जातम्। आर्यपुत्रपरिभवानलदाहेन आर्यपुत्रस्य परिभवः अनादरः अन्यस्त्रीपरिग्रहसङ्केतेन, स एवानलः तेन यो दाहः दहनं तेन विपद्यमानम्। एतत् शरीरम्। अनुमन्यस्व न निषेधोऽत्र कार्यः। कान्तपरिभवस्यान्तर्बहिस्तापकरत्वेनानलत्वमारोपितम्॥

तद्वचनं श्रुत्वानुवदति—प्रेयसि! किं किं, परिभवानल इति। तव प्रेयसीत्वे कथमेवंवचनस्योपपत्तिरिति भावः॥

ममेति। भवच्चित्तानुसरणैकपरस्य (मम) ते प्रणयगतीः ते गम्भीरस्वभावायाः प्रणयप्रवृत्तीः अवगन्तुम् एवमस्या मयि मनोवृत्तिरिति तत्त्वतो निश्चेतुमन्तरात्मा प्रेमचपलः अक्षमो भवतु। तद् युक्तमेव। तदा तदा किमभिरुचितं किं वर्ततीतीच्छानुसरणदीक्षित एव। एवं स्थिते त्वं महनीयरूपा आत्मन्यसदृशमवमानं किं करोषि। अनेनाहं परिभूता अहमनादरयोग्या इति प्रतीतिरेवात्र हेतुः अन्यथा मा न परिभवेदिति मदभिप्रायज्ञाननिपुणया स्थातुमेव युक्तम्। असदृशत्वमेव स्फुटयति—मुग्धमृगाक्षीत्यनेन॥ ११॥

---

१ 'न्ति न दं' [illegible] पाठः २ 'आ—(उ?)' [illegible] पाठः ३. '[illegible]) [illegible]' [illegible] पाठः

मेनका — (क) सहि ! अळं कोवेण । (कर्णे) एव्वं विअ ।

नायिका — (ख) हद्धि अत्थाणे कदत्थिदो अय्यउत्तो । (राजाभिमुखी) जेदु अय्यउत्तो ।

राजा — (सहर्षं परिष्वज्य) अयि ! अस्थानकुपिते ! तव तावदेतादृशा अलीकव्यलीका एव सम्भवेयुरमुष्मिन् दासजने कोपहेतवः ।

मेनका — (ग) भो राअवयस्स ! एसो दे आआसणिइण्णो वतंसओ । गेह्ण णं ।

विदूषकः — (सभयम्) (घ) ण दावं मे खेमअरो रक्खसीणं कण्णऊरो । ण गेह्णिस्सं ।

राजा — (नायिकामपवार्य) सखि ! मेनके ! किमस्मान्मर्मण्युद्घट्टयासि ।

(क) सखि ! अल कोपेन । एवमिव ।

(ख) हा धिग् अस्थाने कदर्थित आर्यपुत्र । जयत्वार्यपुत्र ।

(ग) भो राजवयस्य ! एष ते आकाशनिगीर्णो वतसक । गृहाणैनम् ।

(घ) न तावन्म क्षेमकरो राक्षसीना कर्णपूर । न ग्रहीष्यामि ।

कदत्थिदो कदर्थित । अपराधित्वमारोपितमित्यर्थ ॥

तव अमुष्मिन् दासजने कोपहेतव यथाय तथा पुनरपि अलीकव्यलीका एव भवेयु । अमुष्मिन् दासजने कदाचिदप्यनिष्टाचरणविमुखे । अलीकम् असत्य व्यलीक दुःख येषु । तेनापि हेतुना कोप, कोपस्य परकाष्ठाया व्यलीक भवेत् । तस्यालीकत्वाशसया तत्कारणस्याप्यलीकत्वमाशसित भवति । अन्यथा कार्यमप्यलीक न भवेत् । अतो यदृच्छया भावित कोपहेतुस्तत्फल कोपश्च मिथ्यैव भवतीत्याशसित भवति ॥

आआसणिइण्णो आकाशनिगीर्ण ॥

१ ता । राजा-(स' इति ख घ पाठ  २ ज्य ) सखि ! ज' इति घ पाठ  ज्य अस्या इति क पाठ  ३ उ' इति क-ख पाठ  ४ 'एद इति ग घ पाठ  ५ 'व स' इति क पाठ

**मेनका** — (क) महाराअ! अळं सङ्काए। एदाए च्चिअ एसो कण्णऊरो तं पदजुअळं च।

**राजा**[1] — (सपरितोषम्) दिष्ट्या चिरादद्य हृदयनिखातं संशयशल्यमुद्धृतं भवत्या। सखे! सोऽयमकोपान्तरायः प्रियापरिष्वङ्गः। स्वीक्रियताम्[2]।

**विदूषकः**[3] — (ख) एव्वं होदु (गृहीत्वा परितो[4] विलोकयन्[5]) भो! अकामुआणं अह्माणं अणदिक्कमणीओ सञ्झोवासणसमओ[6]।

**राजा**[7] — (समन्तादवलोक्य) सखे! सम्यगनुप्रबोधितोऽस्मि। प्रिये! प्रविश त्वमभ्यन्तरम्। वयमपि[8] —

अखिलभुवनयोनेरभ्युदीर्णत्रिवेदीं[9]
तनुमपतमयन्तीमम्बुजन्मासनस्य।

---

(क) महाराज! अल शङ्कया। एतस्या एवैष कर्णपूरस्तत् पदयुगलं च।

(ख) एवं भवतु। भो अकामुकानामस्माकमनतिक्रमणीयः सन्ध्योपासनसमयः।

---

अकोपान्तरायः प्रियापरिष्वङ्गः अन्यस्य कोपेनान्तरायः प्रियापरिष्वङ्गस्य। अन्यस्य कोपेनान्तरायो भवेत्, अस्य तथा न भवति। परिष्वङ्गकार्यं भवतीत्यारोपः॥

त्वम् अभ्यन्तरं प्रविश। वयमपि सायं ते सहजाम् आराधयामः। ते सहजां सावित्रीमाराधयामः वाङ्मनःकर्मभिरर्चयामः। ते सहजामिति देवताराधनेऽपि विधिवशात् त्वत्सम्बन्धेन हृद्यतमत्वमस्माकं जातमिति व्यज्यते। अखिलभुवनयोनेरम्बुजन्मासनस्य तनुम् अपतमयन्तीं तमोपनयनेन प्रकाशमयीं कुर्वाणाम्। अभ्युदीर्णत्रिवेदीम् अभ्युदीर्णा अभिव्यक्ता त्रयी यस्याः तादृशीम्। अखिलप्रपञ्चनिर्मातुर्निखिलवेदनिधानभूतामपि तनुं प्रकाशमयीं कुर्वाणामित्यपिशब्दोऽ-

---

१. 'जा – दि' इति क. पाठः. २. 'तो कर्णपूरः। रि' इति ख. पाठः. ३. 'कः (गृ' इति क-ख. पाठः. ४. 'दिशा वि' इति ख. पाठः. ५. 'यन्) भो वअस्स अ' इति क. पाठः. ६. 'णणिअमो।' इति ख. पाठः. ७. 'जा – सखे' इति क-ख. पाठः. ८. 'मप्यनुपदमागता एव। अ' इति क. पाठः. ९. 'त्रिलोकीं त' इति क. पाठः.

अहरुपगमरात्रिप्रक्रमावर्तनीयां
वरतनु ! सहजां ते सायमाराधयामः ॥ १२ ॥

(इति निष्क्रान्ताः सर्वे)

इति चतुर्थोऽङ्कः ।

---

र्थात् सिध्यति । ब्रह्मणोऽप्येतत्सेवनेनैव प्रकाशमयत्व, किं पुनरन्येषामिति भाव । अहरुपगमे रात्रिप्रक्रमे च सन्ध्ययोर्द्वयोरित्यर्थ । आवर्तनीयाम् आवर्तनयोग्यमन्त्राम् । देवतामन्त्रयोरभेदोपचार । अथवा आवृत्त्या प्रतिदिन सेवनीयाम् । अस्य तात्पर्यं वेदविदामेव ज्ञातु शक्यम् ॥ १२ ॥

इति चतुर्थाऽङ्कः ।

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति वद्धकर्णपूरदण्डहस्तस्त्रस्तरूपो विदूषकः )

विदूषकः[1] — ( दीर्घं निःश्वस्य ) (क) मुसिदो हि भो मुसिदो हि । इह तवणवणे अदिइरं काळं विहरिअ चिट्ठन्तो वअस्सो देवी परिजणो अ सिविणळद्धो विअ णिही अज्ज पच्चूस एव्व पवुद्धेण मए ण दिट्ठा । अण्णेसिअं च सव्वं तवणवणं । अण्णं च मिअसउन्तवज्जं सव्वं अवहरिअ गच्छन्तीए अदीदाए रत्तीए अहं तवणवणं च अवसेसिअं त्ति अच्छेरं[2] । (सवितर्कम्) जदि[3] तत्तहोदीए[4] सह तवणळोअं गदो भवे, तदो मं अणवबोहिअ अवस्सं[5] वअस्सो ण गच्छइ । अहवा माआदक्खेहि रक्खसीजणेहि काहिं पि वञ्चिअ

(क) मुषितोऽस्मि भोः मुषितोऽस्मि । इह तपनवने अतिचिर काल विहृत्य तिष्ठन् वयस्यो देवी परिजनश्च स्वप्नलब्ध इव निधिरद्य प्रत्यूष एव प्रबुद्धेन मया न दृष्टाः । अन्विष्ट च सर्वं तपनवनम् । अन्यच्च मृगशकुन्तवर्जं सर्वमपहृत्य गच्छन्त्या अतीतया रात्र्याह तपनवनं चावशेषितम् इत्याश्चर्यम् । यदि तत्रभवत्या सह तपनलोक गतो भवेत्, ततो मामनवबोध्यावश्य वयस्यो

अथ नायकस्य वियोगविप्रलम्भोपक्रम । राज्ञा वियुक्तो नर्मसचिवः प्रलपति — मुषितोऽस्मि भो. मुषितोऽस्मि । इह तपनवनेऽतिचिरं कालं विहृत्य तिष्ठन् वयस्यो देवी परिजनश्च स्वप्नदृष्ट इव निधिरद्य प्रत्यूष एव प्रबुद्धेन मया न दृष्टाः । अन्विष्टं च सर्वं तपनवनम् । अन्यच्च मृगशकुन्तवर्जं सर्वमपहृत्य गच्छन्त्यातीतया रात्र्याहं तपनवनं चावशेषितम् इत्याश्चर्यम् । यदि तत्रभवत्या सह तपनलोक गतो भवेत्, ततो मामनवबोध्यावश्यं वयस्यो न गच्छति ।

१. 'क -मु' इति क. पाठः २. 'च्छरिअ' इति क-ख-घ. पाठः ३. 'जिण्णु हु त' इति क-ग-घ. पाठः. ४. 'धि' इति क-ख ग. पाठः. ५. 'पिअवअस्सं' इति घ. पाठः.

णीदो भवे । एदं पि णत्थि । भिउणो कम्मप्पहावेण एत्थं पदेसे माआओ ण प्पभवन्ति । जई पच्चक्खं एव्व परक्कमन्ति, तदो वअस्सस्स प्पहावो एव्व पडिबन्धेदि । ता अळं दुव्विकप्पेहिं । तवणवणादो णिक्कमिअ विउणिस्सं । (परिक्रम्य परितो विलोकयन्) अहो एदस्स वणगहणुद्देसस्स पडिभअदा । एसा केसरिणहकुलिसणिब्भिण्णकुम्भस्स सहअरस्स रसिआणुसारप्पहाविआ सवरपरिकप्पिअगत्तपडिआ करिणी करुणं विक्कोसइ । (अन्यतो विलोक्य) एदं पुण अच्छभळ्ळोवहुत्तपिट्ठभाआए कुरङ्ग-

न गच्छति । अथवा मायादक्षै राक्षसीजनैः कथमपि वञ्चयित्वा नीतो भवेत् । एतदपि नास्ति । भृगोः कर्मप्रभावेणात्र प्रदेशे माया न प्रभवन्ति । यदि प्रत्यक्षमेव पराक्रमन्ते, ततो वयस्यस्य प्रभाव एव प्रतिबध्नाति । तदलं दुर्विकल्पैः । तपनवनान्निष्क्रम्य विचेष्यामि । अहो एतस्य वनगहनोद्देशस्य प्रतिभयता । एषा केसरिनखकुलिशनिर्भिण्णकुम्भस्य सहचरस्य रसितानुसारप्रधाविता शबरपरिकल्पितगर्त्तपातिता करिणी करुण विक्रोशति । एतत् पुनरच्छभल्लोपभुक्तपृष्ठभागायाः कुरङ्गवध्वा उद्गीर्णजिह्व मुख निश्च-

अथवा मायादक्षै राक्षसीजनैः कथमपि वञ्चयित्वा नीतो भवेत् । एतदपि नास्ति । भृगोः कर्मप्रभावेणात्र प्रदेशे माया न प्रभवन्ति । यदि प्रत्यक्षमेव पराक्रमन्ते, ततो वयस्यस्य प्रभाव एव प्रतिबध्नाति । तदलं दुर्विकल्पैः । तपनवनान्निर्गत्य विचेष्यामि । अहो एतस्य वनगहनोद्देशस्य प्रतिभयता । एषा केसरिनखकुलिशनिर्भिण्णकुम्भस्य सहचरस्य रसितानुसारप्रधाविता शबरपरिकल्पितगर्त्तपतिता करिणी करुणं विक्रोशति । एतत् पुनरच्छभल्लोपभुक्तपृष्ठभागायाः कुरङ्गवध्वाः उद्गीर्णजिह्वं मुखं निश्चलोत्फुल्लया दृष्ट्याद्यापि भय सूचयति । क्रूरस-

१. 'दु उण प' इति ग पाठ. २. 'व्व गदुअ प' इति ख-ग पाठ. ३. 'म्य वि' इति घ. पाठः, 'म्यावलोक्य) अ' इति क. पाठ.. ४. 'सा खु के' इति ख. पाठः. ५. 'इ । ए' इति क-ख-घ. पाठ. ६. 'पि अ' इति क घ, पाठः ७ 'जु' इति ख. पाठः.

वहूए उग्गिण्णजीहं मुहं णिच्चलुप्फुल्लाए दिट्ठीए अज्ज वि भअं सूएदि। क्रूरसत्तवावादिअदुब्बलमिअकलेबरदुस्सञ्चरो दुस्समपीडिअस्स जणपदस्स दसं अणुसरेदि एसो पदेसो। किं बहुणा, मम दिट्ठी वि भअविहुरा एत्थ परिब्भमिदुं ण पारेदि, किं पुण चलणा। पागेव्व णअररच्छीअं पि असहाओ गन्तुं भाआमि, किं पुण एत्थ महाडवीअं। ण उण सहाआणं सम्भवो। ता किं मे सरणं। का मे गई। (भयकम्पितो दण्डकाष्ठमवलम्ब्य स्थितः)

(ततः प्रविशत्यमात्यः)

अमात्यः—(सवितर्कम्) अहो* जघन्य एवायं जघन्यो वर्गः, येन

---

लोत्फुल्लया दृष्ट्याद्यापि भयं सूचयति। क्रूरसत्त्वव्यापादितदुर्बलमृगकलेबरदुस्सञ्चरो दुःषमपीडितस्य जनपदस्य दशामनुसरत्येष प्रदेशः। किं बहुना, मम दृष्टिरपि भयविधुरात्र परिभ्रमितुं न पारयति, किं पुनश्चरणौ। प्रागेव नगररथ्यायामप्यसहायो गन्तुं बिभेमि, किं पुनरत्र महाटव्याम्। न पुनः सहायानां सम्भवः। तत् किं मे शरणम्। का मे गतिः।

---

त्त्वव्यापादितदुर्बलमृगकलेबरदुस्सञ्चरो दुःषमपीटितस्य दुर्भिक्षपीडितस्य जनपदस्य दशामनुसरत्येष प्रदेशः। क्रूरेत्याद्युभयत्र साधारणम्। इदं भविष्यदर्थसूचकम्। किं बहुना, मम दृष्टिः भयविधुरा अत्र परिभ्रमितुं न पारयति, किं पुनश्चरणौ। नगररथ्यायामप्यसहायो गन्तुं बिभेमि प्रागेव। महाटव्यां न पुनरत्र सहायानां सम्भवः। का मे गतिः। किं मे शरणम्। गम्यत इति गतिः प्राप्यभूमिः कुत्र गच्छामीत्यर्थः॥

अथ राजानं नेतुममात्यस्य प्रवेशः। प्रविष्टः सः राज्ञः कामैकपरत्वेन वैवश्यं निरूप्य सामान्येन तृतीयपुरुषार्थस्य कुत्सितत्वं साधयति—अहोतुखल्वि-

---

१ 'क' इति ग घ पाठः. २ 'त्थ महाडवीअं प' इति क पाठः. ३. 'णा। ण' इति ख घ. पाठः. ४ 'त्था' इति घ पाठः. ५ 'मि पागेव्व। म' इति ख घ. पाठः. ६. 'ण एत्थ स' इति ख पाठः 'ण अत्थि म' इति घ पाठः. ७. 'ई। (द' इति ख. पाठः. ८. 'स अ' इति घ पाठः. ९ 'विमर्शम्' इति ख पाठः.

* 'होतुखलु' इति तु व्याख्यासम्मतः पाठः

समाकृष्टः प्रकृष्टमहिमा सोऽयमपि देवो निसर्गविनयसमुद्भवशेमुषीप्रशमितप्रजोपद्रवः परित्यज्य स्वराज्यमियन्तं कालमिमां महाटवीमधिवसति। तदपि पुनश्चिरतरपरिवर्जितपर्जन्यम्। तथा हि---

आन्त्रव्रातविभीषणं त्वधिरितं घोरैः शिवाव्राशितै-
र्दूरीभूतपृथग्जनं नरशिरःश्रेणीभिरध्यासितम्।
राज्ञः संवरणस्य राज्यमधुना वेतालपालीवृतं
कालीकायभयङ्करं समभवत् कङ्कालमाला*कुलम्॥ १॥

---

त्यादि। इदानीमस्मदवस्थान्तरे निरूप्यमाणे नीचस्यापि वस्तुनस्तत्प्रकर्षेण कौतुकावहत्वम्। तदेव प्रतिपादयति—जघन्य एवायमिति। जघन्यो वर्गः अन्त्यो वर्गः। सर्वत्र त्रिवर्गपरिगणनेऽन्त्यत्वेन प्रसिद्धः कामवर्ग इत्यर्थः। स जघन्य एव अतिनीच एव। अस्य जघन्यत्वं युक्तमेव। नीचत्वं प्रतिपादयति कार्यद्वारा—येन समाकृष्टः परवशीकृतः। प्रकृष्टमहिमा जितेन्द्रियत्वादिनयशास्त्रोदितगुणसम्पदातिशयितात्मगौरवः। सोऽयं परोक्षदशायामिदानीमप्येकरूपप्रभावः। स्वराज्यं परित्यज्येत्यनौचित्यातिशयः प्रकाशितः। परिपालनापाटवेनेति चेत्, तन्न। निसर्गविनयसमुद्भवशेमुषीप्रशमितप्रजोपद्रवः स्वाभाविकविनयोदयया शेमुष्या स्वबुद्ध्यैव अन्यप्रेरणं विना प्रशमितसर्वजनपीडः। तद्धि राजत्वफलम्। तत्रापि गुणोत्तरप्रदेशवासापेक्षया चेन्न दोषः। तन्न। इमां महाटवीम् अतिगहनं कान्तारम् अधिवसति। तत्राप्यल्पकालं न, इयन्तं कालमित्यनेन कालस्य दैर्घ्यं प्रकाश्यते। अस्य सर्वस्य निमित्तं कामपारवश्यमेवेति जघन्य इत्युक्तम्। राज्यपीडा न चेद् दूरावासे को दोष इति चेद् तत्राह—तदपि पुनः राज्यमपि न सुस्थं, यतः चिरतरपरिवर्जितपर्जन्यम् अतिचिरं कालं परिवर्जितः पर्जन्यो वर्षदेवो येन। अनावृष्टिपीडितमित्यर्थः। तथाहीति तत्कार्यप्रतिपादनोपक्रमः। अधुना राज्ञः संवरणस्य राज्यं कालीकायभयङ्करं समभवत्। अधुनेति पूर्वं नैवं, चिरकालमनावृष्ट्या दुर्भिक्षोदयो नेत्यर्थः। राज्ञः संवरणस्येत्यनौचित्येन खेदो व्यज्यते। कालीकायवद् भयङ्करं जातम्। आन्त्रव्रातविभीषणमित्यादि समानधर्मः। प्राणवृत्त्यभावेन मृतानां

* 'वृतम्' इति तु व्याख्यानुसारी पाठः.

श्रुतं च मया तपनवनाभिधानं देवारण्यमभिमतदेवीसमेतस्य देवस्य विहारभूमिरिति । तदन्वि(ण्ये ?ष्यामि) तपनवनम् (परिक्रामन् पुरतो विलोक्य) अये असौ वयस्यः पाराशर्यो देवस्य बहिश्चराः प्राणाः केनाप्याविष्ट इव तिष्ठति । तदमुष्मादुपलभे स्वामिवृत्तान्तम् (उपसृत्य) सखे ! पाराशर्य ! अपि कुशलं तत्र ।

विदूषकः.—(ससम्भ्रमंमवलोक्य) (क) अये[4] अमच्चो अय्यवसुमित्तो का-

---

(क) अये ! कथममात्य आर्यवसुमित्रः । कैपादद्दष्टपयोधरा वृष्टिः । कथमसन्नि-

---

प्रजानां श्वसृगालाद्याकृष्टैस्तत्र तत्र व्यातैरान्त्रप्रातैः भीषणम्, अन्यत्र अङ्गेषु धृतैः । तथा घोरैः शिवाशिवैः तत्र तत्र शवाकर्षणाय प्रवृत्तानां शिवानां परुषैः शब्दैः उपहतकर्णरन्ध्रनिखिलजनम्, अन्यत्र परिवारत्वेन शिवानां स्थितिः । तथा दूरीभूतः वृत्त्यभावेन जनपदान्तरमाश्रितः पृथग्जनो यत्र, अन्यत्र भयेन पृथग्जनानां दूरीभावः । नराणां शिरःश्रेणीभिः तत्र तत्र मृगादिभिराकृष्टाभिर्व्याप्तम्, अन्यत्र मालारूपेण कण्ठादिषु धृताभिः । तथा वेतालपालीवृतं तत्र तत्र शवबाहुल्येन निश्शङ्कमागताभिः पिशाचपङ्क्तिभिः वृतम्, अन्यत्र परिजनत्वेन । कङ्कालमालावृतं भक्षितमांसैः परिशुष्कैः कायास्थिभिर्वृतम्, अन्यत्र मालारूपेणाङ्गेषु परिगृहीतैः । सर्वप्रकारेण भैरवीविग्रहवद् भयङ्करम् । पूर्वमतिसेव्यमिदानीमेवं जातम् ॥ १ ॥ एवं निरूप्य राजान्वेषणाय निवासस्थानं विमृशति—श्रुतं च मयेत्यादि । तपनवनाभिधान देवारण्यमभिमतदेवीसहायस्य देवस्य विहारभूमिरिति । एवमुक्त्वा तदन्वेषणे प्रवृत्तः पाराशर्यं दृष्ट्वाह—देवस्य बहिश्चराः प्राणा इति । अतिस्नेहपात्रमित्यर्थः । अनेन स्वामिवृत्तान्तोपलब्धौ सौकर्यं सूचितम् । अत एवाह—अमुष्मादुपलभ इति । केनाप्याविष्ट इति वेपथुपरिभ्रमादिना भूताविष्टतया शङ्कनीयः ॥

तं विलोक्य विदूषक आह—अये अमात्य आर्यवसुमित्रः । आगत इति शेषः । कंपादद्दष्टपयोधरा वृष्टिः । कथमसन्निहितराजं राज्यं परित्यज्य त्वम-

---

१. 'क्रम्य पु' इति क-घ. पाठ. २ 'णा. । त' इति घ. पाठः ३. 'म विलो' इति क-ग-घ. पाठ ४. 'ये वह अ' इति ग. पाठः.

एसा अदिट्ठपओहरा विट्ठी (सहर्षं परिष्वज्य) कहं असण्णिहिदराअं रज्जं परित्तजिअ तुवं पि आअदो। णं पुव्ववेरिणो वळावलित्ता दासीए वुत्ता अणुपेक्खिदव्वा पञ्चाळा।

अमात्यः — आसतामतिक्षुद्रपराक्रमाः केवलं पाञ्चालाः। अधुना पुनरतिभयङ्करो दुर्भिक्षोपद्रवः पीडयति तं जनपदम्। तथा हि —

उद्युक्ता वागुराद्यैरहरहरुचितैर्मत्स्यबन्धप्रकारै-
र्मर्त्या निर्मत्स्यगङ्गाह्रदगतशफरीशेषमग्नावशिष्टाः।

---

हितराजं राज्यं परित्यज्य त्वमप्यागतः। ननु पूर्ववैरिणो वलावलिप्ता दास्याः पुत्रा अनुपेक्षितव्याः पाञ्चालाः।

---

प्यागतः। त्वमपीति राज्ञो दूरीभावे त्वमवलम्बनं राज्यस्य, त्वयापि परित्यक्तेऽतीव दोष इति। तदेव स्फुटयति — ननु पूर्ववैरिणो वलावलिप्ता दास्याःपुत्रा अनुपेक्षितव्याः न खल्वनास्थाविषयाः। नन्विति तथापि सिद्धमेतत्। पूर्ववैरित्व वलावलिप्तत्व दौष्ट्यश्चानुपेक्षणीयताहेतुः॥

तस्योत्तरमाह — आसतामित्यादि। तेषामनास्थाविषयत्वेन न दोषः। अतिक्षुद्रपराक्रमाः न्यूनविक्रमाः। तैर्न पीडा शङ्कनीया। अधुना पुनर्वैरिभ्योऽप्यतिभयंकरो दुर्भिक्षोपद्रवस्तं जनपदं पीडयति। तथाहीति पीडाविवरणोपक्रमः। उद्युक्ता इत्यादि। मर्त्याः व्रीहियवादीनामभावेन केवलं मत्स्यग्रहणपरा अहरहः दिने दिने। उचितैः जलवृद्धिक्षयसदृशैः। वागुराद्यैः आदिशब्देन जालवडिशादयो गृह्यन्ते, तैरुद्युक्ता गङ्गां प्रविश्य प्रतिदिनं ग्रहणेनोपयुक्ततया निर्मत्स्यायाः गङ्गायाः ह्रदगतेषु जलवहुलप्रदेशगतेषु शफरीशेषेषु, शफरीणामत्युपयुक्तप्रायत्वेन शेषग्रहणं, तेषु मग्नाः तद्ग्रहणायाकण्ठं जलमवगाह्य तदेकपराः, अवशिष्टाः मृतशेषाः। अपचिततनवः अस्थिमात्रशरीराः। प्रायशः आरूढकण्ठैः प्राणशेषैरुपलक्षिताः। प्राणशेषैरिति असृङ्मांसादिरिक्ततया प्राणानामेव शेषत्वं, तैरपि आरूढ-

---

१ 'चुव्य तुम आ' इति ख. ग. पाठः. २ 'त्ता अ' इति ख. पाठ. ३. 'प' इति क. पाठः.

आसन्नारूढकण्ठैरपचिततनवः प्रायशः प्राणशेषैः
सङ्गृध्यद्गृध्रचञ्चुव्रजकुटिलशिरःकर्मकर्मान्तभूमिः ॥ २ ॥
तदेतदतिदारुणं व्यसनमापतितमसन्निधानादस्मत्स्वामिन इति । तत् केनचिदुपायेन तं नागाह्वयं पुरं प्रापयितुं प्राप्तोऽस्मि । तदधुना क्व भवितव्यं देवेन ।

**विदूषकः**— (सनिःश्वासम्) (क) कहेमि मन्दभाओ । एत्तिअं कालं तत्तहोदीए तवणतणूजाए सह विहरिअ गदाअं खणदाअं पसुत्तं मं उज्झिअ वअस्सो सो दिव्वजणसत्थो अ गन्धव्वणअरं विअ अदंसणं गओ। तदो अहं अण्णे-

(क) कथयामि मन्दभाग्यः । इयन्त कालं तत्रभवत्या तपनतनूजया सह विहृत्य गताया क्षणदाया प्रसुप्त मामुज्झित्वा वयस्यः स दिव्यजनसार्थश्च गन्धर्व-

कण्ठैरुपलक्षिता. । सङ्गृध्यद्गृध्रचञ्चुव्रजकुटिलशिर कर्मकर्मान्तभूमिः आसन् सङ्गृध्यतां मत्स्यग्रहणेच्छावता गृध्राणाम् उपरि सञ्चरता चञ्चुव्रजस्य त्रोटिसमूहस्य कुटिल वक्र यत् शिर अग्रभाग. तस्य कर्मण आहननस्य, कर्मान्तस्य लोहकारादे भूमि आहननशिलास्थानमासन् । यथा कर्मान्तभूमौ सन्दशादीनामुत्तेजनायाहनन, तथा आकण्ठमम्बुनिर्मग्नानां कण्ठगतप्राणानां मृतशेषाणां शीर्णप्रायरोमसु शिरस्सु गृध्राः कुटिलेन चञ्च्वग्रेण घोरशब्दं ताडयन्ति, तत्रापि प्रतिपेद्धुं न शक्ति , तत् सह्यत एवेति कर्मान्तभूमित्वारोपेण प्रकाश्यते ॥ २ ॥ एव दुर्भिक्षपीडा प्रतिपाद्य तच्छमनोपाय प्रतिपादयति — तदेतदित्यादिना । स्वामिसन्निधानाभावेन व्यसनमिति तं नेतुमागतः । तत् कुत्र वर्तते स्वामीति ॥

अस्योत्तरमाह —कथयामि मन्दभाग्यः । इयन्त कालं तत्रभवत्या तपनतनूजया सह विहृत्य गताया क्षणदायां सुप्तं मामुज्झित्वा वयस्यः स दिव्यजनसार्थश्च गन्धर्वनगरमिवादर्शनं गतः । ततोऽहमन्विष्यन् सकल कान्तार-

१ ‘र’ इति क पाठ. २ ‘ति । के’ इति ख पाठ. ३ ‘म्) क क’ इति ख ग. पाठः. ४ ‘तणआए’ इति ख पाठ, ‘तणूआए’ इति ग पाठ, ‘कण्णआए’ इति घ पाठः. ५ ‘त्थो ग’ इति क ख पाठ ६ ‘दो अण्णे’ इति क घ पाठ,

सन्तो सअलं कन्दारं वालमिअभीदिएँ इह ट्ठिदो[२] तुए दिट्ठो । एदं सव्वं मम अधण्णदाए परिणामो ।

अमात्यः—मा मैवम् । मयि परिवादानारोपयितुकामस्य देवस्यायं मात्सर्योपक्रमः । कुतः—

यं प्रायेण प्रथयितुमलं शाठ्यमन्तःपुराणां
यं कुर्वन्ति व्यसनसुहृदो राजपुत्रापराधाः[३] ।
राज्ञो यश्च स्वयमपनयात् सम्प्रवृत्तः किलाय
सर्वो दोषः सचिवमनसां धूसरिम्णो विपाकः ॥ ३ ॥

---

नगरमिवादर्शन गत । ततोऽहमन्विष्यन् सकल कान्तार व्यालमृगभीत्येह स्थितस्त्वया दृष्ट । एतत्सर्वं ममाधन्यताया परिणाम ।

---

मन्विष्य गच्छन् व्यालमृगभीत्येह स्थितस्त्वया दृष्ट । एतत् सर्वं ममाधन्यताया परिणाम ॥

तच्छ्रुत्वाह—मा मेवमिति । तवाधन्यतेति मा वादी । मयि परिवादानारोपयितुकामस्य निरपवादे मयि दोषानारोपयितुमिच्छोर्देवस्याय मात्सर्योपक्रम मात्सर्येणोपक्रम । तदर्थ दूरगमनादि । निरपराधे कथ दोष आरोप्यते इत्येतत् सामान्येन प्रतिपादयति—यमित्यादि । अन्त पुराणा शाठ्यम् अन्त पुरस्त्रीणा स्वकार्यपरत्वं बाहुल्येन य दोष प्रथयितुमल समर्थम् । पुन राजपुत्राणाम् अपराधा विशृङ्खलव्यापारा य कुर्वन्ति व्यसनसुहृद व्यसनस्य पोषका, राज्ञ इति । तिष्ठन्त्वन्त पुरादय । परिपालकस्य राज्ञ स्वस्यैवापनयाद् य सम्प्रवृत्त, अय सर्वो दोष सचिवमनसा धूसरिम्णो मालिन्यस्य अबोधस्य परिपाक । अन्त पुरादिदोषेऽपि सचिवदोष आरोप्यते । किलेति । इद वस्तुतोऽपरमार्थं, तथापि सर्वे दोषा सचिवेषु पर्यवस्यन्तीति मयोक्तम् आरोपयितुकामस्येति ॥ ३ ॥

एवमुक्त्वा नायकमन्विच्छन् चक्रवर्तिलक्षणोपेता पदपङ्क्तिं दृष्ट्वाह—

---

१ 'एअद द' इति घ पाठ २ दो । एद इति घ पाठ ३ चारा' इति क ख ग. पाठ

(विचिन्त्य)[1] स्वामी नियतमपहाय भवन्तं तत्रभवत्या सार्द्धं नापयाति । शङ्के कुतश्चित् कारणादन्तर्हितां देवीमन्वेष्टुम् अटवीमटता देवेन भवितव्यम् । तद् यावदावां देवमन्वेषावहे ।

**विदूषकः** --- (स्वगतम्) (क) अहो णिक्करुणा तत्तहोदी, जं तणअणामहेअस्स फळस्स पुप्फं विअ दंसिअ गआ । (प्रकाशम्) एव्वं होदु ।

(उभौ परिक्रामतः)

**विदूषकः** --- (अग्रतो विलोक्य) (ख) एत्थ सिअदिळे पदेसे केण वि वणअरेण गएण होदव्वं । एसा हि पदपन्ती दीसइ ।

**अमात्यः**[2]-- (सावधानं निरूप्य[3] सहर्षम्[4]) अहो चिरादवासजन्मफले मम चक्षुषी । देवस्य पदसरोरुहयोरेवेदं प्रतिबिम्बम् । पश्य --

एषा सा कलशी सरोरुहमिदं केतुः स एवाङ्कुशः
सोऽयं छत्रमिदं तुरङ्गमकरौ तौ शङ्खचक्राविमौ ।

(क) अहो निष्करुणा तत्रभवती, यत् तनयनामधेयस्य फलस्य पुष्पमिव दर्शयित्वा गता । एवं भवतु ।

(ख) अत्र सिकतिले प्रदेशे केनापि वनचरेण गतेन भवितव्यम् । एषा हि पदपङ्क्तिर्दृश्यते ।

चिरादवासजन्मफले मम चक्षुषी । एषा सेत्यादि । पदप्रतिबिम्बगतानि महापुरुषलक्षणानि पूर्वानुभूतानि प्रत्येकं निर्दिशति -- एषा सा कलशी । सा अनेकवारं नयनोत्सवीकृता । इदं सरोरुहं दृश्यत इति शेषः । केतुः स एव पूर्वानुभूतः । अङ्कुशः सोऽयम् । छत्रमिदम् । तुरङ्गमकरौ तौ । शङ्खचक्राविमौ । एते दृश्यन्त इति शेषः । ससार्णवां मेदिनीं समवतः ससार्णवान्तर्भूतां मेदिनीं सम्यग् रक्षतः ।

१ 'सखे! स्वा' इति ख-घ. पाठ.- २- 'ल. (स' [illegible] इति क. पाठ. ४ 'र्पम्) चि' इति ख. पाठ.

कस्यान्यस्य भवेयुरङ्घ्रियुगले राजन्यचूडामणे-
र्दैवात् संवरणादृते समवतः सप्तार्णवां मेदिनीम् ॥ ४॥

(नेपथ्ये)

आः दुरात्मन्नचलाधम! अतिचिरान्विष्टोऽपि[1] न मे प्राणेश्वरीं प्रकाशयसि । त्रिश्वविजयसमनन्तरविरमदैक्ष्वाकक्षोणीधरकार्मुकोद्वहनकर्मकर! कच्चिदनभिज्ञो भवान् अद्यापि जनितबहुजन्यपौरवराजन्यचापचक्रपराक्रमाणाम्। भवतु तावदधुनैव बोधयिष्यति संवरणः।

---

राजन्यचूडामणेः सम्राजः दैवाद् ऋते अन्यस्य कस्याङ्घ्रियुगले एतानि भवेयुः। एवंलक्षणयुक्तस्य तादृशरक्षाधिकारादन्यस्य न घटन्त इत्यर्थः ॥ ४॥

अथ चूलिकया राज्ञः सन्निधिं तयोः प्रकाशयति — आः दुरात्मन्नित्यादि। प्रियतमावियोगेनोन्मादभ्रान्तस्य राज्ञो हिमवदपहृता देवीं मन्यमानस्य तं प्रति संरम्भवचनमिदम्। दुरात्मन्! भवद्दौरात्म्यमेवास्मदनिष्टकरणे निमित्तम्। अत एव त्वम् अचलाधमः। अतिचिरान्विष्टोऽपि अन्वेषणद्वारा प्रतिगतोऽपि। अन्विष्टामिति वा पाठः। प्राणेश्वरीं तव गृहनायोग्याम्। न प्रकाशयसि कुत्राप्यावृत्य मम न प्रकाशयसि। तवान्यपक्षपातमहं जानामि। विश्वविजये दिग्विजये विरमतां प्राच्युपक्रमः उदीच्युपसंहार इति क्रमेण तत्र विरमताम् ऐक्ष्वाकक्षोणीधराणां निर्व्यापारस्य कार्मुकस्योद्वहने कर्मकर! किङ्कर!। दिग्विजयानन्तरं जयसाधनं धनुः भवति न्यस्यैक्ष्वाकुक्षत्रियाणां गमनम्। त्वं तस्य धारक इति मया ज्ञायते। अद्यापि बहुतमे कालेऽतीतेऽपि। पौरवराजन्यानां नहुषययातिप्रभृतीनां जनितबहुजन्यानां चापचक्रपराक्रमाणामनभिज्ञः कच्चित्। सोमवंश्यानां प्रभावं त्वं न जानासि। अत एवमाचरितम्। भवतु। अधुनैव संवरणो बोधयिष्यति। भुवि प्रसिद्धस्तेषां पराक्रमो भवता ज्ञातो न भवतु। संवरण इति कोपौद्धत्येन परिकृत्य कथनम्। एतच्छ्रुत्वा कोपविवशस्य सन्निधौ न गन्तव्यमिति तयोस्तिरोधानम् ॥

---

1. 'ऽपि' इति क्व पाठः।

**विदूषकः**--- (कर्णं दत्वा) (क) दिट्ठिआ वअस्सस्स एव्व जळहर-गम्भीरो सरो सुणीअदि ।

**अमात्यः**--- (विलोक्य) अये अयं स्वामी सोन्माद इव हिमाचलापहृतां देवीं मन्यमानस्तमभि क्रुध्यन्निव एवाभिवर्तते । तन्नायमवसरः प्रकाशयितुमात्मानम् । तदवसरे समुपसर्पावः ।

**विदूषकः**--- (ख) एव्वं होदु ।

(गुल्मान्तरितौ स्थितौ)

(ततः प्रविशति सोन्मादो राजा)

**राजा**--- (सोद्वेगम् आः दुरात्मन्नचलाधमेति पूर्वोक्तमेव पठित्वा)

प्रयाहि दुहितुः सुतं शरणमद्य शर्वात्मजं
पुरत्रयहरं हरं स्वयमुपेहि जामातरम् ।
तथाप्यसुरवाहिनीरुधिरपूरगण्डूषण-
प्रमोदभरदुर्मदैर्मम शरैर्न मोमुच्यसे ॥ ५ ॥

(क) दिष्ट्या वयस्यस्यैव जलधरगम्भीरः स्वरः श्रूयते ।
(ख) एवं भवतु ।

तमभि क्रुध्यन् । तं प्रति क्रुध्यन् ॥

प्रयाहीत्यादि । दुहितुः सुत शर्वात्मजं शरण प्रयाहीति सम्बन्धेन गौरवेण च शरण्यत्वं प्रकाशयितुं द्वयोरुपादानम् । अथवा सुतस्तिष्ठतु, जामातरं मुख्यसम्बन्धिनं पुरत्रयहर दुर्जयरिपुसंहारदक्षं हरं शरणमुपेहि । तथापीति प्रबलशरणपरिग्रहेणापि मच्छराविषयत्वं न घटते । मम शरैस्त्वं न मोमुच्यसे भृशं न परित्यज्यसे,यतः असुरवाहिन्याः रुधिरपूरस्य गण्डूषणेन यः प्रमोदभरः तेन दुर्मदः इतिकर्त्तव्यतानपेक्षिमदः येषां तैः । अयममोचने हेतुः ॥ ५ ॥ धनुर्धनुरिति

१. '(सदर्पम्)' इति क. पाठः, '(आकर्ण्य सदर्पम्)' इति घ. पाठः. २. 'स्स ज' इति ख घ. पाठः ३. 'ल्वः अ' इति क ख-घ. पाठः. ४. 'ति' इति क-ग. पाठः, ५. 'वः । (गुल्मान्तरितौ)' इति क. पाठः. ६. 'मिति' इति क-ख. पाठः, 'मित्यादि पू' इति घ. पाठः.

धनुर्धनुः ।

**विदूषकः**—(पतित्वा सभयम्) (क) अविह केणै वि पक्खित्तो ह्मि ।

**अमात्यः**—(सविस्मयम्) अहोतुखल्वातिशयितशक्रप्रभावेयं देवस्य प्रभुशक्तिः यदयमपि नाम वर्षाचलो गौरीगुरुरस्योन्मादकोपकलुषीकृतः कम्पते । (विदूषकमुत्थापयति)

**राजा**—(विचिन्त्य) हन्त धिङ् मामकृतवेदिनामग्रेसरम् । येन तदा तया मां सङ्गमयता गतकल्पा अपि प्रत्यानीताः प्राणाः, स किल मम बाणानां लक्ष्यभूमिः । तदन्यतो विचिनोमि । (अन्यतो विलोक्य) भगवन्! सङ्कल्पयोने!

अंसस्थेन भ्रमसि हिमवत्कानने कामिनीनां
चिल्लीवल्लीचलनतुलनश्लाघिना कार्मुकेण ।

(क) अविध! केनापि प्रक्षिप्तोऽस्मि ।

उक्तानुष्ठानाय धनुर्ग्रहणोद्यमः प्रकाशितः ॥

ततः भूकम्पेन विस्मितोऽमात्य आह—अहोतुखल्वतिशयितशक्रप्रभावेयं देवस्य प्रभुशक्तिः प्रभुत्वोचिता शक्तिः प्रभाव इत्यर्थः । वर्षाचलः भारतवर्षसीमापर्वतः ॥

विचिन्त्येति । उन्मत्तप्रलापस्य यदृच्छोदितत्वात् तदेवान्यथा निरूपणम् । हन्तेति खेदे । अकृतवेदिनामग्रेसरं मां धिग् अकृतज्ञतया अहमेव कुत्सनीयः । तेन कृतं प्रकाशयति—येनेत्यादि । तदा तया मां सङ्गमयता मयि स्फटिकमण्डपे शयाने प्रियतमया घटयता गतकल्पा अपि गतप्राया अपि मम प्राणाः प्रत्यानीताः, स किल मम बाणानां लक्ष्यभूमिः । किलेत्यनौचित्यद्योतकम् । तदन्यतो विचिनोमीति भ्रमस्य व्याप्तिः प्रकाश्यते । भगवन्! सङ्कल्पयोने! इति मदनं पुरो भावयित्वोक्तिः । सङ्कल्पयोने! भवतः सङ्कल्पोद्भवत्वात् सर्वेषामिष्टानिष्टसङ्कल्पे वैषम्यज्ञानं घटते । अतः पृच्छामि तत्—हिमवत्कानने भ्रमसि स्वैरसञ्चारं

१. 'सभय पतित्वा (के' इति ख. पाठः. २. 'म) के' इति क-घ.पाठ ३ 'ण तु प' इति क-घ पाठः. ४. 'त्वः-अ' इति क. पाठः. ५. 'मधुना व' इति घ. पाठः. ६ 'जा ह' इति क-ख. पाठः ७. 'प्राणाः प्रत्यानीताः' इति क. पाठः. ८. 'परिक्रम्यावलो' इति क-घ. पाठः.

किं नेत्राभ्यां चकितहरिणीनेत्रमापीतमाभ्या-
मासीदस्मद्दयितमलसापाङ्गमर्थान्तरं ते ॥ ६ ॥

हहह उन्मत्तोऽहं तनुमन्तामिवैनं व्यपदिशामि । तदन्य-
तो[1] विचिनोमि। (परिक्रम्य सहर्षम्) अये! समुल्लिङ्गितस्तस्या मार्गः, कुतश्चित् कारणात् कुपिताया विहाय मां प्र-
स्थितायाः —

नेत्रान्तवान्तान्यधिचन्द्रकान्तं
क्लान्तेरमुत्र क्षणमासितायाः ।
देव्या वियोगातुरचित्तवृत्ते-
रास्राण्यमून्यञ्जनकर्बुराणि[2] ॥ ७ ॥

---

करोपि । कृतकृत्यतया अंसस्थेन कार्मुकेण सह कामिनीनां चिल्लीवल्लीचलनेन विलासचलितचिल्लीवल्लीभिः यत् तुलनं तेन श्लाघापरेण गर्वितेनेत्यर्थः । एवं स्वैरचारे अस्मद्दयितमर्थान्तरं ते आभ्यां नेत्राभ्यामापीतमासीत् किम् । चकित-हरिणीनेत्रमिति लक्षणकथनम् अलसापाङ्गमिति च । अलसे अस्मद्वियोगेन श्रान्ते अपाङ्गे यस्य । अर्थान्तरमित्यनेन स्वरूपे सिद्धेऽप्यनिर्देश्यसौरूप्यादिगुण-वैभवेनार्थान्तरमित्येव वक्तुं युक्तम् । स्त्रीरूपं प्रिया इत्युक्तौ व्यक्त्यन्तरसाधारण्येन लघुत्वमेव भवेत् । अत एवार्थान्तरमित्युक्तम् । आभ्यां ते नेत्राभ्यामापीतमित्यनेन योषिज्जातिपरमदैवतस्य तवापि नयनकौतुकावहं तस्या रूपामृतमिति प्रकाश्यते ॥६॥ अये समुल्लिङ्गितः लिङ्गेन परिज्ञातः । तल्लिङ्गमुपपादयति — कुतश्चित् कारणात् कुपितायाः किमपि कारणं भावयित्वेत्यर्थः । अत एव मां विहाय प्रस्थितायाः आस्राण्यमूनि दृश्यन्त इति शेषः । नेत्रान्तवान्तानि नेत्रान्ताभ्यां धारया गलितानि । अधिचन्द्रकान्तं (चन्द्रकान्त)शिलायामित्यश्रुगलनाधिकरणम् । क्लान्तेः परिश्रमात् । अमुत्र प्रदेशे । क्षणमासितायाः वियोगातुरचित्तवृत्तेरित्यश्रुगलननिमित्तम् । अञ्जनेन क्षालितेन कर्बुराणि शबलानि ॥ ७ ॥ एतत् सर्वं भ्रान्तिकल्पनम् ।

---

१. 'अन्य' इति ख. पाठः. २. 'र' इति ख. पाठः.

(पुनर्विभाव्य) नैष चन्द्रकान्तः, न चैतान्यश्रुजलजालानि। अमी हि विकचस्थलपुण्डरीकनिषण्णाः षट्चरणगणाः। तदन्यतो विचिनोमि । अथवा किमनयान्विष्टया, यया मुहूर्तमपि विरहमसहमानमवयन्त्यापि मम हृदयं क्वापि प्रतिष्ठमानया समवलम्बितस्तूष्णीम्भावः (पुनर्विचिन्त्य) यद्वा नापराद्धं तया पतिदेवतया । इयमेव हि बन्धकी वसुन्धरा सपत्नीमात्सर्यात् तपस्विनीं तां ग्रस्तवती। उपलक्षितपूर्वा चेयमस्याः शैली । तथाहि—

> दशरथतनयस्य पश्यतः
> प्रियदयितामपहृत्य मैथिलीम् ।
> नृपसदसि यया तिरोदधे
> किमिव तया पुनरत्र दुष्करम् ॥ ८ ॥

(स्मृत्वा) अथवा भूपालसहस्रभुक्तमुक्तायाः कुतोऽस्याः कुलटायास्तस्यां पतिव्रतायां सपत्नीमात्सर्यावकाशः । तन्नेयं मन्ये पृथिवी प्राणवल्लभां मुषितवती । तदन्यतो विचिनोमि । (परिक्रम्य पुरतो विलोक्य सानन्दम्) अये! अयं

---

अत एव पुनर्विभाव्येति वस्तुनिरूपणं प्रकाशयति—नैष चन्द्रकान्तः । नचैतान्यश्रुजलानि । अमी हि विकचस्थलपुण्डरीकनिषण्णाः षट्चरणगणाः भ्रमरगणाः । अत्रैतानि विकचस्थलपुण्डरीकाणि, एते षट्चरणा इति बोध्यम् । अवयन्त्यापि अवगच्छन्त्यापि । शैली शीलम् । दशरथेत्यादि । पश्यतः पश्यन्तमनादृत्य नृपसदसि मैथिलीमपहृत्य यया तिरोदधे तिरोधानमङ्गीकृतं, तया अत्र अस्मिन् काले वनभूमौ वा ॥ ८ ॥

---

१. 'निरूप्य' इति क-पाठः. २. 'वनमत्र' इति ग-पाठः. ३. 'तां । द' इति ख-पाठः. ४. 'या अस्या' इति ख-पाठः ५. 'यां मा' इति ख-पाठः. ६. 'पुनर्विलोक्य अ' इति ग-पाठः. ७. 'क्य) अ' इति क-ग-पाठः.

देव्या मन्दारवतंसकः । सखे! पाराशर्य! कथमयं प्रमादिना त्वया भूयोऽपि परित्यक्तः। (आदातुमिच्छति)

अमात्यः—सखे! अयमवसरस्तव देवमुपसर्पितुम् । अहमपि केनाप्युपायेन [1]शिथिलीकृत्य किञ्चिदस्योन्मादं पश्चाद् दर्शयिष्याम्यात्मानम् । (निष्क्रान्तः)

विदूषकः[2]—(क) एव्वं होदु । (सत्वरमुपसृत्य) भो वअस्स! एसो कण्णऊरो । एसो अहं मन्दभाओ । एदं पुण पदुमराअभूमीए मरीइजाळं वअस्सं मोहेदि।

राजा—अये! वयस्यः पाराशर्यः। सखे! प्रयच्छैनम् ।

(विदूपकः कर्णपूर ददाति)

राजा[3]—(कर्णपूरमादाय हृदये निक्षिपन्[4] सरोमाञ्चम्) अयि प्रियापरिग्रहसुभग! वतंसक!

अपि कुशलि कपोलं*पाण्डु नेत्रप्रभाग्रैः
शवलितमलियूथश्यामलैः पक्ष्मलाक्ष्याः ।

---

(क) एव भवतु । भो वयस्य! एप कर्णपूरः । एषोऽह मन्दभाग्यः । एतत् पुनः पद्मरागभूम्यां मरीचिजाल वयस्य मोहयति ।

---

अयं देव्या वतसक इति भ्रमकथने विदूपकः सत्वरमुपसृत्य बोधयति—एषोऽहम् । अय कर्णपूरः । एतत् पुनः पद्मरागभूम्यां मरीचिजालं वयस्यं मोहयति । पद्मरागभूमौ सूर्यरश्मिसम्बन्धे कर्णपूरभ्रमो जातः ॥

अथ तत्करात् कर्णपूरमादाय तं प्रत्याह—अपि कुशलीत्यादि । प्रियापरिग्रहेण सुभग! तया अलङ्कारत्वेन परिगृहीतत्वाद् हृद्यतम! वतंसक! त्वां पृच्छामि । पक्ष्मलाक्ष्याः कपोलम् अपि कुशलि निर्बाधं वर्तते किम् । भवतस्तत्र निरन्तरवास इति पृच्छामि । निमित्तवशात् किञ्चिदकुशलं शङ्कयते—पाण्डु

---

१. 'किञ्चिदस्योन्माद शिथिलीकृत्य' इति ख- पाठः. २. 'कः—(स' इति क-ख-घ पाठः. ३. 'जा—(आदा' इति ख-घ- पाठः ४. 'पन्) अ' इति क- पाठः.

---

* कपोलशब्दस्यार्धर्चादित्व कल्प्यम् ।

पुलकसुहृदि मन्ये यत्र संश्लेषसौख्य-
प्रतिहतिषु दलानामभ्यसूयापरोऽभूः ॥ ९ ॥

सखे ! तदङ्गसङ्गमोत्सवदुर्ललितेनामुना किञ्चिद् विरली-कृतो मोहान्धकारः । तत् केन पुनरधुना तदन्वयश्लाघिना वस्त्वन्तरेण संस्तम्भयाम्यात्मानम् ।

विदूषकः—(क) भो वअस्स ! अम्बरआरिणीए तिस्से परिग्गहो माणुसमत्तेहि अह्मेहि कहं आसादिज्जइ ।

राजा—(ऊर्ध्वमवलोक्य सानन्दम्) अये ! विस्मृतोऽयमियतीं वेलां सुखसमासादनीयः समाश्वासः, अयं हि भगवान् भानुमाली

(क) भो वयस्य ! अम्बरचारिण्यास्तस्याः परिग्रहो मानुषमात्रैरस्माभिः कथमासाद्यते ।

अस्मद्वियोगेन विवर्णम् । तथापि प्राप्तपरभाग, यतोऽलियूथश्यामलैः अलियूथवत् श्यामलैः नेत्रकान्त्यग्रभागैराकर्णान्त प्रसृतैः शबलित शबल कृतम् । यत्र दलानां संश्लेषसौख्यप्रतिहतिषु अनेकवारं जातासु त्वम् अभ्यसूयापरोऽभूः । तव कपोलश्रीभाजनने निर्बन्धः । अतस्तत्र तव दलाना संश्लेषसौख्यस्य प्रतिहतिषु त्वम् अभ्यसूयापरोऽभूः । कथं संश्लेषसौख्यप्रतिहतिः । तत्राह — पुलकसुहृदीति । पुलकोदयेन कपोलस्य दन्तुरत्वे पुलकेन दलाना विश्लेषजननादभ्यसूया घटते । पुलकसुहृदीति पुलकाख्ये सुहृदि समागते मद्दलाना विश्लेष इति पुलकं प्रति पुलकनिमित्त प्रति वाभ्यसूया घटते । मन्ये इति ममानुभवसिद्धोऽयमर्थः । अनुभवस्य वैशद्येनेदानीमपि स्फुरति । अस्मत्सङ्गमे तदा तदाश्लेषपरिचुम्बनादिषु पुलकोदयेन कपोलयोर्दन्तुरितत्वं तव दलविश्लेषश्चेदानीमपि मम स्फुरति ॥ ९ ॥ तदङ्गसङ्गमोत्सवदुर्ललितेन तदङ्गसङ्गमस्वरूपेणोत्सवेन विशृङ्खलेन । तदन्वयश्लाघिना तत्सम्बन्धश्लाघनीयेन ॥

१. 'रः । के' इति क-ख-ग. पाठः. २. 'कः—अम्ब' इति क. पाठः. ३. 'स्य) भ' इति ग. पाठः. ४. 'त इय' इति ख. पाठः. ५. 'संदट्टः, भ' इति ख. पाठः, 'सः, 'अये ! भय भ' इति क. पाठः. ६. 'अदुमा' इति ख. पाठः.

तस्या जनयिता । भगवन्! पद्मिनीवल्लभ!

तस्यास्ते दुहितुरविप्लुतानुरागात्
संसर्गात् सुभगतरैः करैरमीभिः ।
अङ्गानाममृतरसान्तराण्यमीषा-
मासिञ्चन्नमृतकरोऽसि नोष्णरश्मिः ॥ १० ॥

हा कष्टमकालजलदः पापीयानंशुमालिनं तिरोधत्ते । भो भोः सौदामनीवल्लभ!

लास्यारम्भप्रविततशिखानपर्यन्तं कलापान्
केकापूरप्रचितकुहरां कन्धरां द्राघयन्तम् ।
त्वं प्रेक्षस्व प्रणयविवशः प्रेमवन्तं मयूरं
मा भूर्मेघ! क्षणमपि रवेर्मण्डलस्योपरोधी ॥ ११ ॥

---

भगवन्! पद्मिनीवल्लभ! उचितकान्तासंयोगवियोगदुःखज्ञतयास्मद्वैषम्य त्वया ज्ञायते । अतस्तस्यास्ते दुहितुः अविप्लुतानुरागाद् अपरिच्युतस्नेहात् संसर्गाद् अङ्कारोपणसमाश्लेषादिकृतात् सुभगतरैः अतिहृद्यैः संसर्गसङ्क्रान्ततदङ्गस्पर्शैः अमीभिः करैः अमृतरसान्तराणि अमृतरसविशेषान् अनार्द्राण्यतिहृद्यानि आसिञ्चन् आ समन्तात् सिञ्चन् अमीषां मदङ्गानां त्वम् अमृतकरोऽसि, नोष्णरश्मिः । अन्येषामिवमुष्णरश्मिर्मदङ्गानामेवममृतासेचनादमृतकरोऽसि ॥ १० ॥ अथ मेघं प्रत्याह—भो सौदामनीवल्लभ! उचितगृहिणीप्रियस्य तव विरहविधुरस्य ममाश्वासनप्रतिबन्धो न योग्यः । त्वं मयूरं प्रेक्षस्व त्वदेकालम्बनं सुहृदं सम्मानय । विशेषतस्त्वत्प्रसादाय लास्यारम्भे नटनारम्भे प्रविततशिखान् विस्तृताग्रभागान् कलापान् अपर्यन्तं तव दर्शनया प्रेरयन्तम् । तथा केकापूरेण स्वनादसञ्चयेन परिपूर्णान्तरालां कन्धरां ग्रीवां द्राघयन्तं दीर्घीकुर्वन्तं प्रेक्षस्व । प्रेक्षणीये पुरोवर्तिनि किमन्योपघाताय प्रवर्तेथ इति भावः । प्रणयविवशः तस्मिन् परिचयेनाभिनिविष्टः । प्रेमवन्तं त्वयि स्नेहवन्तम् । परस्परानुरक्तयोः सुहृदोः परस्परावलोकनं हृद्यम् । इदं विहाय क्षणमपि रवेर्मण्डलस्योपरोधी मा भूः ॥ ११ ॥

(नेपथ्ये)

राजन् ऋक्षनन्दन!

विदूरस्थे नाथे पृथुमहसि पञ्चालपशुभि-
स्त्वयि व्यस्तं राज्यं तव सकलमत्यर्थकलुषैः ।
अतस्तूर्णं गत्वा कुरु निजपुरीमस्तविपदं
पुनस्ते भूयासुर्मनसि निहिताः कामगतयः ॥ १२ ॥

राजा— (अमर्षपरिवर्तिताक्षमाकर्णयन्) किं किं पञ्चालपशदैः परामृष्टमस्मद्राज्यम् ।

क्षणं मम रणाङ्गणे परिणिधेहि पञ्चालकान्
कृतान्त! यदि शक्नुयाः सरथपत्तिसातिद्विपान् ।
क्षुरप्रमुखकुट्टितस्फुटितसन्धिबन्धान् क्षणाद्
यमक्षयकृतस्थितीन् परमरीन् निरीक्षस्व तान् ॥ १३ ॥

---

अथामात्यो रसान्तरेणास्य चित्तं व्याक्षेपाद् व्यावर्तयितु तिरोहितोऽशरीरिणीमेव वाचं प्रकाशयति—राजन् ऋक्षनन्दन! नाथे त्वयि विदूरस्थे तव राज्यं सकल पञ्चालपशुभिः व्याप्तम् । विदूरस्थतैवात्र निमित्तम् । यतः पृथुमहसि उरुतरप्रतापे । तादृशस्य तव दूरस्थतैव तेषां प्रवृत्तिनिमित्तम् । पञ्चालपशुभिः अतिकातरैः । अत्यन्तकलुषै. कोपव्याकुलचित्तै राज्य सकलमाक्रान्तम् । अतस्तूर्णं गत्वा पुरीमस्तविपद कुरु । शत्रुवधेनेति शेष । ते मनसि निहिताः साध्यतया सङ्गृहीताः । कामगतय· अभिप्रायप्रकारा । पुनर्भूयासुः एतदनन्तरं निर्विघ्न भूयासुरित्याशिषि प्रयोगः ॥ १२ ॥

तां वाणीममर्षपरिवर्तिताक्षमाकर्णयन् आकर्णनसमय एव मानित्वेनामर्षमवलम्बमानः कथयति — किं किं पञ्चालपशदैः परिमृष्टमस्मद्राज्यमिति । अतिक्षुद्रैर्माण्डलिकैः । अस्मद्राज्य सार्वभौमराज्यमित्यनौचित्यस्फुरणेन सामर्ष दैवाभिमुख्यं प्रार्थयते — हे कृतान्त! शक्नुया यदि पञ्चालकान् मम रणाङ्गणे परिणिधेहि परितः स्थापय । सरथपत्तिसातिद्विपान् समग्रबलसमेतान् ।

**अमात्यः**—बाढम्, आनीतम्, अपि तु कचिदितः क्रोशमात्रे[2] सन्निवेश्य देवसमन्वेषणार्थमहमेकाकी प्राप्तः।

**राजा**—किमानुयात्रेण। न खल्वयमखिलराजन्यप्राणामिष[3]गृध्नुर्मम दक्षिणभुजः क्षमते कालक्षेपम्। तदालोच्यतामस्माकमम्बरगमनोपायः।

(ततः प्रविशत्यम्बरयायिना रथेन सारथिः)

**सारथिः**—आदिष्टोऽहमरुणसारथिना भगवता। यथा 'हयसेन! मम जामातुरसन्निधानादम्बुगर्भा अपि तज्जनपदे वर्षितुमक्षमा नाड्यः। तेन स दुःक्षामपीडितः समुत्सन्नप्रायो वर्तते। संवरणोऽपि तपतीसङ्गमसुखविस्मृतकृत्यः हैमवतानि स्वर्गोपवनसमानि वनानि समुत्सृज्य न प्रयातुं वा-

किमानुयात्रेणेति। कार्यमिति शेषः॥

अथ राज्ञस्त्वरितगमनोपायसम्पादनाय देवदूतप्रवेशः। प्रविष्टः स सवितृनियोगमनुचितत्वेनानिष्टतया समर्थयति—आदिष्टोऽहमित्यादिना। अरुणसारथिना जगदनुग्रहसन्नद्धेन अहं नियुक्तः। यथेत्यादि तन्नियोगप्रकारः। हयसेन! मम जामातुरसन्निधानाद् अम्बुगर्भा अपि वर्षाधिकृता अपि। मम नाड्यः सिरा रश्मय इत्यर्थः। नाडीनां चतुश्शतेन वर्षप्रवृत्तिरिति वर्षनियमिता नाड्यो निर्दिष्टाः "सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः" (रघु-स.१०-श्लो.५८) इति, "अष्टमासधृ(कृ?त)गर्भं भास्करस्य गभस्तिभिः" इति च प्रतिपादिता अत्र निर्दिश्यन्ते। तज्जनपदे वर्षितुमक्षमाः असमर्थाः। मम जामातुरसन्निधानात् मम जामातुरित्यनेन नूतनेन सम्बन्धेन तस्मिन् वात्सल्यातिशयो व्यज्यते, तेनासन्निधानकृतं जनपदस्याधर्मसम्बन्धं द्योतयति। अत एव अम्बुगर्भा अप्यक्षमा इत्युक्तम्। किं तेनापतितमित्यत्राह—तेन स इत्यादि। अवर्षणेन दुःक्षामपीडितत्वाद् दुर्भिक्षपीडितत्वादुत्सन्नप्रायो जनपदो वर्तते। तर्हि किमसन्निधान तत्राह—संवरणोऽपीति। तपतीसङ्गमसुखविस्मृतकृत्यः विस्मृतकृत्यत्वम् अत्र दोषः। हैमवतानि वनानि समु-

१. 'आगतम्' इति क-ख-घ पाठः. २. 'श्रे तदतिल निवे' इति ज. पाठः. ३. 'पमासग' इति क-ग. पाठः. ४. 'त्वाकाशया' इति ग पाठः, 'त्वाकाशयानेन सा' इति क. पाठः. ५. 'दुर्भिक्ष' इति घ. पाठः. ६. 'परित्यज्य' इति क-ख. पाठः, 'विहाय न' इति घ. पाठः.

च्छति। तेन च कञ्चित् कालं विघटनीयमेतन्मिथुनम्[1]। सा च पतिदेवता न जाग्रती शृणोति कथामपि विप्रवासस्य। तन्निद्रायमाणे भर्तरि स्वपतीं तपतीं सपरिजनां प्रापय सावित्रीसकाशमि[2]'ति। ततश्चाहं—

राज्ञः प्रियां पृथुपयोधरभारगुर्वी-
माक्षिप्य तां सहचरादिव चक्रवाकीम्।
आज्ञाबलाद् दिनपतेरतिनीचवृत्ति-
रासं प्रवृद्धतमसां प्रथमः[3] प्रदोषः॥ १४॥

त्यज्य प्रयातुं न वाञ्छति। स्वर्गोपवनसमानानीति हेतुः। तत् किं क्रियतां तत्राह—तेन कञ्चित् कालं विघटनीयं तन्मिथुनम्। विघटनीयं विश्लेषं नेतव्यम्। अस्मन्मतविरुद्धोऽयमित्युक्त कञ्चित् कालमिति दुःक्षामपीडाशमावधि। कोऽत्र विघटनोपायः। सा च पतिदेवता। सा चेति न केवल सः। पतिदेवतेति युक्त एवास्या निर्बन्ध इति प्रकाश्यते। जाग्रती न शृणोति कथामपि विप्रवासस्य कथामपि न शृणोति, दूरे तदनुष्ठानम्। तन्निद्रायमाणे भर्तरि स्वपतीं तां द्वयोरपि विश्लेषबोधेऽसतीत्यर्थः। सपरिजनां तां सावित्रीसकाशं प्रापयेति निरालम्बनत्वेन तस्य नैराश्यजननार्थम्। इतीति सूर्यनियोगप्रकारोपसंहारः। तदनुष्ठानं प्रकाशयति—ततश्चाहमित्यादि। तस्माद्धेतोः अहं तां प्रियां राज्ञ आक्षिप्य अतिनीचवृत्तिः प्रवृद्धतमसां प्रथमः आसमित्यन्वयः। प्रिया तामित्यनेन तस्या अप्यनुरागातिशयः प्रकाश्यते। अत उभयोर्विश्लेषासहत्वे राज्ञः नरेन्द्राद् आक्षिप्य आकृष्यान्यत्र नीत्वेत्यनेनानौचित्यप्रतिपादनम्। पृथुपयोधरभारगुर्वीं भोगयोग्ये वयसि वर्तमानां कान्तोरसि निहितस्तनभराम्। अपादानत्वेन ततो विश्लेषणमतीवायुक्तमिति प्रकाशितम्। तत् स्फुटयति—सहचरात् चक्रवाकीमिवेति। चक्रवाकमिथुनसाम्येन परस्परप्रेमगौरवं विश्लेषासहत्वं च प्रकाश्यते। दिनपतेराज्ञाबलादिति। स्वामिनियोगप्राबल्यमनुचितानुष्ठाने निमित्तम्। तेनाक्षेपक्रियानन्तर फलितमतिनीचवृत्तित्वम्। अतिनीचा कुत्सिता वृत्तिः प्रवृत्तिः यस्य तादृशः। प्रवृद्धतमसां

१. 'मेव त' इति क-घ. पाठः, 'मेव च त' इति ख. पाठः. २. 'समीपमि' इति क. पाठः.
३. 'मग्र' इति क. पाठः.

**विदूषकः**— (स्वगतम्) (क) साहु ळे वसुमित्त! साहु। अमच्चभावाणुरूवं तुए उवक्कन्तं। दिट्ठिआ एसो परिवत्तिदो कामुम्मादादो रोसङ्कुसेण। जाव अहं पि किञ्चि सन्धुक्खेमि कोवाणळं। (प्रकाशम्) भो तेहिं दासीएवुत्तेहिं पञ्चाळेहिं पुव्वं पि तुज्झ बाहुजुअळेण अणुभाविअभअरसेहिं अज्ज वि अप्पविणासाअ एदं आढत्तं।

**राजा**— (सविमर्शम्) सखे! किन्नु खल्वसन्निहितस्तत्रभवान् वसुमित्रः, येनैतदेवमापतितम्।

(प्रविश्य)

**अमात्यः**— विजयतां देवः।

---

(क) साधु रे वसुमित्र! साधु, अमात्यभावानुरूपं त्वयोपक्रान्तम्। दिष्ट्यैष परिवर्तितः कामोन्मादाद् रोषाङ्कुशेन। यावदहमपि किञ्चित् संधुक्षे कोपानलम्। भोः! तैः दास्याःपुत्रैः पञ्चालैः पूर्वमपि तव बाहुयुगलेनानुभावितभयरसैरद्याप्यात्मविनाशायैतदारब्धम्।

---

समयोऽधाः। तत्र शक्त्येदमेव सम्पादनीयम्। किं पुनः क्रियत इति चेत्। तान् अरीन् क्षुरमुखकुट्टितस्फुटितसन्धिबन्धान् क्षुरमुखैः कुट्टिताः छिन्नाः स्फुटिता विशीर्णा हस्तपादादिसन्धिबन्धा येषां तान्। क्षणात्, न तु कालान्तरे। परं यमक्षयकृतस्थितीन् न स्वगृहस्थितीन् केवलं यमावासकृतस्थितीन् निरीक्षस्व। रणाङ्गणे सङ्घटनस्यैव कालविलम्बः, उत्तरक्षण एव यमालयस्थितीन् पश्य ॥ १३ ॥

तच्छ्रुत्वा प्रोत्साहयति नर्मसचिवः— भोः तैः दास्याःपुत्रैः पञ्चालैः तव बाहुयुगलेनानुभावितभयरसैरात्मविनाशायैतदारब्धम् इति ॥

तत्राह— सखे! किमसन्निहितस्तत्रभवान् वसुमित्रः, येनैतदीदृशं व्यसनमापतितम्। तत्सन्निधान एव नैव भवेदिति भावः ॥

---

१. 'पा' इति ग. पाठ. २. 'ळे' इति क-ग पाठः. ३ 'दा' इति ग पाठ. ४. 'सप्त तन्निमग्न' इति ग. पाठ. ५ 'तम्। अ' इति क-घ. पाठः. ६. 'तः— (उपसृत्य) ।' इति क-ग पाठ.

राजा—(विलोक्य) अये[2] अमात्यो वसुमित्रः प्राप्तः। (परिष्वज्य) सखे! अप्रकाशितशरीरा वागभिहितवती कृतं जनपदोपरोधं शत्रुभिः। भवन्मतिबलनिरुद्धप्रसराणां तेषां कुतोऽयमद्य प्रसङ्गः।

अमात्यः—देव! सत्यमशङ्कनीयपराक्रमाः केवलं पञ्चालाः। किन्तु बहुशो भवद्बाहुबलनिर्जितैः सकलराजन्यचक्रैः सम्भूयैते समुल्लङ्घ्य मम मतिबलं प्रतीक्षन्ते देवस्य पराक्रमम्। तदेनतिविलम्बितं तेषामभिलाषं पूरयतु स्वामी।

विदूषकः—(क) भो! किं तुए सह वाहणं आणुअत्तं आणीदं, जेण तुरिअं गच्छीअदि।

(क) भोः किं त्वया सह वाहनमानुयात्रमानीत, येन त्वरित गम्यते।

तदवसरे अमात्य प्रविष्ट। विजयता देव इति कृताचार त परिष्वज्य श्रुतमर्थं बोधयति — अप्रकाशितशरीरा वागभिहितवती वक्तार न पश्यामि वाच शृणोमि। अतः दैवकृतमिति मन्ये। भवन्मतिबलनिरुद्धप्रसराणा तेषा कुतोऽयमद्य प्रसङ्गः॥

तत्र शत्रुपरिभवमेव पोषयत्यमात्य। राज्योपप्लवेन सर्वधनाभिघातेऽनृतस्यापि न दोषरूपत्वमिति मत्वा परपरिभव प्रकटयति — देव! केवलं पञ्चाला अनन्यसहायाश्चेद् अशङ्कनीयपराक्रमा। किन्त्विति। इदानीं विशेषोऽस्ति। बहुशो भवद्बाहुबलनिर्जितै छिद्रान्वेषिभि सकलराजसमूहै सम्भूय मम मतिबल समुल्लङ्घ्यैते देवस्य पराक्रम प्रतीक्षन्ते प्रतिपालयन्ति। प्रयापितुमिति शेष। तदविलम्बित तेषामभिलाष पूरयतु स्वामी॥

किं त्वया सह वाहनमानुयात्रमानीत, येन त्वरित गम्यते॥

१. 'जा—अ' इति क-रा घ पाठ. २. 'रे। व' इति क पाठ ३ 'गूढप्र' इति घ. पाठ. ४. 'दवि' इति रा. पाठ. ५. 'क.—ङि' इति क-रा घ. पाठ

द्वितीयः पुनरयमादेशो देवस्य 'यदसौ संवरणः स्वराष्ट्रगमनाय साचिवेन[2] सञ्चोदितस्त्वारितगमनोपायमजानानस्तिष्ठति। तदमुना स्यन्दनेन पूरणीयस्तस्याभिलाष' इति। तद् यावदवतरामि (अवतरणं नाट्यन्नथो विलोक्य) अहोतुखलु क्रमादमुष्मिन्नवतरति स्यन्दने—

किं तोये प्लवते पलाशवितर्तिर्नैव द्रुमेषु द्रुमा-
स्तास्वेवाप्सु न भूधरेषु गिरयः सिन्धौ न पृथ्वीतले।
पृथ्वी सिन्धुनिचोलकुक्षिकुहरादुत्कृष्यते चक्षुषे-
त्युत्खातप्रतिरोपिता मम भवन्त्येता मनोवृत्तयः ॥ १५ ॥

प्रथम आसं प्रवृद्धतमागुणानां मूढानामग्रगण्यो जातः। प्रदोषः प्रकृष्टदोषः छलेन तादृशस्य मिथुनस्य विप्रयोगजननात्। एवं कृतं प्रत्यनुतापेन कथनम्। अत्र तमश्शब्दस्यान्धकारार्थे प्रदोषशब्दस्य रजनीमुखार्थे प्रथमशब्दस्य प्रतिपदर्थे च शब्दशक्त्या प्रतीयमाने यथा प्रवृद्धतमसाम् अपरपक्षतिथीनां प्रथमः प्रदोषः तमोग्राहको भवति, तथेत्यर्थो व्यज्यते ॥ १४ ॥ एवं नियोगानुष्ठानं प्रतिपाद्यानुष्ठेयनियोगान्तरं प्रस्तौति—द्वितीयः पुनरिति। तं प्रकारमाह—यदसौ संवरणः स्वराष्ट्रगमनाय पुराद्वागतेन सचिवेन सञ्चोदितस्त्वरितगमनोपायमजानानास्तिष्ठति। तदमुना स्यन्दनेन पूरणीयस्तदभिलाष इति द्वितीयो नियोगः। तदवतरामि। अवतरणवर्णनोपक्रमः अवतरणं नाट्यन्नथो विलोक्येति। अवलोकनेन कौतुकं ध्वनितम्। अत्र प्रथमः—अहोखल्विति। क्रमादमुष्मिन् स्यन्दने अवतरति मम एता मनोवृत्तय इति उत्खातप्रतिरोपिता भवन्तीत्यन्वयः। उत्खातप्रतिरोपिताः एतस्मात् प्रतीतिप्रकारादुद्धृताः पुनरन्यत्र स्थापिताः पुनस्तन्निषिध्योद्धृताः पुनरन्यत्र स्थापिता इत्यवतरणक्रमेण मनोवृत्तयो भवन्ति। तत्प्रकारमाह—किं तोय इति। सूर्यलोकादवतरणे प्रथम व्याप्तस्यैव चक्षुर्गोचरत्वाद् जम्बूद्वीपात् समुद्रस्य व्याप्तत्वेन दृश्यमानत्वाद् जलमध्ये भूधरोपरि स्थितानां वृक्षाणामदृश्यत्वात् तदु-

१. 'यदि' इति ख. पाठः. २. 'गमनोपायमजानानः सचिवेन सञ्चोदितास्ति' इति क. पाठः.
३. 'वर्ति:' इति ख. पाठः 'वर्तिः' इति क. पाठः

**विदूषकः**—(ऊर्ध्वमवलोक्य) (क) भो वअस्स! एसो दे सोसुरो णो हिअअसन्दावं अवणेदुं ओदरइ त्ति तक्केमि ।

**राजा**[1]—अयं हि प्रभापटलदुर्विभाव्याभोगः कोऽपि दिव्यः स्यन्दनः ।

**अमात्यः**—सदा खलु स्वामिनश्चित्तानुवर्तिन्यो देवताः ।

**सारथिः**—(नीचैर्दत्तदृष्टिः) अये अयं महाराजः संवरणः शैल-

(क) भो वयस्य! एष ते श्वशुरो नो हृदयसन्तापमपनेतुमवतरतीति तर्कयामि ।

परि प्रसृतानि पलाशानि तोयश्लिष्टानीव दृश्यन्ते । तथा वितर्कयति—किं तोये व्याप्ते पलाशवितति: प्लवते केवलं तोयोपरि निरन्तराणि प्लवमानानि पलाशानि दृश्यन्ते किम् आधारस्यादृष्टत्वादिति प्रथम प्रतीतिः । पुनः किञ्चिदधोगमने नैवेति पूर्वप्रतीतेरपलापः । तोयेषु नैव, द्रुमेषु तोयव्यतिरेकेणैतदाधारत्वेन द्रुमा दृश्यन्ते । ते तास्वेवाप्सु नाधारान्तरमेषामिति पश्चात् प्रतीतिः । पुनश्चावतरणे तत्र निषेधप्रतीतिः नेति । अप्सु नेति पूर्वप्रतीत्युद्धरणम् । आधारान्तरमाह—भूधरेष्विति । द्रुमाणां भूधराः आधारत्वेन दृश्यन्ते । ते सिन्धौ भूधराणां सिन्धुराधारः । पुनश्चान्यथा प्रतीतिः नेति । सिन्धौ न । पुनः कुत्र । पृथिवीतले गिरीणामाधारत्वेन पृथ्वीतलं दृश्यते । पुनरवतरणक्रमेण पृथ्व्या व्याप्तिः समुद्रस्य दूरीभावश्च । एवं स्थिते पृथ्वी सिन्धुनिचोलकुक्षिकुहरात् । "निचोलः प्रच्छदपटः" इत्युक्तावपि वस्त्रादिकृत भाण्डावरणभाजनमिह विवक्ष्यते । सिद्धरूपस्य निचोलस्य कुक्षिकुहराद् उदरकोटरात् तत्र पूर्णा चक्षुषा प्रसह्य उत्कृष्यते आकृष्यते । तत्रान्तर्गते भाण्ड आकृष्यमाणे तस्य व्याप्तिः भाजनस्य सङ्कोचश्च दृश्यते । अत एवमुक्तिः । एवमवतरणे चक्षुषः प्रसरक्रमेणोत्खातप्रतिरोपिता मनोवृत्तयो भवन्ति ॥ १५ ॥

अवतर(न्त रथ[2] ति स्वय)मागच्छतीति तर्कयामि । गगनगमनोपायासिद्ध्या हृदयसन्तापः ॥

तद्भ्रममपनयति—अयं हि कोऽपि दिव्यः स्यन्दनः प्रभापटलेन दुर्विज्ञेयस्वरूपः ॥

तमालोक्य सूत आह—अये अयं महाराज इति । अन्विष्टो झटिति

१ 'कधो एसो भअवं मरो' इति ख-घ. पाठः. २ 'आ (निरूप्य) अ' इति घ. पाठः.

राजकानने स्थितः । यद्यहममुष्मै भूतार्थं प्रकाशयेयम्, असौ पृच्छेदप्यात्मदयितोदन्तं, ततश्चापतेयुः सङ्कटानि । तदेवं कथयामि । (अवतीर्योपसृत्य) विजयतां मध्यमलोकपालः । अहमसकृदसुरविजयसहाय्यसम्प्रीणितस्य भगवतः सङ्क्रन्दनस्य शासनादम्बरपथेन हस्तिनपुरमायुष्मन्तं नेतुमागतोऽस्मि । तदारोहत्वायुष्मान् ।

राजा—(सप्रमोदम्) अनुगृहीतोऽस्मि भगवता शतक्रतुना ।

(सर्वे रथारोहण नाटयन्ति)

अमात्यः—भो सेनापते! सिंहघोष! अपरिबाधमानीयतामानुयात्रम् । किं ब्रवीषि तथा क्रियत इति ।

सारथिः—आयुष्मन्! किं मुच्यन्तामभीशवः ।

---

हृष्ट इति प्रहर्षः । यद्यहममुष्मै भूतार्थं प्रकाशयेयम् अहं सूर्यसूतः त्वां नेतुमागत इति भूतार्थः । तत्प्रकाशने दोषः—प्रियोदन्त पृच्छेदिति । ततश्च सङ्कटान्यापतेयुः, प्रियावृत्तान्तकथने तद्दर्शनायैवायमुद्यच्छेद्, न राज्यगमनाय । ततो जनपदविनाशः । तदन्यथा कथयामि । विजयतां मध्यमलोकपाल इत्याशीर्वचनेनैव व्याजस्य सङ्गतिमुद्भावयति । अहं सङ्क्रन्दनस्य शासनादायुष्मन्त हस्तिनपुरं नेतुमागतः । असकृदसुरविजयसाहायकसंप्रीणितस्येति नियोगयोग्यत्वम् । तदारोहत्वायुष्मानित्यविलम्बप्रकाशनम् ॥

तच्छ्रुत्वा अनुगृहीतोऽस्मि भगवता सङ्क्रन्दनेनेत्यङ्गीकारपूर्वं रथारोहणम् ॥

अथाकाशभाषितेनामात्यस्योक्तिः—सेनापते! सिंहघोष! अपरिबाधमानीयतामानुयात्रमिति ॥

---

१. 'तावदे' इति ख. पाठः. २. 'ये) वि' इति क-ग-घ. पाठः. ३. 'ह्यकस' इति ख-ग. पाठः. ४. 'जा—यदाज्ञापयति भगवान् सङ्क्रन्दनः । (सर्वे रथमारोहन्ति' इति क. पाठः, 'जा—यदाज्ञापयति भगवान् सङ्क्रन्दनः । (स' इति घ. पाठः, 'जा—अ' इति ख पाठः. ५. 'ता सङ्क्रन्दनेन (स' इति ख. पाठः. ६. भो भोः से' इति क-घ पाठः. ७. 'क्वचिन्मु' इति ख-ग-घ. पाठः.

**राजा**—बाढम् । प्रथमः कल्पः ।

(सारथिस्तथा करोति)

**विदूषकः**—(क) भो वअस्स! पुव्वप्पत्थिअं अम्बरगमणं आसि त्ति पीदी समुप्पण्णा । रहवेअघुण्णिदक्खो छिण्णपादं पडिस्सं ति भअं मे उप्पण्णं । ता दिढं तुमं ओळम्बिअ चिट्ठिस्सं । (राजानमवलम्बते)

**राजा**—(रथवेग निरूप्य) अहोतुखल्वप्रतर्क्यक्रमोऽयमतिस्यदः स्यन्दनस्य । कुतः—

कालः पातेष्वमीषां खुरपुटयुगयोर्मेघपृष्ठे हयाना-
मेकस्यैव क्षणस्य प्रथमचरमयोः पूर्वपाश्चात्यभागौ ।

(क) भो वयस्य! पूर्वप्रार्थितमम्बरगमनमासीदिति प्रीतिः समुत्पन्ना । रथवेगघूर्णिताक्षश्छिन्नपातं पतिष्यामीति भय मे उत्पन्नम् । तद् दृढं त्वामवलम्ब्य स्थास्यामि ।

किं मुच्यन्तामभीशव इति तस्य प्रश्नमनुवदति—बाढं प्रथमः कल्प इति । बाढमिति पूर्णानुवादे । तद्योग्यतया प्रथमः कल्प इति । मुख्यपक्षोऽयमित्यर्थः ॥

अथ रथवेगं निरूप्य सविस्मयमाह—अहोतुखल्विति । अयं स्यन्दनस्य अतिस्यदः अतिवेगः अप्रतर्क्यक्रमः विमर्शाशक्यपरिपाटीयुक्तः । कुत इति । कस्मादेवमतर्क्यत्वमित्याह—काल इति । अमीषां हयानां प्रथमचरमयोः खुरपुटयुगयोः मेघपृष्ठे पातेषु कालः एकस्यैव क्षणस्य पूर्वपाश्चात्यभागावित्यन्वयः । प्रथमचरमयोरग्रगतयोः पृष्ठगतयोश्च । पादद्वयाश्रय खुरपुटम् अन्यपादद्वयाश्रय चेति खुरपुटयुगं, तयोः पुटयोरग्रभवयोः पश्चाद्भवयोश्च । मेघपृष्ठे पातेषु मेघोपरि पदविन्यासेन गमनमङ्गीकृत्योक्तिः तत्र खुरपाते । काल. एकस्यैव क्षणस्य पूर्वपाश्चात्यभागौ, न क्षणान्तरम् । एकक्षणस्य पूर्वभागेन प्रथमखुरपुटस्य पातः पश्चाद्भागेन चरमखु-

१. 'म्मि' इति क-ग पाठः २. 'सम्भवइ ।' इति ग. पाठः. ३. 'म्व स्थित.)' इति ग. पाठः. ४. 'पचन्द्)' इति ख. पाठः. ५. 'तिरयः स्य' इति ख-ग. पाठः.

वेगस्तब्धा इवामूः कनकवलयवद् व्याप्तपर्यन्तरेखं
नेमीरावर्त्तमानाः पिशुनयति तडिच्चक्रमाक्रान्तिलग्नम् ॥ १६ ॥

(इति निष्क्रान्ताः सर्वे)

इति पञ्चमोऽङ्कः ।

---

रपुटस्येति वेगातिशयः । अत्र क्षणशब्देनातिसूक्ष्मः कालो विवक्षितः । पुनः प्रकारान्तरेण वेगमाह—आक्रान्तिलग्नं तडिच्चक्रम् अमूः नेमीः आवर्त्तमानाः पिशुनयति । यतः वेगस्तब्धा इव वेगेन निश्चला इव अज्ञातपरिभ्रमणाः । आक्रान्तिलग्नं नेमीनां मेघोपर्याक्रमणेन लग्नम् । तडितां मेघाभिघाते झटित्युदयात् तदानीमेव नेमिषु (न ?) लग्नम् । कनकवलयवन्नेमिषु व्याप्तपर्यन्तरेखम् । आवर्त्तमानाः भ्रमन्तीः । पिशुनयति । मेघाक्रमणे तडितां नेमिपर्यन्तवलनाद् इमा नेमयो भ्रमन्तीति कल्पयितुं शक्यम् । अन्यथा वेगातिशयेन स्तब्धा इव दृश्यन्ते । एवं वर्णितवेगेन रथेन झटिति पुरं प्राप्तः ॥ १६ ॥

इति पञ्चमोऽङ्कः ।

## अथ षष्ठोऽङ्कः ।

(ततः प्रविशति वृद्धकाञ्चुकीयः)

**काञ्चुकीयः**—(सविमर्शम्) अहो महानुभावता महाराजसंवरणस्य, यदमुष्य रथहयहेषितसमकालीनो घनाघनानां हुङ्कारः, पादपद्मपरागैः समं भुवि पतिताः पयोवृष्टयः। अमुना प्रमोदातिभारेणाम्रेडितमङ्गानामपाटवम्। कुतः—

कुर्वन् नैकविधां गतिं प्रकटयन्नुद्भ्रान्ततारे दृशौ
चिन्ताग्लानिविषादविभ्रमसुखान् भावान् समुद्भावयन्।

---

अथ राजागमनापेक्षिणीं वर्षस्य सिद्धिं राज्ञः प्रासादारोहणं च विष्कम्भपात्रेण स्थविरकञ्चुकिना सूचयति। प्रविष्टः सः स्वामिनो लोकोत्तरत्वं प्रशंसति—महाराजस्य महानुभावता आश्चर्यभूता अघटमानघटनापटीयस्तानुभावः स लोकोत्तरः, यत अमुष्य रथहयहेषितसमकालीनः आगमनकाले रथहयानां हेषितेन समकालभवः नतु पश्चात्। घनाघनानां वर्षोद्यतानां मेघानां हुङ्कारः गर्जितम्।

"+प्रविवर्षुर्जलधरः प्रभिन्नः पाष्टिको गजः।
देवश्च नमुचेर्हन्ता त्रयो ज्ञेया घनाघनाः॥"

इति वर्षोद्यतमेघवाची घनाघनशब्दः। पुनः रथादवतीर्णस्य भूतलमलङ्कुर्वतः पादपद्मपरागैः समं भुवि पयोवृष्टयः पतिताः। अमुना प्रमोदातिभारेण एतन्निमित्तेन प्रमोदस्यातिभारेण स्वामिदर्शनेन वर्षेण च प्रवृद्धेन। अङ्गानामपाटवमाम्रेडितं द्विगुणितम्। आम्रेडितमित्यनेन पूर्वमेव वार्धककृतस्यापाटवस्य सूचनं कृतम्। तद्विवरणाय कुत इत्याद्युपक्रमः। कुतः पूर्वमपाटवमिति चेदुच्यत इत्यर्थः। कुर्वन्नित्यादि। सोऽयं वार्धक्यविस्फूर्जथुः नर्त्तकवद् मां प्रनर्त्तयति। सोऽयमिति अतीतवर्तमानकालानुबद्धत्वेन चिरप्रवृद्धतां प्रकाशयति। अत एव वार्धक्यविस्फूर्जथुरित्युक्तम्। विस्फूर्जथुः प्रकर्षः। नर्त्तकवद् मां प्रनर्तयति नर्तको नर्तकमिव प्रनर्तयति चेष्टयति अन्यत्र नृत्तं

---

+ 'विवर्षिषुरि'ति साधु।

ऊरू सन्नमयन् मुहुर्विचलयन् वक्षो वलीकञ्चुकं
सोऽयं नर्त्तकवत् प्रनर्त्तयति मां वार्धक्यविस्फूर्जथुः॥ १ ॥

आदिष्टश्चाहं देवेन यथा "विनयत्रात! तूर्णं गत्वा प्रावृषेण्याहरतिवाहनक्षमः कार्त्तिकेयावासपरिसरोद्यानगतः सज्जीक्रियतां गङ्गालोकप्रासाद" इति। अनुष्ठितश्च मया नियोगः। महाराजोऽपि तमारूढवान्। अतो नियोगान्तरमनुतिष्ठामि (निष्क्रान्तः)

विष्कम्भकः।

---

कारयति। तत्र प्रयोजकमवृत्त्या स्फुटयति—कुर्वन्नित्यादि। नैकविधाम् अशक्त्या वैवश्येन पदविन्यासेन क्वचिद् द्रुतां क्वचिद् विलम्बिता क्वचिदुत्क्रान्तमार्गां बहुविधां गतिं कुर्वन्। नर्तकोऽपि रसपात्रादिविशेषानुगुण्येन नैकविधां गतिं कारयति। तथा उद्भ्रान्ततारे दृशौ प्रकटयन् शक्तिदौस्स्थ्येन श्वासोच्छ्वासनैरन्तर्येण नयनतारकाभ्रमणम्। अन्योऽपि तत्तद्दृष्टिविशेषानुगुण्येन तारकाणामावर्तनं शिक्षयति। तथा चिन्ताग्लानिविषादविभ्रममुखान् भावान् समुद्भावयन् अन्तःपुरकार्यादिषु चिन्ता। अशक्त्या ग्लानिः। प्रारब्धस्यासामर्थ्येन विषादः। विभ्रमः व्याक्षेपकालादिविपर्ययप्रतीतिः। मुखशब्देन निर्वेदादयो विवक्षिताः। अन्योऽपि शृङ्गारादिरसानुगुण्येन तत्र तत्र त्रयस्त्रिंशद्व्यभिचारिणः प्रयोजयति। तथा ऊरू सन्नमयन् पदविन्यासाद्यशक्त्या वक्रीकुर्वन्। अन्योऽपि मण्डलादिस्थित्यपेक्षया ऊरू सन्नमयति। वक्षो मुहुर्विचलयन् कासश्वासनैरन्तर्येण। नर्तकोऽपि प्रयोगानुगुण्येन वक्षोविचलनं करोति। वलीकञ्चुक वल्यः सिरा एव कञ्चुको यस्य। एवं वार्द्धकपीडितत्वेन कथनम्॥ १॥ कृतं स्वाम्यादेशं प्रकाशयति—आदिष्टोऽहमिति। विनयत्रात! इत्यादेशप्रकारः। प्रावृषेण्याहरतिवाहनक्षमः प्रावृषेण्यानामहामतिवाहनयोग्यः वातादिरहितत्वात्। सज्जीक्रियताम् अवस्थानयोग्यः क्रियतां गङ्गालोकप्रासाद इति। अनुष्ठितश्च मया नियोगः। महाराजोऽपि तमारूढवान् इत्येवं राज्ञः प्रासादारोहणं कृत्वा निष्क्रान्तः॥

(ततः प्रविशति राजा विदूषकश्च)

राजा—अहो! निसर्गनिष्णातमतिभिरपि दुरवबोधाः सचिवानां मनोवृत्तयः। तथा ह्यार्यवसुमित्रस्य—

यत् पञ्चालपराक्रमात् परिभवो दैवच्छलाद् व्याहृतः
सम्मोहादपवाहितोऽस्मि यदहं यद्वा पुरं प्रापितः।
सज्जानां घनसम्पदामिह भुवि प्रायः पयो मेदुरा-
ण्यूधांसि द्रुतमेव दोग्धुमखिलं सोऽयं किल प्रक्रमः॥ २॥

अथ कञ्चुकिप्रतिपादितप्रकारेण प्रासादगतो नायकः निजसचिवस्य मतिवैभवेन विस्मितः सामान्येन सचिवचित्तानां गौरवं प्रतिपादयति अहो निसर्गेत्यादिना। निसर्गनिष्णातमतिभिरपि स्वतः सम्कार विनापि दुर्विज्ञेयज्ञानकुशलधीभिरपि, किं पुनः स्थूलधीभिः। सचिवाना मनोवृत्तय. सन्ध्यादिषु सामादिषु साध्यान्तरेषु च चेतःप्रसरणप्रकाराः। अतिदुरवबोधा[१], अनुष्ठानेनैव ज्ञातुं शक्याः। तथाहीति विशेषे सङ्क्रमय्य व्याप्तिकथनाय। आर्यवसुमित्रस्य, न केवलं वसुमित्रस्येति वक्तुं युक्तम्। आर्यवसुमित्रस्य सोऽयं प्रक्रमः इह भुवि सज्जानां घनसम्पदाम् ऊधांसि दोग्धुम् अखिलं पयः किलेत्यन्वयः। सज्जानां वर्षोद्यतानाम् अस्मदागमनं प्रतीक्ष्य स्थितानामिव। घनसम्पदामिति गोत्वारोपक्षेपतया सम्पत्पदेन स्त्रीत्वनिर्देशः इह भुवि अस्मद्राज्ये। प्रायः इदमेव साध्यं बाहुल्येन, नान्तरीयकतया साध्यान्तरमप्यस्तु। मेदुराणि पयोगर्भतया स्थूलानि। ऊधांसि उदरभागान् तान्येवोधांसि स्तनाधारान्। द्रुतमेव जनपदोपप्लवस्यासह्यतया। दोग्धुं स्रावयितुं क्षारयितुं च। ऊधसामुपयोगनिमित्तत्वमिति तत्र क्रियासम्बन्धः 'गां दोग्धि पय' इतिवत्। अखिलं निश्शेषम्। पय एव पय क्षीरम्। अवृष्टिपीडातिशयेन अखिलमित्युक्तम्। सोऽय प्रक्रम[२] प्रवृत्तिप्रकार[३]। किलेति पश्चात् स्ववचनादन्यमुखाच्च ज्ञात, पूर्वं लेशतोऽपि नाभिप्रायो विदितः। प्रक्रमप्रकारमाह — पञ्चालपराक्रमात् परिभवो व्याहृतः। असमानां वैरिणां पराक्रमकथनम् अमर्षोत्थापनाय। तत्रापि दैवच्छलाद् विश्वासाय स्वयमप्रकाशेन वाङ्मात्रप्रकाश-

१. सखे! इति मूलकोशेषु पाठ. २. 'वगाहः स' इति रा. पाठः. ३. 'च' इति ग. पाठः.
४. 'ऊ.' इति ग-घ. पाठः.

विदूषकः—(क) भो अप्पज्जो सो अमच्चो, जेण तुवं सअळभुवणेक्कणाहो मेहदोहणत्थं वच्छो सम्पादिओ।

राजा—अलं परिहासेन। पञ्चालकोपस्तम्भितप्रसरो वियोगहुतवहो विशृङ्खलमधुना विजृम्भितुं प्रक्रमते। प्रवृत्तश्चायं विरहिणामतिभयङ्करः कालः। पश्य—

(क) भो अप्रज्ञः सोऽमात्यः, येन त्वं सकलभुवनैकनाथो मेघदोहनार्थं वत्सः सम्पादितः।

नाद् इयमशरीरिणी वागित्यस्माकं बुद्धिमुद्भाव्येत्यर्थः। पश्चात् सम्मोहादपवाहितोऽस्मि यत् सम्मोहनिमग्नो झटित्युद्धृतः 'मम मतिबलमतिक्रम्य ते प्रवृत्ता अन्यैर्नृपातिभिः सहे'त्याद्युक्तिभिः। एवमवस्थानिवेदनमेव न, पूर्यतां तेषामभिलाप इत्यादिना थियासामुद्भाव्य पुरं प्रापितः। यद्वा सोऽयं तदानीमारम्भेयन्त कालमविच्छिन्न उत्साह एतदर्थं किल। अत सचिवमनोवृत्तीनां दुर्विज्ञेयत्वमेवेति ॥ २॥

तद्वचनं श्रुत्वा नर्मसचिव आह—अप्रज्ञः सोऽमात्यः आवयोः सिद्धान्तोऽतीव विरुद्धः। तस्य बुद्धिमत्त्वं भवता साधितम्। तेनैव मया मौढ्यं साध्यते। मेघदोहनार्थं तेनोपायैर्भवानानीत इत्युक्तम्। तत्र भवत्प्रयत्नस्याल्पत्वनिरूपणेनैवं स्फुरति—तेन मेघदोहनार्थं स्वयं दोग्धृत्वमवलम्ब्य सकलभुवननाथस्त्वं वत्सः सम्पादितः। वत्सस्य पयश्चलनमात्रमेव कृत्यं, क्षारणं दोग्धुः कर्म। एवमधिकारविशेषापरिज्ञानादयं मूढ इति मामकः पक्षः॥

निश्शेषं वनमल्लिकासुमनसां शेषैः समुच्छिद्यते
वृन्तेभ्यः पथिकोपरोधपरुषैः पौरस्त्यवातैरयम् ।
प्रांशूकृत्य पिबन्त्यमा सहचरैः कण्ठप्रणालीरिमा-
श्चातक्यो हिमशर्कराशकलिनीमारम्भधारावलिम् ॥ ३ ॥

तत् किमिदानीं मे शरणम् ।

(ततः प्रविशति मेनकारूपधारिणी नायिका)

**नायिका**—(सविमर्शं दीर्घं निःश्वस्य) (क) अहं हि सहीरूवेण अय्यउत्तं दक्खिअ अस्सासेमि त्ति सहीओ वञ्चिअ आअदह्मि ।

(क) *अहं हि सखीरूपेणार्यपुत्रं दृष्ट्वाश्वसिमीति सख्यौ वञ्चयित्वागतास्मि ।*

निश्शेषमित्यादि । वनमल्लिकासुमनसां ग्रीष्मोद्भवानाम् । शेषः कालपरिणत्या गतप्रायः । निश्शेषं साकल्येन वृन्तेभ्यः समुच्छिद्यते । पौरस्त्यवातैः प्रावृषेण्यैः । अयमित्यग्रे दर्शयित्वोक्तिः । तेन किं विरहिभयङ्करत्वं कालस्य । पथिकोपरोधकलुषैः विरहिणां पीडनेन क्रूरव्यापारैः । अत एव विजृम्भणोद्यतस्य वियोगहुतवहस्योद्दीपकत्वं भवेत् । इमाश्चातक्यः । कण्ठप्रणालीः प्रांशूकृत्य पिपासोदयेन कण्ठ(ना)लानि दीर्घीकृत्य । सहचरैः सह । आरम्भधारावलिं वर्षारम्भधारावलिं चञ्चूपुटमुत्तानीकृत्य पिबन्ति । हिमशर्कराशकलिनीमित्यारम्भधारावलिलक्षणम् । हिमशर्कराशकलानि वर्षोपलशकलानि तद्वतीम् अतिशैत्येन हृद्यां पिबन्ति । अत्र सहचरसहितानां चातकीनामिष्टभोगप्रवृत्तिदर्शनाद् अहो अस्माकम् एव न भाग्योदय इति सन्तापो भवेत् । अतश्च भयङ्करत्वम् ॥ ३ ॥ तत् किमिदानीं मे शरणं किं सन्तापशमनालम्बनमित्यर्थः ॥

अथ विरहमसहमानाया नायिकायाः प्रवृत्तिप्रकारः स्ववचनेनैव प्रतिपाद्यते । सन्तापेन चिन्तया च दीर्घनिःश्वासः । अहं सखीरूपेणार्यपुत्रं प्रेक्ष्याश्वसिमीति सख्यौ वञ्चयित्वागतास्मि । अहमिति अतिप्रयत्नेन प्रियतमसमा-

१. 'पं' इति क. पाठः. २ 'रिदम्' इति क पाठः ३. 'लीम्' इति क- ख. पाठः. ४. 'रुव---अ' इति क. पाठः, 'रुव—(सचिन्त निः' इति ख-घ. पाठः. ५. 'प वि श्व' इति ग-घ. पाठः. ६. 'अ अत्ताण अस्सा' इति घ. पाठः.

एत्तिएणं वि तादसासणं[2] ण ळङ्घिअं होइ । ता अय्यउ-त्तदंसणूसवं अणुभाविस्सं । (परिक्रम्याधो विलोकयन्ती सानन्दम्)[3] एसो सो वअस्सेण सह पासादग्गभूमीअं णिसण्णो । ता ओदरिस्सं दाव । (अवतरणं नाट्यति)

विदूषकः[4]—(विलोक्य) (क) एसा तत्तहोदी तवदी सम्पत्ता ।

---

इयतापि तातशासनं न लङ्घितं भवति । तदार्यपुत्रदर्शनोत्सवमनुभविष्यामि । एष स वयस्येन सह प्रासादाग्रभूम्यां निषण्णः । तदवतरिष्यामि तावत् ।

(क) एषा तत्रभवती तपती सम्प्राप्ता ।

---

गमे सिद्धेऽपि मन्दभाग्यतया दूरीभूता 'स्वशरीरं मन्नियोगं विना भर्तुर्न दर्शयितव्यमि'ति तातेन निरुद्धा च (असहमाना?) विश्लेषमसहमाना तूष्णीं स्थातुमशक्ता सखीरूपमवलम्ब्यार्यपुत्रं दृष्ट्वाश्वसिमि । दृष्ट्वेत्यनेन स्पर्शाद्यभावेन खेदो व्यज्यते । तद्रूपामृतपानेन नयनप्रीतिमपि तावत् करोमीति मत्वा सख्यौ वञ्चयित्वा ताभ्यामदृष्टेत्यर्थः । वञ्चयित्वेत्यनेन तद्वञ्चनेऽनौचित्यमपि स्फुरति । आगतास्मि प्रियसन्निधिमिति शेषः । अत्रौत्सुक्यं व्यज्यते । अत्र तातशासनं लङ्घितं किं न भवेदिति शङ्कां निरस्यति—इयतापीति । आत्मा न दर्शयितव्य इत्युक्ते किमनेनावगुण्ठनवासस्तुल्येन वेषान्तरपरिग्रहेण । अनेन प्रायः आत्मदर्शनमेव क्रियत इति शङ्कां परास्यति—इयता एतावन्मात्रेण वेषान्तरपरिग्रहेण अतीव नसत्यरूपेण यद्यपि यथाकथञ्चित् तातशासनं न लङ्घितं भवति स्वरूपाप्रकाशनादित्यभिप्रायः । एवं साध्यं निश्चित्याम्बरादवलोकयन्ती सानन्दमाह—एष वयस्येन सह न त्वमात्यादिभिः । प्रासादाग्रभूम्यां ननु राजसभायाम् । निषण्णः न तु कार्यान्तरजागरूकः । अनेनावतरणदर्शनयोः सौकर्येण कृतार्थता व्यज्यते । अत एवोक्तं तदवतरिष्यामि तावदिति ॥

अथ नर्मसचिवः सहसा तां दृष्ट्वा वस्तुवृत्तमजानन्नपि प्रौढवादेनोभयोर्भावान्तरमुन्नयति—एषा तत्रभवती तपती सम्प्राप्ता इति ॥

---

१. 'ण दा' इति घ. पाठः. २. 'णं दिण' इति ग. पाठः. ३. 'पुणीभ' इति क. पाठः. ४. 'क.—(प्रदर्श्य) ए' इति ख-ग. पाठः.

राजा—क्वासौ क्वासौ।

नायिका—(सविषादम्) (क) हं जाणिदह्मि।

विदूषकः—(ख) दक्ख एसा मेणआरूवेण सम्पत्ता।

नायिका—(सविषादम्) (ग) अवस्सं जाणिदह्मि। सव्वहा अव-रद्धह्मि तादस्स।

राजा—(विलोक्य) अये सखी मेनका सम्प्राप्ता। सखे! कथमेनां मे प्रियां व्यपदिशसि।

विदूषकः—(घ) एसा तिस्से सरीरहूदत्ति एव्वं मए भणिदं।

(क) हं ज्ञातास्मि।
(ख) पश्यैषा मेनकारूपेण सम्प्राप्ता।
(ग) अवश्यं ज्ञातास्मि। सर्वथा अपराद्धास्मि तातस्य।
(घ) एषा तस्याः शरीरभूतेत्येवं मया भणितम्।

क्वासौ क्वासौ इति नायकस्यौत्सुक्यम्॥

ज्ञातास्मीति तस्या विषादः॥

पश्यैषा मेनकारूपेण सम्प्राप्तेति तस्योपचारकथनम्॥

तत्र वेषान्तरपरिग्रहोऽप्यनेन ज्ञात इति विषादत आह—अवश्यं ज्ञातास्मीति। रूपपरिवर्तनस्यापि ज्ञानत्वादवश्यमित्युक्तम्। तेन दोषमाह—सर्वथापराद्धास्मि तातस्य, तातं प्रतीत्यर्थः॥

अथ नायकस्तामवलोक्य मेनकाबुद्ध्याह—अये मेनका सम्प्राप्ता। सखे! कथमेनां मम प्रियां व्यपदिशसीति निश्चय. नेय सेति, व्यपदेशस्य किन्निमित्तमिति विचारः॥

एषा तस्याः शरीरभूतातिसश्लेषणेन स्वशरीरवदस्यां तस्या ऐक्यभावनेति मयोपचरितम्॥

१. 'का–ह' इति क-ख-घ. पाठः. २. 'सविमर्शम्' इति क-ग. पाठ. ३. 'दं' इति क-ख. पाठः. ४. 'भन्दिद' इति ख-ग. पाठः.

**नायिका**— (क) दिट्ठिआ दाणिं समस्ससिदह्मि। (उपसृत्य) जेदु महाराओ।

**राजा**—स्वागतं सख्यै। (गाढमाश्लिष्य स्पर्शं रूपयन्नात्मगतम्)

आश्लेषेष्विव देव्याः कण्टकितेयं मुधा तनुः कस्मात्।
अस्यां तस्याः स्पर्शः शङ्के संश्लेषसङ्क्रान्तः॥ ४॥

(प्रकाशम्) सखि मेनके! अपि कुशलमस्मदसूनाम्।

---

(क) दिष्ट्येदानीं समाश्वसितास्मि। जयतु महाराजः।

---

एवमुक्ते तस्या विषादोपशमः। अत एवाह—दिष्ट्येदानीं समाश्व(स्ता? सिता)स्मीति। जयतु महाराज इत्युक्तिः वेषानुगुण्येन॥

स्वागतं सख्यै इति सखीबुद्ध्या वचनं गाढमालिङ्गनं च। तत्र "मनो हि जात्यन्तरसङ्गतिज्ञम्" इत्युक्तवद् अन्तःकरणस्य प्रियतमास्पर्शानुभवे स्वतः सिद्धे स्पर्शप्रकारं निरूप्य स्वयमेव विकल्पयति—आश्लेषेष्वित्यादि। देव्या आश्लेषेषु यदायदाश्लेषः तदातदानेकवारं परिपूर्णतादृष्टा। एतदालिङ्गनेऽपि इयं तद्वत् कण्टकिता। देव्याश्लेषनिमित्तमन्याश्लेषे न घटते तादृशस्य स्पर्शान्तरस्याभावात्। तर्हि देवीसमाश्लेष इति वक्तुमपि न शक्यम् अस्यास्तत्सखीत्वात्। अतः मुधा निमित्तं विना। कारणं विना कार्यस्यानुदयात् तत्रापि शङ्कते—कस्मादिति। कस्मादेवं जातं कारणस्यानुदयः कार्यस्य परिस्फुटत्वं चेति। अत्राहमेवं वितर्कयामि। देवीस्पर्शं विना तनोः कण्टकितत्वं न घटते। अस्याः स्पर्शे कण्टकिता च। अतस्तस्याः स्पर्शोऽस्यां सश्लेषेण शयनासनादिषु देहसम्मेलनेन सङ्क्रान्तः। एतदङ्गलग्नस्तत्स्पर्श आश्लेषे तनुं कण्टकयति। यथा समुद्गकादिषु मृगमदसंश्लेषेण वासितत्वात् तदभावेऽप्यामोदसम्बन्धः तदाघ्रातुर्मृगमदानुभूतिश्च, एवमिहापि घटते॥ ४॥ एवं निरूप्य तां प्रियावृत्तान्तं पृच्छति—अपि कुशलमस्मदसूनामिति। अस्मदसूनामित्युक्ते एतद्वियोगे असुविरहित इवाहं यथाकथञ्चिज्जीवामि जीवकार्यहीनत्वादिति प्रकाशितम्॥

---

१. 'मालिङ्गन' इति क-घ- पाठः. २. 'निरूप्यात्म' इति क. पाठः, 'निरूप्य स्वगतम्' इति घ. पाठः.

**नायिका**—(क) महाराअ! सम्पदं कुसळं।

**राजा**— कथं साम्प्रतमिति।

**नायिका**–(ख) सुणादु महाराओ। तदा तुए सह तवणवणे पसुत्ता सा सावित्तीए सआसे पवुद्धा। तदो तुमं अदक्खिअ मुच्छिदं तं समस्सासिअ[1] सावित्तीए भणिअं 'वच्छे! मा सन्तप्प। तुइ[2] गाढाणुराअस्स भत्तुणो असण्णिहाणादो अणाविट्ठीपीडिओ आसी जणपदो त्ति तादणिउत्तेण सारहिणा आणीदासि। तेण च्चिअ दे भत्ता विरहुम्मादपर-

(क) महाराज! साम्प्रत कुशलम्।

(ख) शृणोतु महाराजः। तदा त्वया सह तपनवने प्रसुप्ता सा सावित्र्याः सकाशे प्रबुद्धा। ततस्त्वामदृष्ट्वा मूर्छितां ता समाश्वास्य सावित्र्या भणित 'वत्से! मा सन्तप्यस्व। त्वयि गाढानुरागस्य भर्तुरसन्निधानादनावृष्टिपीडितो आसीज्जनपद इति तातनियुक्तेन सारथिनानीतासि। तेनैव ते भर्ता विरहोन्माद-

---

तच्छ्रुत्वोत्तरमाह—**साम्प्रतं** कुशलमिति। अत्र प्रेमविवशाया नायिकायाः कान्तसम्मुखीनाया वेपविवर्त्तनस्यैव शक्तिः। दृष्टिपातादिषु प्रेमानुबन्ध एव। अतः वचनेऽपि ताटस्थ्यं यथाकथञ्चिद् भवति॥

अथ साम्प्रतं कुशलमित्युत्तरकथने वियोगखिन्नाया मम त्वद्दर्शनसमाश्लेषाभ्याम् इदानीं कुशलमिति वस्तुवृत्तेन कथितम्। कथं साम्प्रतमिति प्रश्नेन वृत्तान्तकथनपुरस्सरमन्यथा योजयति—**शृणोतु महाराज** इति। (य? त)देत्यादि। तपनवने प्रसुप्ता सावित्रीसकाशे प्रबुद्धा इत्यनेन वियोगस्याबुद्धिपूर्वत्वं प्रकाशितम्। अत एव मूर्छितां तां समाश्वास्य सावित्र्या भणितम्। त्वयीत्यादि तस्या उक्तिः। गाढानुरागत्वमसन्निधाने हेतुः तेनानावृष्टिपीडितो जनपद इति। (आनीतासीति)। त्वद्वियोगं सम्पाद्य तं नेतुमित्यर्थः। अत एव तेनैव विरहोन्मा-

---

१. 'मुच्छन्तिं स' इति ख. पाठः. २. 'वि' इति ग. पाठः. ३. 'त' इति क-ग पाठः.

वसो णअरं पाविदो । ण किळ तादणिओअं विणा अत्ता दंसइदव्व'त्ति ।

राजा—सखे! सोऽपि सवितृसारथिः संवृत्तः । ततस्ततः ।

नायिका—(क) तदो तिस्से वुत्तन्तं विओअजणिअं च दुक्खं णिवेदिदुं आअच्छन्तीए मए विट्ठी उवळक्खिआ । तदो देवो वि अणुजाणादि त्ति सम्पदं कुसळं ति मए भणिअं।

विदूषकः—(ख) भो! जाणिदा देवीमोसआ कुम्भीळा।

राजा—(निःश्वस्य) इदानीं नष्टः सन्देहः । सखि! मेनके! नाहं क्षणमपि तां विना स्थातुमुत्सहे । तदभ्युपगमय्य देवमानीयतां तव सखी ।

---

परवशो नगर प्रापितः । न किळ तातनियोगं विनात्मा दर्शयितव्य' इति ।

(क) ततस्तस्या वृत्तान्तं वियोगजनित च दुःख निवेदयितुमागच्छन्त्या मया वृष्टिरुपलक्षिता । ततो देवोऽप्यनुजानातीति साम्प्रत कुशलमिति मया भणितम्।

(ख) भो ज्ञाता देवीमोषकाः कुम्भीराः ।

---

दपरवशस्ते भर्त्रा नगरं प्रापितश्च । अतःपरं तातनियोगं विना आत्मा भर्तुर्न दर्शयितव्यः इयत्पर्यन्त सावित्रीवचनम् ॥

एवं कथामध्ये अशरीरवचनवद् अन्यथा निरूपितमन्यथा समर्थयति—सोऽपि सवितृसारथिः संवृत्तः । इन्द्रसारथिरिति तेनोक्तम् । अपीति अस्मत्सिद्धेषु सर्वेषु विपर्ययो दृश्यत इति ॥

तत इत्यादि । देवोऽप्यनुजानातीति । अवृष्टिपीडागमनार्थं पूर्वं वियोजनम् । तस्य सिद्धत्वाद् भर्तृसन्निधिगमनं प्रति देवोऽप्यनुजानातीति साम्प्रतं कुशलमित्युक्तम् ॥

कुम्भीरस्तस्करः ॥

इदानीं नष्टः सन्देह इति । पूर्वं वियोगे कथमेवं जातमिति विकल्पः, इदानीं वस्तुवृत्तश्रवणान्नष्टः सन्देह इत्यर्थः । सखि! मेनके इत्यादि । अभ्युपगमय्य अङ्गीकार्य । देवस्यानुमतिं लब्ध्वेत्यर्थः । तव सखीति । त्वदधीनमेव तस्याः समानयनमिति भावः ॥

---

१. 'तः' इति ख. पाठः. २.'आ-ई' इति ख. पाठः.

**नायिका** — (राजानं सस्पृहमवलोकयन्ती) (क) महाराअ ! तुह दंसणसुहं कञ्चिकाळं अणुभविअ गमिस्सं ।

**राजा** — (सवितर्कमात्मगतम्)

दूत्योचितं प्रियजने प्रतिवेदनीयं
कामं सखीप्रणयपेशलमस्तु वाक्यम् ।
विष्यन्दमानरतिरागरसप्रवाह-
मालोकितं पुनरलक्षितपूर्वमस्याः ॥ ५ ॥

(प्रकाशम्) अलं स्वैरासिकासुखेन । मम पर्युत्सुकं मनस्त्वरयति भवतीं गमनाय ।

**नायिका** — (जलधरध्वनिं श्रुत्वा प्रस्तुतं विस्मरन्ती) (ख) हं भीदह्मि । अय्यउत्त ! गाढं मं आळिङ्गेहि ।

---

(क) महाराज ! तव दर्शनसुखं कञ्चित् कालमनुभूय गमिष्यामि ।
(ख) हं भीतास्मि । आर्यपुत्र ! गाढं मामालिङ्ग ।

---

एवमुक्ते प्रेम्णा प्रकृतं विस्मृत्य सानुराग(पू ?)दृष्टिपातपूर्वं महाराज ! तव दर्शनं कञ्चित् कालमनुभूय गमिष्यामीति तद्वचनमाकर्ण्य सवितर्कमाह — **दूत्योचितमित्यादि** । प्रियतमाया दूतीत्वेनेयमागता । अस्या वचसि दृष्टिपाते च अन्यथात्वं दृश्यते । तत्र दूत्योचितं दूतभावोचितम् । दूतेन दूत्या वा कथनीयमित्यर्थः । प्रियजने प्रतिवेदनीयं समर्पणीयं तत्प्रियजनस्य सन्देशरूप वाक्यम् अस्यां वर्त्तमानम् । सखीप्रणयेन सख्यामस्याः प्रणयेन स्नेहेन तद्वन्मयोक्तेऽस्य विश्वासो भवेदिति पेशल सुन्दरं तद्वचनवदनुरागामिलितमस्तु कामम् । एतदनिच्छयाप्यनुमोदे । अत्र नातीवानुपपत्तिः । विष्यन्दमानरतिरागरसप्रवाहं रतौ भोगे रागः अभिलाषः स एव रसप्रवाहः, विष्यन्दमानः अविच्छिन्नप्रसरः

---

१. 'णूसवसु' इति घ. पाठः. २. 'दी' इति क-ख. पाठः. ३. 'नि' इति ख-घ. पाठः. ४. 'न । प' इति ख. पाठः. ५. 'क मे म' इति ख. पाठः. ६. 'न्ती) भी' इति क-घ. पाठः.

**राजा** — (सक्रोधम्) आः पापे! किमनार्यमाचरसि[1]। नायमभिमत-दयितागुणनिगलितहृदयो[2] जनस्तथा[3] मन्तव्यः, यथा त्वं तर्कयसि ।

**नायिका** — (सरोषम्) (क) जुत्तं[4] एदं[5]। तुमं अणुरूवाए देवीए सङ्गच्छिअ सेरं विहरेहि । अहं[6] पुण अत्थाणबद्धसिणेहा अत्तणो अणुरूवं करिस्सं । (निष्क्रान्ता)

**विदूषकः** — (ख) भो वअस्स ! किं एसा रक्खसी । सा खु मेणआ सिविणे वि ण एव्वं कुणइ ।

---

(क) युक्तमेतत् । त्वमनुरूपया देव्या सङ्गम्य स्वैरं विहरस्व । अहं पुनरस्थानबद्धस्नेहा आत्मनोऽनुरूपं करिष्यामि ।

(ख) भो वयस्य ! किमेषा राक्षसी । सा खलु मेनका स्वप्नेऽपि नैव करोति ।

---

रतिरागरसप्रवाहः यस्मिन् । प्रवाहस्य सेतुशिलादिना प्रतिहतिर्दृश्यत इति प्रवाहस्याविच्छेदाय विष्यन्दमानेत्युक्तम् । एवम्भूतमस्या आलोकितम् अलक्षितपूर्वम्, इदानीमेवैवं दृष्टम् । दूतीनां तद्वचनं घटताम् । सानुरागदृष्टिपातादिकं प्रियाया एव युज्यते न दूत्या इत्यनुपपत्तिः । एवं निरूप्य तामाह--अलं स्वैरासिकासुखेनेति । स्वैरासिकासुखं तव गमनविलम्बहेतुः । मनस्त्वां त्वरयति ॥

एवमुक्ते सहसा जलदध्वनिश्रवणेन आर्यपुत्र ! गाढं मामालिङ्गेति प्रकृतं विस्मृत्य तस्या वचनं श्रुत्वा आः पापे ! का त्वमेवमनार्यमाचरसि । नाहमभिमत-दयितागुणनिगलितहृदयस्तथा मन्तव्यः, यथा त्वं तर्कयसि ॥ इत्युक्ते (मालिनि ! ममालिङ्गन) प्रत्ययस्य वचनमिति निरूप्य कोपेनाह — युक्तमेतत् । त्वमनुरूपया देव्या सह विहरस्व । अहमस्थानबद्धस्नेहा अस्थाने अन्यथासक्तत्वेनानुचिते विषये बद्धस्नेहा । तत्सदृशमनुष्ठास्यामीति प्राणत्यागं हृदि निधाय निष्क्रान्ता ॥

भो वयस्य ! किमेषा राक्षसी । सा खलु मेनका स्वप्नेऽप्येवं न करोति ॥

---

१. 'सि । अनि' इति क. पाठः. २. 'योऽयं ज' इति क. पाठः. ३. 'था नामन' इति क. पाठः. ४. 'त्तं तव ए' इति क-ग. पाठः. ५. 'दं । अ' इति क. पाठः. ६. 'हं पि अ' इति क-ख-ग. पाठः.

राजा---ईदृश एव स्त्रीस्वभावः । पश्य ---

नैवाभिजात्यं न गुरून् न बन्धून्
नातिप्ररूढं गणयन्ति सख्यम् ।
शक्यं च रोद्धुं ध्रुवमङ्गनाना-
मिच्छानुसारीणि न मानसानि ॥ ६ ॥

सा तु तपस्विनी स्वच्छहृदया पुंश्चलीमेनामज्ञानात् प्रहितवती । विनोदनत्वेनाभिमता सेयमीदृशी संवृत्ता । तदानीयतां कर्णपूरः ।

विदूषकः---(क) एव्वं होदु । (निष्क्रान्तः)

(क) एवं भवतु ।

इति तस्यानुपपत्तिं परिहरति— ईदृश एवेत्यादि । स्त्रीस्वभावः सर्वत्रैवंरूप एव । पश्य विमृश । अहं बोधयामि । नैवेत्यादि । स्त्रीणां मानसानि इच्छानुसारीणि इच्छापरतन्त्राणि । यत्रेच्छा तत्रैव प्रवर्तन्ते । तत्राभिजन्मविरुद्धेच्छा चेत् कथं तदनुसारित्वम् अत्राह--- नैवाभिजात्यम् । आभिजात्यं नैव गणयन्ति न निरूपयन्ति । निरूप्य परित्यागोऽपि नेत्येवशब्दः । न गुरून् । गणयन्तीति सर्वत्र योज्यम् । न बन्धून् न सम्बन्धिनः । अतिप्ररूढं सख्यं च न गणयन्ति । एवं स्वतन्त्रप्रवृत्तिरस्तु, प्रयत्नेन निरोधे नेच्छानुसरीणीत्यत्राह --- रोद्धुं च न शक्यम् । इदं न कर्तव्यम् अत्र दोषा सन्तीति निरोद्धुं च न शक्यानि । शक्यमित्यव्ययं "शक्यमञ्जलिभिः पातुं वाता" इतिवत् । अन्यथा गणयन्तीत्यत्र अङ्गनानामित्यस्य विपरिणामो वा ॥ ६ ॥ विनोदनत्वेनाभिमता (नि ?)निजवृत्तान्तकथनेनात्मव्यसनापनयनसहकारिणीत्वेनाभिमता इयमीदृशी संवृत्ता । एतत् तिष्ठतु, कर्णपूर आनीयताम् । सन्तापविनोदनायेति शेषः ॥

१. 'वः नै' इति ख. पाठः. २. 'ती । से' इति ख. पाठ.. ३. 'त्ता । विनोदवत्त्वेनाभिमत त' इति ख. पाठः.

(ततः प्रविशति रम्भारूपधारिणी राक्षसी)

**राक्षसी** ---- (क) पुव्वं भिउणो कम्मप्पभावेण हिमगिळिकाणणे दुक्खळा मे माआ एदश्श ळाओपशदश्श वशे आशी। ता दाणिं एव्व एदश्श कुळक्खअं कळिश्शं । (उपसृत्य राज्ञः पादयोश्छिन्नपातं पतित्वा रोदिति)

**राजा** ----(ससम्भ्रममुत्थाय) सखि! किमेवं मामाकुलयसि । आवेद्यतां विषादहेतुः।

**राक्षसी** —— (सबाष्पगद्गदम्) (ख) पिअसही मे तवदी तादणिरोहदुक्खरसङ्गमा तुह विरहाणळं असहन्ती अत्ताणं, अदो वरं ण पारेमि भणिदुं । अहं पि अत्ताणं वावादइस्सं । (निष्क्रान्ता)

**राजा**---- हा प्रिये! (इति मूर्छितः पतति । चिरात् प्रत्यागत्य) हा दिवसकरोत्सङ्गलालिते! जनमिममाज्ञाकरमपहाय क्व प्रयासि ।

(क) पूर्वं भृगोः कर्मप्रभावेन हिमगिरिकानने दुष्करा मे माया एतस्य राजापशदस्य वशे आसीत् । तदिदानीमेवैतस्य कुलक्षयं करिष्यामि ।

(ख) प्रियसखी मे तपती तातनिरोधदुष्करसङ्गमा तव विरहानलमसहमानात्मानम्, अतः पर न पारयामि भणितुम् । अहमप्यात्मानं व्यापादयिष्यामि ।

ततः मायाप्रयोगोद्यमेन रम्भारूपधारिणी राक्षसी विमृशति —— पूर्वं भृगोः कर्मप्रभावेन हिमगिरिकानने दुष्करा मे माया एतस्य राजापशदस्य वशे आसीत् । दुष्करापि भृगोः कर्मप्रभावेनेमं व्यामोहयितुं न समर्थासीदित्यर्थः । तदिदानीमेव भृगुकर्मराहित्येनाशक्तस्यास्य कुलक्षयं करिष्यामीति निरूप्य च्छिन्नवृक्षादिपतनवद् राजसमीपे पतित्वा रोदिति ॥

अथ राजा तस्या मायाप्रलापेन प्रेयसीविनाशमाकर्ण्य सहसा मोहमुपगतः, प्रबुद्धः प्रलपति — हा दिवसकरोत्सङ्गलालिते! जन्मनः प्रभृत्यादरस्यैव पात्रभूता

१. 'आ आशा ए' इति ग-घ. पाठः. २. 'अदस्सदस्स वशे । ता' इति ग-घ. पाठः. ३. 'पादे' इति क. पाठ.. ४. 'तः नि' इति क-घ. पाठः.

भगवन्! वैवस्वत!

कलत्रतां मे मिहिरात्मजात्व-
मचिन्तयित्वा सहजन्मतां ते ।
आमृष्टमायुर्भवता मृगाक्ष्या
मन्ये ततो मानसमायसं ते[1] ॥ ७ ॥

कथमहमसुलोलुप इव केवलमश्रूणि मुञ्चामि । तदधुना प्रायोपवेशनाय प्रक्रमिष्ये (प्रासादादवतरणं नाटयित्वा परिक्रामन्) अमुना शुचिमणिबद्धसोपानेन तीर्थेनावतीर्य जाह्नवीमाप्लुततनुरारभे प्रस्तुतम् । (स्नानं नाटयति)

आज्ञाकरमिमं जनमपहाय क्व प्रयासि । आज्ञाकरमित्यनेन स्वरसाध्येषु कुत्रापि मम न प्रवृत्तिकुण्ठनं, तथापि परित्यज्य यासीत्यनुचितम् । एवं प्रलप्य यमं प्रति प्रलपति — भगवन्! वैवस्वत! इति स्वोत्पत्तिनिरूपणेऽत्यन्तमनुचितम् कृतम् । तत् प्रतिपादयति — कलत्रतामित्यादिना । मे धर्मकृशरणस्य भार्यात्वम् । मिहिरात्मजात्व पितृगौरवम् । ते सहजन्मतां सौभ्रात्रं चाचिन्तयित्वा । तेषामेकैकस्य निरूपणे अनुचितं, किं पुन. सर्वेषाम् । मृगाक्ष्याः लोकोत्तररमणीयरूपायाः । आयुर्भवता आमृष्टम् आयुराश्रया प्राणा अपहृताः । ततस्ते मानसमायसं मन्ये, जडत्वेन काठिन्येन चायोमयत्वम् । उक्तप्रकारविमर्शराहित्येन जडत्वं तरुणीं प्रति करुणार्द्रताभावेन काठिन्यं च कथ्यते ॥ ७ ॥ कथमहमसुलोलुप इवेति । असुलोलुपः जीवनापेक्षी । तेषामेवाश्रुमोचनेन दुःखापनयनप्रयासः । मुमूर्षुरहं तदुपायं पर्यालोचयामि । तीर्थेन अवतरणमार्गेण । तद्विशेषणं शुचिमणिबद्धसोपानेन स्फटिकमणिभिर्बद्धारोहणपटलेन। अनेनावतरणसौकर्यं प्रतिपादितम् ॥

अथ राक्षसीमायावञ्चिताया नायिकाया देहत्यागप्रकारः — गङ्गामन्लक्ष्य-

1. 'ते । (पतति । (प्रत्यागतः) क' इति क ख पाठः । 2 'चानि । परिक्रम्य)' इति क ख पाठः । 'यम्' इति ख पाठः । 3 'पानतो' इति ख पाठः । 4 'तथारम्भे' इति ख ग. पाठः ।

(ततः प्रविशति गङ्गाजलैरुह्यमाना नायिका)

नायिका---(क) सहि! मन्दाइणि! उवरदं अय्यउत्तं सोदूण इह विवज्जिदुकामाए कीस मम कण्ठादो भारो तुए अवणीदो। ता तुरिअं पाणेहि विहाडिअ उवरदेण अय्यउत्तेण मं मेळावेहि।

राजा---(शब्दानुसारेण विलोकयन्)

कालुष्यभाजं कमलाभिरामां
परिस्फुरन्मीनविलोलनेत्राम्।
कां नु स्त्रियं जह्नुसुता वहन्ती
वहत्यसावात्मसमानरूपाम्॥ ८॥

(क) सखि मन्दाकिनि! उपरतमार्यपुत्रं श्रुत्वेह विपत्तुकामायाः कस्मान्मम कण्ठाद् भारस्त्वयापनीतः। तत् त्वरितं प्राणैर्विघटय्योपरतेनार्यपुत्रेण मां मेलय।

मानेति। अवमज्जनाभावाय जलैरुपरि धार्यमाणा॥

अत एवाधिक्षेपपूर्वं मन्दाकिनीं प्रार्थयते—सखि! मन्दाकिनि! उपरतमार्यपुत्रं श्रुत्वेह विपत्तुकामायाः कस्मान्मम कण्ठात् त्वया भारोऽपनीतः। उपरत श्रुत्वेत्यनेन विपत्तेर्योग्यता। अत एव भारापनयनेन तन्निवारणं न युक्तम्। झटित्ययमज्जनाय कण्ठे शिलादिभारो बद्धः। "हार" इति पाठेऽपि हारस्य गौरवेणावमज्जनार्थमेव बन्धनम्। तदपनयने साध्यविरोधात् खेदः। अतः प्रार्थयते—तत् त्वरितं प्राणैर्विघटय्योपरतेनार्यपुत्रेण मां मेलय संयोजयेति॥

एतच्छब्दानुसारेण विलोकयन्नाह—कालुष्यभाजमित्यादि। वहन्ती स्रवन्ती दहेरर्थान्तरवृत्त्या अकर्मकत्वम्। इयं जह्नुसुता कां नु स्त्रियं वहति धारयति। स्त्रियमिति ज्ञातुं शक्यम्। कामित्येव वितर्कः। आत्मसमानरूपाम्। एतदवस्थाया गङ्गासाम्यं कल्प्यते। कालुष्यभाजं व्याकुलतायुक्तां

१ 'अअ' इति ग. पाठः।

अलं वितर्केण । एषा मुञ्चति पुरा प्राणान् । अवलम्बे तावदेनाम् (सत्वरमवलम्बते)

**नायिका**—(सरोषम्) (क) को मं हत्थप्फरिसेण दूसेदि ।

**राजा**—(निरूप्य) कथमियं[1] देवी संवृत्ता । भगवति! जाह्नवि! सोऽयमतिप्रसादो, यदहमेवं प्रस्थितानपि[2] प्रत्यर्पयन्त्या[3] प्राणान् प्राणितोऽस्मि । प्रिये! मा शङ्केथाः । सोऽहमेव पातकिनामग्रेसरः संवरणः, यद्वियोगान्मरणं व्यवसितवती ।

**नायिका**—(ख) [4]हं अय्यउत्तो । जेदु अय्यउत्तो । (सप्रमोदं गाढं परिष्वज्य) अय्यउत्त! किं सिविणो आदु परमत्थो ।

**राजा**—अहमप्यत्र सन्दिहे । तदुत्तीर्य तीरं विचारयावः ।

**नायिका**—(कम्पं रूपयन्ती) (ग) अय्यउत्त! वेवन्ति मे गत्ताणि[5] । ता दिढं मं ओळम्बिअ गच्छ ।

(क) को मां हस्तस्पर्शेन दूषयति ।
(ख) ह आर्यपुत्रः । जयत्वार्यपुत्रः । आर्यपुत्र! किं स्वप्न आहोस्वित् परमार्थः ।
(ग) आर्यपुत्र! वेपन्ते मे गात्राणि । तद् दृढं मामवलम्ब्य गच्छ ।

गङ्गापयःकालुष्यं तटावपतनादिना शाबल्यम् । कमलाभिरामाम् । परिस्फु-रन्मीनविलोलनेत्रां परिस्फुरन्मीनवद् विलोलनेत्राम्, अन्यत्र परिस्फुरन्मीन-रूपविलोलनेत्राम् । अत्रात्मसमानरूपतया वात्सल्येन वहतीत्युत्प्रेक्षा व्य-ज्यते ॥ ८ ॥ एषा मुञ्चति पुरा प्राणानिति इदानीमेव मोक्ष्यति । ततः प्रागवलम्बे इत्यर्थः ॥

१. 'जा क' इति ख. पाठः. २. 'नपि प्राणान् प्र' इति क-घ पाठः. ३ 'न्त्या प्राणि' इति क. पाठः. 'न्त्या त्वया प्राणि' इति घ. पाठः. ४ 'अह्मो अ' इति ग. पाठः. ५. 'त्तो । (ख' इति ग. पाठः, 'त्तो । (गा' इति क-ख-घ. पाठः ६. 'च्च —अ' इति ग. पाठः ७. 'यित्वा)' इति घ. पाठः. ८. 'न्ति विअ मे' इति घ. पाठः. ९. 'त्थि । दि' इति क-ख-घ पाठः.

(राजा तथा कुर्वन् परिक्रामति)

(नेपथ्ये)

(क) सहि! मेणए! महाराअं सहिं च विणा ण खणं पि सरीरं उव्वहामि। तां मम कण्ठे पासं अप्पेहि।

नायिका—हं।

(पुनरपि नेपथ्ये)

(ख) सहि! रम्भे! तुज्झ वि मरणं मं सन्दावेइ। अहं एव्व पुव्वं विवज्जिस्सं।

नायिका—(ग) हद्धि सहीओ विवज्जन्ति। तुवरदु तुवरदु अय्यउत्तो।

राजा—(ससम्भ्रममुपसर्पन्) मा साहसं कुरुतमत्रभवत्यौ। एतावावां ध्रियावहे। (निष्क्रम्य ताभ्यां सह प्रविश्य) प्रिये! एते ते कुशलिन्यौ सख्यौ।

नायिका—(घ) सहीओ! दिढं मं परिस्सज्जह।

(सबाष्पमन्योन्यं परिष्वजन्ते)

राजा—तदिदानीं भवत्याः पद्धतिमुद्रिते ह्यमुष्मिन् मरतकशिलातले मुहूर्त्तं विश्रम्य गमिष्यामः।

---

(क) सखि! मेनके! महाराजं सखीं च विना न क्षणमपि शरीरमुद्वहामि। तन्मम कण्ठे पाशमर्पय।

(ख) सखि! रम्भे! तवापि मरणं मां सन्तापयति। अहमेव पूर्वं निपतिष्ये।

(ग) हा धिक् सख्यौ निपद्येते। त्वरतां त्वरतामार्यपुत्रः।

(घ) सख्यौ! दृढं मां परिष्वजेथाम्।

---

१ 'करोति' इति घ पाठः २ 'ताः क' इति क पाठः ३ 'मर्न' इति क ख पाठः ४ 'ण ण दसमि' इति क पाठः, 'ण म दसासि' इति ख पाठः ५ 'सत्वरमुपसृत्य') इति क घ पाठः ६ 'सृत्य') इति ख पाठः ७ 'एत्थ दि' इति क-ख घ पाठः. ८ 'तदा' इति क-ग-घ पाठः ९ 'श्राम्याम') इति क पाठः, 'श्रमिष्याम' इति ग पाठः

**नायिका** — (क) जं अय्यउत्तो आणवेदि ।

(सर्वे उपविशन्ति)

**राजा** — प्रिये ! कथमिहं भागीरथ्यां तव देहोत्सर्गप्रसङ्गः ।

**नायिका** — (ख) सुणादु अय्यउत्तो । अहं सहीए मेणआए रूवेण उवट्ठिदा राअन्धदाए विसुमरिअ पत्थुदं आलिङ्गिदुकामा ओहीरिदा अय्यउत्तेण ।

**मेनका** — (सलज्जं सरोषं च) (ग) णं तुए मं लहूंकरन्तीए सहिप्पणयाणुरूवं किदं ।

**राजा** — (सशिरःकम्पम्) एवमिदम् । ततस्ततः ।

**नायिका** — (घ) तदो किदमरणववसाआए पुणो वि सुमरिअसही-

(क) यदार्यपुत्र आज्ञापयति ।

(ख) शृणोत्वार्यपुत्रः । अह सख्या मेनकाया रूपेणोपस्थिता रागान्धतया विस्मृत्य प्रस्तुतमालिङ्गितुकामावधीरितार्यपुत्रेण ।

(ग) ननु त्वया मां लघूकुर्वत्या सखीप्रणयानुरूपं कृतम् ।

(घ) ततः कृतमरणव्यवसायाया. पुनरपि स्मृतसखीरूपाया गुरुकेणानुतापेन

शृणोत्वार्यपुत्रः । अहं सख्या मेनकायाः रूपं गृहीत्वागता रागान्धतया विस्मृत्य प्रस्तुतम् आलिङ्गितुकामावधीरितार्यपुत्रेण ।

तच्छ्रुत्वा मेनका आत्मवेषेण दुर्विनयः कृत इति सलज्जमाह — ननु त्वया मां लघूकुर्वत्या सखीप्रणयानुरूपं कृतम् । मद्रूपेणाकृत्याचरणे मम लघुत्व भवेत् । एतत् कृतं सखीस्नेहसदृशम् । नन्वित्यधिक्षेप. ॥

सशिरःकम्पमिति । पूर्वमात्मनो वितर्कस्योपपत्तिसिद्ध्या शिरःकम्पनम् । एवमिदमिति । घटत इति शेषः । ततस्तत इति शेषबुभुत्सया प्रश्नः ॥

ततः कृतमरणव्यवसायायाः पुनरपि स्मृतसखीरूपायाः गुरुकेणानुतापेन

१. 'किं तत्र भागीरथ्यां दे' इति घ. पाठः. २ 'व' इति घ. पाठः. ३. 'हुक्र' इति घ. पाठः. ४. 'पोसु' इति क ख घ. पाठः.

रूवाए गरुएण अणुदावेण पडिणिवत्तन्तीए मम इमाए रम्भाए वप्फपुण्णमुहीए अय्यउत्तस्स अच्चाहिदं आलंबिअ मरणाअ उवक्कन्तं । मए वि एव्वं किदं ।

**रम्भा**[1] — (सविषादम्) (क) का रम्भा णाम ।

**नायिका** — (ख) तुमं एव्व ।

**रम्भा**[3] — (ग) हं । एत्थ असण्णिहिदाए मए एव्वं किदं ।

**राजा** — कथमसन्निहितासि । यया त्वयैव मम देव्याममङ्गलवचनमभिहितम् ।

**रम्भा** — (सत्रासं उरसि हस्तं दत्त्वा) (घ) हद्धि किं एदं । (मेनकां वीक्षते)

**मेनका** — (ङ) महाराअ ! ण एदं जुज्जइ । दुवे वि अह्मे अज्ज पिअसहिं अण्णेसिउं आअच्छन्तीओ अन्तरा परुण्णाए आअच्छन्तीए जम्बूणदिआए मुहादो सहीए विवत्तिं महा-

प्रतिनिवर्तमानाया ममानया रम्भया बाष्पपूर्णमुख्यार्यपुत्रस्यात्यहितमालम्ब्य मरणायोपक्रान्तम् । मयाप्येवं कृतम् ।

(क) का रम्भा नाम ।

(ख) त्वमेव ।

(ग) हं । अत्रासन्निहितया मयैवं कृतम् ।

(घ) हा धिक् किमेतत् ।

(ङ) महाराज ! नैतद् युज्यते । द्वे अप्यावामद्य प्रियसखीमन्वेष्टुमागच्छन्त्यौ अन्तरा प्ररुदिताया आगच्छन्त्या जम्बूनद्या मुखात् सख्या विपत्तिं महारा-

प्रतिनिवर्तमानायाः मम । मयीति वा पाठः । तदा विशेषणान्यपि तथा योजनीयानि कृतमरणव्यवसायायामित्यादि । एतया रम्भया बाष्पपूर्णमुख्यार्यपुत्रस्यात्याहितमालम्ब्य मरणायोपक्रान्तम् । मयाप्येवं कृतमिति ।

१. 'रम्भा—हं' इति क. पाठः. २. 'रम्भा—कहं' इति क-ग-घ. पाठः. ३. 'रम्भा अम्' इति ग. पाठः. ४. 'दु)ह' इति क-ख-घ. पाठः.

राअस्स पाओपवेसणं च सुणिअ इह विवज्जन्तीओ महा-राएण परित्तादह्म ।

**नायिका**—(ससाध्वसम्) (क) अह्मो अय्यउत्तेण वि उवक्कन्तं एव्वं साहसं । ण उण एत्थ जम्बूणदिआ आअदा । किं एदं ।

**राजा**—(सविमर्शम्)

इयमपि मोहिनिकायास्तस्या मन्ये मृगाक्षि! मायेति ।
तपनवनेऽपि[1] ययाहं राक्षस्या मोहितः पूर्वम् ॥ ९ ॥

**नायिका**—(स्मृत्वा सशोकम्) (ख) एत्तिअं वेळं अत्ताणं पआसन्तीए मूढाए मए ळङ्घिदो गुरुणिओओ । ता विसज्जेदु म अ-य्यउत्तो ।

**राजा**—कोऽयमकाण्डऽशनिः । (निषण्णस्तिष्ठति)

**सख्यौ**—(ग) मा खु मा खु विसीदह । आणीदो अह्मेहि भअवदो आदेसो "अज्जप्पहुदि सहअरेण अविरहिआ होदु तवदि" त्ति । अण्णं च एदाणि अविप्पवासे[2]अणी[3]माणि

जस्य प्रायोपवेशान च श्रुत्वेह विपद्यमाने महाराजेन परित्राते स्व ।

(क) अहो आर्यपुत्रेणाप्युपक्रान्तमेव साहसम् । न पुनरत्र जम्बूनदिकागता । किमेतत् ।

(ख) इयतीं वेलामात्मान प्रकाशयन्त्या मूढया मया लङ्घितो गुरुनियोग । तद् विसर्जयतु मामार्यपुत्र ।

(ग) मा खलु मा खलु विषीदतम् । आनात आवाभ्या भगवत आदेश "अद्य प्रभृति सहचरेणाविरहिता भवतु तपता" इति । अन्यच्चैते अविप्रवासक-

इयमपीत्यादि । सर्वेषामस्माकं वचनरूपा प्रवृत्ति । अपिशब्दसङ्गृहीतमाह—यया पूर्वमह तपनवनेऽपि वञ्चित सङ्केतस्थलनादिना वञ्चयितुमारब्ध इत्यर्थ ॥ ९ ॥

१ 'इह' इति ग. पाठ २ 'सणी' इति क ख घ. पाठ ३ 'माणद्अ...' इति घ पाठ

वासोजुअळाणि पेसिदाणि। ता वसह एदाणि।

(उभौ तथा कुरुतः)

**नायिका**[1]--- (सहर्षम्) (क) जीवाविदह्मि[2] तादस्स पसादेण।

**राजा**[3]--(सानन्दम्) भवत्योर्वागमृतेन निर्वृतौ स्वः।

**मेनका**-- (स्मृत्वा सभयम्) (ख) सहि! रम्भे! जम्बूणदिआरूवेण रक्खसी गुरूणं पि किं पि करेदि। ता गदुअ णिवेदिअ परमत्थं आअच्छह्म।

(निष्क्रान्ते)

(नेपथ्ये[4])

(ग) भो ओसक्कह ओसक्कह एदं दावग्गिपडिज्जन्तं अञ्जणसेळसिहरं अम्बरादो णिवडइ।

**नायिका** ---(सभयम्) (घ) अय्यउत्त! परित्ताआहि परित्ताआहि।

(राजानमवलम्बते)

**राजा** — भीरु! मा भैषीः। ध्रुवमनेन पाराशर्यस्य भ्रमेण भवितव्यम्।

---

नामनी वासोयुगळे प्रेषिते। तद् वसाथामेते।

(क) जीवितास्मि तातस्य प्रसादेन।

(ख) सखि! रम्भे! जम्बूनदिकारूपेण राक्षसी गुरूणामपि किमपि करोति। तद् गत्वा निवेद्य परमार्थमागच्छावः।

(ग) भो अपसर्पत अपसर्पत। एतद् दावाग्निप्रदीप्यमानमञ्जनशैलशिखरमम्बरान्निपतति।

(घ) आर्यपुत्र! परित्रायस्व परित्रायस्व।

---

ओसक्कह ओसक्कह अपसर्पत अपसर्पत। एतद् दावाग्निप्रदीप्यमानमञ्जनशैलशिखरमम्बरान्निपततीति राक्षसीं दृष्ट्वा भ्रमेण निरूपकस्य वचनम्॥

---

१ 'द्धा-श्री' इति क.प. पाठः २ 'त्रि।ग' इति क.ग.प. पाठः ३. 'जा—ग' इति क.प. पाठः ४. 'थ्ये) आ' इति क.ख.प. पाठः

(प्रविश्य कर्णपूरहस्तः सम्भ्रान्तो विदूषकः)

**विदूषकः**—(पुनस्तदेव पठति)

(ततः प्रविशति शरपञ्जरनिरुद्धा पतन्ती राक्षसी)

**राक्षसी**[1]—(राजानमवलोक्य)[2] (क) ळक्खदु मं महाळाए ळक्खदु[3] ।

(राज्ञः पादयोः पतति)

**विदूषकः**—(ख) पढमं एदाए सव्वभक्खाए मुहादो रक्खदु मं वअस्सो, पच्चा णं । (राज्ञः पश्चादात्मानं व्यवदधाति)

**नायिका**—(ग) अय्यउत्त! वेवन्ति मे गत्ताणि । तुरिअं विसज्जीअदु एसा रक्खसी ।

**राजा**[4]—प्रिये! अलं[5] भयेन । नन्वहमस्मि । (राक्षसीमवलोक्य) कासि । कुतस्ते व्यसनम् ।

**राक्षसी**—(आत्मगतम्) (घ) शच्चप्पिए एशे । ता शच्चं एव्व भणिअ अत्ताणं मुञ्चावइश्शं । (प्रकाशम्) शुणादु महाळाए ।

(क) रक्षतु मां महाराजो रक्षतु ।
(ख) प्रथममेतस्याः सर्वभक्षाया मुखाद्रक्षतु मां वयस्य, पश्चादेनाम् ।
(ग) आर्यपुत्र! वेपन्ते मे गात्राणि । त्वरितं निसृज्यतामेषा राक्षसी ।
(घ) सत्यप्रिय एषः । तत् सत्यमेव भणित्वात्मानं मोचयिष्यामि । शृणोतु महाराजः ।

ततः शरपञ्जरनिरुद्धा राक्षसी राजानं शरणं प्रार्थयते—रक्षतु रक्षतु मां महाराजः ॥
पूर्वमेतस्याः सर्वभक्षायाः मुखान्मां रक्षतु, पश्चादेनाम् ॥
ततो राक्षसीं पृच्छ(ति—का)सि कुतस्ते व्यसनमिति ॥
ततः सा निरूपयति—सत्यप्रिय एषः । तत् सत्यमेव भणित्वात्मानं

१. 'सी-(सभयम्) ळ' इति ग पाठः, २. 'गा-ळ' इति ग पाठः. ३. 'दु । वि' इति क-ख-घ. पाठः. ३. 'प । ना' इति क-ख. पाठः. ४. 'जा—अ' इति क-ख-घ. पाठः, ५. 'अलमल' इति ख. पाठः.

अहं मोहिणिआ णाम ळक्खशी तुए वावादिअपुत्तशदा तहिं इशिप्पभावपाडिहदकम्मा अज्ज एत्थ आअच्छिअ ळम्भाए जम्बूणदिआए अ रूवेणं शआणिं शशहीअणं तुमं किदमळणवववशाअं कळिअ-शूळळोअं गच्छन्ती अन्तळा तुह तणअं वशिट्ठेण शह आअच्छन्तं खाइदुकामा णिळुद्धम्बळगमणशत्तीहिं शळेहिं तेण एव्वं काळिदम्हि। ता माळिशेदु एदं महाळाए।

**विदूषकः** —(ससम्भ्रमं जनान्तिकम्) (क) भो वअस्स! किं अज्ज एदाए किदं।

**राजा** —(कण) एवमिव।

---

अहं मोहिनिका नाम राक्षसी त्वया व्यापादितपुत्रशता तस्मिन् ऋषिप्रभावप्रतिहतकर्माद्यात्रागत्य रम्भाया जम्बूनदिकायाश्च रूपेण सजानिं ससखीजनं त्वां कृतमरणव्यवसायं कृत्वा सूर्यलोकं गच्छन्ती अन्तरा तव तनयं वसिष्ठेन सहागच्छन्तं खादितुकामा निरुद्धाम्बरगमनशक्तिभिः शरैस्तेनैव कारितास्मि। तन्मर्षयत्वेतन्महाराजः।

(क) भो वयस्य! किमद्यैतया कृतम्।

---

मोचयिष्यामि इति। पुनः प्रकाशमाह—शृणोतु महाराजः। अहं मोहिनिका नाम राक्षसी त्वया व्यापदितपुत्रशता तस्मिन् ऋषिप्रभावप्रतिहतकर्माद्यात्रागत्य रम्भाया जम्बूनदिकायाश्च रूपेण सजानिं ससखीजनं त्वां कृतमरणव्यवसायं कृत्वा सूर्यलोकं गच्छन्ती अन्तरा तव तनयं वसिष्ठेन सहागच्छन्तं खादितुकामा निरुद्धाम्बरगमनशक्तिभिः शरैः तेनैव कारितास्मि। तन्मर्षयत्वेतन्महाराजः॥

तच्छ्रुत्वा भो वयस्य! किमेतया कृतमिति तत्कृतमजानानः पृच्छति॥

एवमिवेति तदवस्थानिवेदनम्॥

---

१ 'दा [illegible]' इति क. ख. पाठः. २. 'तुमम' इति [illegible], 'तुमं' इति ग. पाठः. ३ 'भो भो' इति ग. पाठः. 'भो) वअस्स! कि एदाए' इति द. पाठः. ४. 'एदाए' इति घ पाठः. ■ 'आ-ण' इति ग. पाठः.

**विदूषकः**—(क) अहो अच्चाहिदं। (राक्षसीमवलोक्य) हदासे! एत्तिअं उवआरं करन्तीं तुमं अरक्खिअ कहं चिट्ठह्म।

**नायिका**—(आत्मगतम्) (ख) कहं अणवच्चाए मम तणओ। अहव बहुपरिग्गहो अंय्यउत्तो।

**राजा**—(सस्मितम्) सकलमेतदुपपन्नम्। कः पुनर्मम तनयप्रसङ्गः।

(ततः प्रविशति वसिष्ठश्चापहस्तः कुमारश्च)

**वसिष्ठः**—अहं तावत्—

क्षीराम्भोधौ प्रथमपुरुषं ब्रह्मलोके विरिञ्चं
कैलासाद्रौ विषमनयनं नाकपृष्ठे महेन्द्रम्।
कृत्वा साक्षादथ च मिहिरं तस्य दौहित्रमेनं
दातुं पित्रोः पुरमुपगतः पौरवीयामिदानीम्॥ १०॥

---

(क) अहो अत्याहितम्। हताशे! इयन्तमुपकारं कुर्वतीं त्वामरक्षित्वा कथं तिष्ठामः।

(ख) कथमनपत्याया मम तनयः। अथवा बहुपरिग्रह आर्यपुत्रः।

---

**हताशे!** इयन्तमुपकारं कुर्वतीं त्वामरक्षित्वा कथं तिष्ठाम इति विरुद्धलक्षणयाक्षेपः॥

तत्र नायिका विमृशति—कथमनपत्याया मम तनयोत्पत्तिः। अथवा बहुपरिग्रह आर्यपुत्रः, अतोऽन्यस्यामपि पुत्रोत्पत्तिर्घटते॥

**सकलमेतदुपपन्नमिति**। अनयोरुक्ते कुत्रापि नानुपपत्तिः। मम तनयप्रसङ्गः पुनः कः। मम तनयप्रस्तावः, तव तनयमागच्छन्तमित्युक्तं कथं घटत इति विमर्शः॥

अथ कुमारमानेतुं प्राप्तो वसिष्ठः स्वामवस्थां प्रस्तौति—**अहं तावदित्यादि**। अहं तावदिदानीं पौरवीयां पुरमुपगतः। इदानीं प्राप्तावसरतया तदेव प्रतिपादयति—क्षीराम्भोधौ प्रथमपुरुषं साक्षात्कृत्य प्रथमपुरुषं प्रथमपुरुषत्वेन श्रुतिप्रसिद्धं नारायणं प्रत्यक्षीकृत्य पुनर्ब्रह्मलोके स्थितं विरिञ्चम्। तदनन्तरं

---

१. '[illegible]' ख-घ पाठः.

**वसिष्ठः** —(अधो विलोक्य) वत्स! एतौ ते पितरौ तिष्ठतः। तदेह्यवतरावः। (अवतरणं नाटयतः)

**राजा** —(विलोक्य) अये गुरवः सम्प्राप्ताः। (उपसृत्य) भगवन्! अभिवादये।

**नायिका** —(क) भअवं वन्दामि।

**वसिष्ठः** —(उभाववलोक्य)

परिवृद्धरसानुकूलभावं गुणवत् प्रोज्ज्वलसन्धि सम्प्रहर्षम्।
ललितं ललिताङ्गमङ्गभाजां तपतीसंवरणं तनोतु दीर्घम् ॥ १३ ॥

(क) भगवन्! वन्दे।

अथ वसिष्ठोऽधो विलोक्य एतौ ते पितरौ तिष्ठतः। तदेह्यवतराव इत्युक्त्वावतीर्णः ॥

अथ राजा सम्भ्रमेण दृष्ट्वा अये गुरवः सम्प्राप्ता इत्युक्त्वोपसृत्य भगवन्नभिवादय इति समुदाचारं प्रयुक्तवान् ॥

नायिका च भगवन्! वन्दे इति (भगवन्! नमस्कृ)तवती ॥

अथ वसिष्ठस्तावभिमुखीकृत्याशिषं प्रयुङ्क्ते। परिवृद्धेत्यादि। तपतीसंवरणं तपती च संवरणश्चेति द्वन्द्वैकवद्भावेन निर्देशः। तेनैव नपुंसकत्वम्। तपतीसंवरणाख्यमिदं मिथुनम् अङ्गभाजां सर्वेषामेव देहिनां दीर्घं चिरकालमविच्छिन्नं सम्प्रहर्षं सम्यक् तु मानसिकं प्रहर्षं तनोतु। सम्यक्परिपालनेन प्रजाप्रीतिरेवास्य मुख्यकर्तव्यमिति संदेशो ध्वन्यते। किमस्य मिथुनस्यातिलोभनीयत्वमित्यत्राह — परिवृद्धरसानुकूलभावं परिवृद्धस्य विशेषरूपेण परितः प्रवृद्धस्य रसस्य परस्परानुरागस्यानुकूलो भावो मनोवृत्तिर्यस्य तादृशम्। तथा गुणवत् औदार्यादिप्रशस्तगुणयुक्तम्। तथा प्रोज्ज्वलसन्धि सन्धिः संश्लेषः स वंशेन वयसा गुणैश्च प्रोज्ज्वलः निर्दोषोऽपि यस्य तत्। तथा ललितं मधुरस्वभावम्। ललिताङ्गं सुन्दरसुकुमारकरचरणादिसमन्वितम्। [illegible] [illegible] [illegible]

वत्स! वन्दस्व पितरौ ।

कुमारः—(सप्रणामम्)

मूर्ध्ना नम्रेण ताम्राणि पादपङ्केरुहाणि वाम् ।
तापत्यो वन्दते पित्रोरेष सांवरणिः कुरुः ॥ १४ ॥

राजा[2]—(सस्पृहमवलोक्य सरोमाञ्चम्) वत्स! योऽसि कोऽसि, चक्रवर्त्ती भूयाः ।

---

प्रबन्धस्य प्रसरणाशंसा व्यज्यते । तत्र तपतीसंवरणाख्यं नाटकम् अङ्गभाजां "देवानामिदमामनन्ती"त्युक्तवत् सर्वेषामेव तत्तदधिकारोचितरससमर्पणेन परमानन्दं तनोतु । एतदस्य मुख्यं फलं, यद् रसचर्वणेन सामाजिकानामानन्दकरत्वम् । तादृशं गुणसामग्र्यमाह—परिवृद्धानां तत्तदुचितविभावानुभावव्यभिचारिसमेधितस्थायिरूपाणां रसानां शृङ्गारादीनामङ्गाङ्गिभावस्थितानाम् अनुकूला भावा निर्वेदादयो यत्र । तथा गुणवत् काव्यनाटकोचितशब्दार्थरसाश्रयगुणसम्पन्नम् । तथा प्रोज्ज्वलाः तत्तदितिवृत्तांशनिर्व्यूढाः । आरम्भयत्नप्राप्त्याशानियताप्तिफलागमरूपावस्थापञ्चकबीजबिन्दुपताकाप्रकरीकार्यलक्षणार्थप्रकृतिपञ्चकविभक्तमुखप्रतिमुखगर्भावमर्शनिर्वहणरूपसन्धिपञ्चकविशिष्टम् । ललितं ललिताख्यनाटकजातिरूपम् । ललिताङ्गं ललितसन्ध्याश्रयचतुष्पष्ट्यङ्गयुक्तम् । अथवा ललिताङ्गानि षट्त्रिंशद्भूषणानि । अङ्गभाजाम् अङ्गप्रयोगभाजां नाट्योपजीविनामिति च विवक्षितम् ।

"पूर्णं चैव प्रशान्तं च भास्वरं ललितं तथा ।
समग्रमिति विज्ञेया नाटके पञ्च जातयः" ॥

इत्युक्तत्वादयमर्थः कवेरभिप्रायरूपो व्यज्यते ॥ १३ ॥

वन्दस्व पितराविति मुनिनिर्दिष्टः कुमारः स्वस्वरूपप्रकाशनपूर्वं नमति—एष सांवरणिः कुरुस्तापत्यः पित्रोर्वां पादपङ्केरुहाणि नम्रेण मूर्ध्ना वन्दते । एष सांवरणिरिति परीहृत्य वचनं विनयेन, अहमित्युक्ते औद्धत्यप्रतीतेः । मूर्ध्ना नम्रेणेति मूर्ध्नोऽभिवादने करणत्वम्, तत्रापि नम्रस्यैव । ताम्राणीति पङ्केरुहत्वारोप-

---

१. 'रः—मू' इति क.ख.घ पाठ. २ 'जा—व' इति क.प.पाठ. ३. 'क्च)व' इति ख. पाठ.

**कुमारः**--- (सकौतुकम्)

> पूर्वं निर्जेतुर्दानवीयां च सेना-
>
> मासीन्नैवं सा पुष्पवृष्ट्या सुराणाम् ।
>
> प्रीतिं गात्राणामद्य यामावहेयुः
>
> पित्रोः पादानां पांसवो मामकानाम् ॥ ११ ॥

(उभौ परिक्रामतः)

---

कैलासाद्रौ विषमनयनम् । नाकपृष्ठे महेन्द्रम् । साक्षात्कृत्येत्यनेन तत्तदधिष्ठानस्थितानामीश्वराणां साक्षात्कारेण कृतार्थता व्यज्यते । अथचैतदनन्तरं मिहिरं साक्षात्कृत्य तस्य दौहित्रमेनं पित्रोर्दातुं समर्पयितुम् । अर्थात् तदादेशादिति सिद्धम् । एतत् सर्वं कृत्वेदानीं पौरवसम्बन्धिनीं पुरमुपगतः । अत्र धर्मरक्षकाणामनुग्रहकरणं परोपकारदीक्षितानामस्माकं कृत्यमेवेति निरूप्य कृतार्थतया कथनम् ॥ १० ॥

अथ कुमारः पितृसङ्गमेनासन्नं प्रीतिप्रकर्षं निरूप्याह--- पूर्वमित्यादि । अद्य पित्रोः पादानां पांसवो मामकानां गात्राणां यां प्रीतिमावहेयुः । सा पूर्वं दानवीयां सेनां निर्जेतुः सुराणां पुष्पवृष्ट्येव नासीत् । अद्य न तु कालान्तरे । पित्रोः पादानां पांसवः तत्पदाम्बुजनमस्कारे पवित्रतया सर्वाङ्गस्थिताः पादपांसवः । गात्राणां यां प्रीतिमावहेयुः । अन्तःकरणप्रीतिपरिपोषेण गात्राणां प्रीतिरित्युक्तम् । अत्राखिलपुरुषार्थमूलभूतेऽस्मज्जन्मफलभूते पितृचरणाम्बुरुहवन्दने भाविनः प्रीतिप्रकर्षस्य न सदृशमन्यत् । अतः पादपांसुजा निता । पूर्वं मातामहनियोगेन दानवीयां सेनां निर्जेतुः साधु निर्जेतुः । साधुकारिणि तृन् । अत एव पुष्पवृष्ट्युपपत्तिः । जितवत इत्यर्थः । सुराणां पुष्पवृष्ट्या शत्रुजयेन प्रहृष्टानां देवानां पुष्पवृष्ट्या प्रीतिरासीत् । सा तादृशी न । तस्या अन्यत्रासम्भवात् । भूतभाविन्योः प्रीत्योर्निरूप्यमाणयोर्भाविन्या एव प्रकर्षः पूर्वमेव सम्भाव्यत एवमिति । सा एवं नासीदिति नञन्वये सा इत्यनेनैव प्रस्तुतप्रकर्षस्य प्रतिपादनाद् एवमिति नोदितम् । तथापि पूर्वं तादृशी प्रीतिर्दैवात्कथंचित् तथापि एव नासीदिति योज्यम् । अथवा एवमिमा गात्राणीव पूर्वं दानवीं सेनां निर्जेतुरिति सम्बन्धः ॥ ११ ॥

---

१. (क.) [illegible]

**विदूषकः**—(स्मृत्वा) (क) रक्खसीसम्भमेण एत्तिअं वेळं विसुमरिदो एसो कण्णेउरो ।

**राजा**—(सस्मितम्) अनवसरे दर्शितः कर्णपूरः । अथवायमेव वावसरः । अयं हि—

सुरभिः सुकुमारो मे कण्टकयन् गात्रयष्टिमाश्लेषात् ।
भूयोऽप्यात्मसमस्ते वतसको यातु कर्णान्तम् ॥ १२ ॥

(कर्णपूरमर्पयति)

**राक्षसी**—(ख) महाळाअ ! विशज्जीअदु एशा ळक्खशी ।

**राजा**—अपेहि तावत् (अम्बरान्तं मुञ्चति)

**राक्षसी**—(ग) चिळ जीवेह । (निष्क्रान्ता)

(क) राक्षसीसम्भ्रमेणैतावतीं वेलां विस्मृत एष कर्णपूरः ।
(ख) महाराज ! विसृज्यतामेषा राक्षसी ।
(ग) चिरं जीवतम् ।

अथ तयोरनागतयोर्विदूषकः स्वप्रवृत्तिमाह—राक्षसीसम्भ्रमेणैतावन्तं कालं विस्मृतः कर्णपूरः, ततः आनीतोऽपि न प्रकाशित । तद् गृह्यतामिति शेषः ॥

अनवसरे दर्शित इति । अस्य नायमवसरः विरहव्याकुलत्वादिति भावः । अथवायमेव वावसर इति । स्वस्थानप्राप्तेरिति शेषः । तत्र क्रियाविशेषणं वदति—सुरभिरित्यादि । अयं वतसकः भूयोऽपि मे कर्णा(न्त)यातु । यतः आत्मसमस्त्वत्सम । साम्यमुपपादयति—सुरभिः घ्राणेन्द्रियप्रीतिकरः । त्वमपि तथा । सुकुमारः मृदुतरमन्दारपल्लवकल्पितत्वादतिसुकुमारः । त्वमपि सौकुमार्यविदग्धा । आश्लेषात् मे गात्रयष्टिं कण्टकयन् त्वमपि मदालिङ्गनात् समाश्लिष्टो मे गात्रयष्टिं कण्टकयन् । रोमाञ्चितां कुर्वन् । [illegible] ॥ १२ ॥

[illegible]

नायिका—(सानन्दम्) (क) वच्छ! सिणेहो तुमं जाणइ, ण उण अहं। दिग्घाऊ होहि।

विदूषकः—(ख) णत्थि मे सन्देहो। दप्पणे णिक्खित्तो विअ तुह्माणं एसो पडिबिम्बो।

वसिष्ठः—अलं विचिकित्सया। श्रूयतामस्योदन्तः।

राजा[1]—(सादरम्) अवहितोऽस्मि।

वसिष्ठः—पुरैषा तपनवने गर्भभरणानन्तरमात्मप्रभावादात्मजजमिमं प्रसूतवती।

राजा[2]—ततस्ततः।

वसिष्ठः—ततः सुरैरवध्यानामसुराणां निग्रहार्थमस्य तेजोबलशरीरवर्धनैरभौमैराहारैः पोषणार्थं चानधिगतपुत्रविरहवेद-

(क) वत्स! स्नेहस्त्वां जानाति, न पुनरहम्। दीर्घायुर्भव।

(ख) नास्ति मे सन्देहः। दर्पणे निक्षिप्त इव युवयोरेष प्रतिबिम्बः।

शेषतया। तापत्यः तपतीतनयः। सांवरणिः संवरणात्मजः। पूर्वं सिद्धस्वरूपयोस्तयोर्युवां मे पितराविति बोधनपूर्वं नमस्कारः। कुरुरिति स्वनामकथनम्॥ १४॥

विश्वासमनवलम्बमानोऽप्युक्तार्थोचितामाशिषं प्रयुङ्क्ते—योऽसि कोऽसि चक्रवर्ती भूयाः। अस्मत्पुत्रतायामिदमेवाशास्यमिति भावः॥

अथ नायिकाया उक्तिः—वत्स! स्नेहस्त्वां जानाति, न पुनरहं, स्नेहरूपा मनोवृत्तिस्त्वयि प्रसरत्येव। अतो जानातीत्युक्तम्। सर्वथा दीर्घायुर्भव॥

एवं तयोर्विकल्पं निरस्यति विदूषकः—नास्ति मे सन्देहः। दर्पणे निक्षिप्त इव युवयोरेष प्रतिबिम्बः॥

एवं तद्वितर्कं श्रुत्वा वसिष्ठस्तत्त्वं बोधयति—अलं वितर्केण श्रूयतामस्योदन्तः। पुरैषा तपनवन इत्यादिना तस्योदन्तकथनम्॥

१. 'जा—न' इति ख. पाठः. २. 'जा(गद्गद)' इति ख. पाठः.

नयोरेव युवयोः सूर्यशासनात् प्रसवसमय एव विमोह्यैनां[1] रम्भया गूढमेव सावित्रीसकाशं नीतः । तदेवा[2]नया स्वप्नदर्शनमिवानुभूतम् ।

राजा—ततस्ततः ।

वसिष्ठः—ततः कतिपयदिनजनितदेहमहिमानममुमसुरविजयार्थं प्रार्थितं सुत्राम्णा "कुरु सुरकार्यमि"ति समादिदेश मातामहः । ततश्चायं कुरुरभवत् ।

राजा—ततस्ततः ।

वसिष्ठः—अवसितसुरकार्यमिममद्यात्मसमीपे वर्तमानं मया सह प्रहितवानहिमभानुः ।

राजा[3]—(सबाष्पगद्गद) एहि वत्स ! । (परिष्वज्य मूर्ध्न्युपाघ्रायाङ्कमारोपयति)

नायिका[4]—(क) अय्यउत्त ! अहो दे अत्तम्भ[5]रिदा । (तस्योत्सङ्गाद् बलादाकृष्यालिङ्गन्ती स्तन्यमिश्रैरानन्दाश्रुभिरभिषिञ्चति)

राजा[6]—(विदूषकं दर्शयित्वा) वत्स ! वन्दस्व पितरम् ।

---

(क) आर्यपुत्र ! अहो ते आत्मम्भरिता ।

---

एवं मुने कुमारोदन्तं श्रुत्वा कृतार्थो नायकः प्रथमप्रस्तुतस्य 'प्रियतनये' (अङ्क. १. श्लो. ४)त्यादिना सूचितस्य सन्तापस्यापनयनेन कृतार्थस्तमङ्कमारोपयति ॥

तदा प्रेमोत्सुका नायिका लीलया कान्तमधिक्षिपति—आर्यपुत्र ! अहो ते आत्मम्भरिता स्वभागप्रवणत्वम् । अहो इति साधारणे वस्तुनि ममत्वायमिति भावन न युक्तम् । अहमवसरं न प्रतिपालयामीत्यभिप्रायेण तदुत्सङ्गादाकृष्य पुत्रमालिङ्ग्य स्तन्यमिश्रैरश्रुभिरभिषिञ्चतीत्यनेनोभयोः कृतार्थता प्रकाश्यते ॥

वन्दस्व पितरमिति । पितृवयस्यस्यापि पितृत्वं सौहार्देनेत्युक्तम् ॥

---

१ 'नाद् विमोह्यैना प्रसवसमय एव रम्भ' इति क-ग पाठः   २ 'तदेन' इति क-ख पाठ, 'तदेवान' इति घ. पाठः. ३ 'जा-एहि' इति ख पाठ, 'जा-(गद्गदम्' इति ख घ पाठ ४. 'का-अहो' इति ख पाठ ५ रिता (च' इति ख पाठ ६ 'जा-व' इति क घ पाठ

(कुमारस्तथा करोति)

**विदूषकः[2]** — (हर्षकम्पिताभ्यां कराभ्यामालिङ्ग्य) (क) वच्छ! सोत्थि होदु। (विलोक्याकाशे) उप्पलिए! कीस तुवं आअदा। किं भणासि देवीए सळ्ळराअपुत्तीए पुत्तसंङ्गदं महाराअं सम्भावेदुं पेसिदम्ति। एसो कुमारो पणमिदुं आअच्छइ। गच्छ दाणिं तुवं।

**वसिष्ठः** — किं ते भूयः प्रियमुपहरामि।

**राजा** —

मिहिरदुहिता किं नानीता परेतपतेः पुरा-
दिह भगवता किं वा दत्तो न वंशकरः सुतः।

(क) वत्स! स्वस्ति भवतु। उत्पलिके! कस्मात् त्वमागता। किं भणासि देव्या माल्वराजपुत्र्या पुत्रसङ्गतं महाराजं सम्भावयितुं प्रेषितेति। एष कुमारः प्रणन्तुमागच्छति। गच्छेदानीं त्वम्।

तदभिवादने स्वस्ति भवत्वित्याशिषं प्रयुज्याकाशभाषितेन पूर्वेनायिकावृत्तमासूत्रयति — उत्पलिके कस्मात् त्वमागता। किं भणासि देव्या साल्वराजपुत्र्या पुत्रसङ्गतं महाराजं सम्भावयितुं प्रेषितास्मीति। एतदाकाशभाषितमङ्गीकृत्योत्तरमाह — एष कुमारः प्रणन्तुमागच्छति। गच्छेदानीं त्वमिति। अनेन नायकस्य पुत्रोत्पत्तिम्तयाङ्गीकृतेत्यनेन पूर्वप्रस्तुतमस्य दाक्षिण्यं निर्व्यूढम्॥

एवं परोपकारनिरतो वसिष्ठस्तत्साध्यं ससाध्य पुनरपि पृच्छति — किं ते भूयः प्रियमुपहरामीति। इदं प्रियं निर्व्यूढम्। प्रियान्तरमप्यस्ति चेत् कथय तदपि साधयामीत्यभिप्रायः॥

एवमुक्तः सिद्धानि वस्तूनि प्रत्येकं निर्दिश्य कृतार्थतया साध्यान्तरनिरपेक्षत्वं प्रकाशयति — मिहिरदुहितेत्यादि। इह भगवता मिहिरदुहिता परेतपतेः

१ 'र. — अभिवाद्य' इति क-घ. पाठः २. 'क — (सहर्षमालिङ्ग्य) व' इति ख. पाठः, 'क. — व' इति क. पाठः. ३ 'राज' इति ग. पाठः. ४. 'छ. — भो राजन् (कि' इति ख. पाठः.

मम शतमखो राज्ये वृष्टीरभीष्टविधायिनी-
रपि न कृतवान् भूयः प्रार्थ्यं न वेद्मि फलान्तरम् ॥१५॥

तथाप्येतावदाशंसामहे[1] (भरतवाक्यम्)

अन्योन्यं जगतामपाकविरसा मूर्छन्तु मैत्रीरसाः
सङ्गृह्णन्तु गुणान् कवेः कृतधियां मात्सर्यवन्ध्या धियः ।

पुरात् किं नानीता । भगवतेति भगवदनुग्रह एव सर्वार्थसिद्धौ निमित्त, नत्वस्मत्पौरुषादिकम् । मिहिरदुहिता त्रैलोक्यदीपस्य भगवतः पुत्री । अनेन विपदोऽसहत्व प्रकाश्यते । परेतपतेः पुरादिति । मरणाय जल प्रविष्टा कथञ्चिज्जीविता । अत परेतपतिपुरादाकृष्य भगवतः प्रसादेनानीता । किंनेति निषेधस्याक्षेपाद् विधेः परिस्फुटत्व प्रकाश्यते । आनीतैवेत्यर्थः । तथा भगवता वशकरो वंशोद्वहहेतुभूत सुत किं न दत्तः पूर्वमशरण मामालक्ष्य *भ(ग)वत्सन्निधिं प्राप्य तदनुवादपुरस्सर मां परिणाय्य तादृशानुग्रहेण लब्ध कुमारमिदानीं मिहिरसन्निधेरानीय मम समर्पयता भगवता दत्त एवायम् । पुन पुनर्भगवदनुग्रहेण शतमखो धर्मसाक्षी मम राज्ये अभीष्टविधायिनीर्वृष्टी किं न कृतवान् । अभीष्टविधायिनीरिति । पूर्वमनावृष्टिपीडिते जनपदे अभीष्टसिद्ध्यभावान्नष्टप्राये इदानीमभीष्टविधायिनी व्रीह्यादिसाधनसम्पादनेनाखिलत्रिवर्गहेतुभूता वृष्टी यावत्परितोष पुन पुन प्रवृत्ता अपि न कृतवान् । अपीति प्रश्ने । कृतवानेवेत्यर्थः । भूय उक्तेभ्योऽन्यत् फलान्तरमस्योऽपेक्षणीय न वेद्मीति ॥ १५ ॥ तथापीति । निर्वहणान्तयोग्यस्य शुभशंसनस्य प्रस्तावायाकाङ्क्षाक्षेप मन्त्रौति – तथापीति । एतावदाशंसामहे इति । सकलसाध्येषु सिद्धेष्वपि भगवतोऽनुग्रहोन्मुखत्व द्रष्टुमेतन्मात्रमाशासामहे । एतत् प्रकृतनायकाभेदेन नाटकान्ते भरतस्य नटस्य वचनम् । अन्योन्यमित्यादि । जगतामन्योन्य मैत्रीरसा मैत्री मित्रभाव परस्पर ममत्वरूपम् अत्र रसा अनुरागा मूर्छन्तु वर्द्धन्ताम् । अत्र परस्परद्वेषोऽधर्मादिहेतुतया विनाशहेतुरिति तद्विरुद्धमैत्रीरसो जगदनुग्रहार्थमाशास्यते । तत्रापि विशेष अपाकविरसा पाके कालपरिणतौ अनिष्टाचरणादिना आस्वादरहितत्वमप्राप्ता एकरूपा एव वर्धन्तामित्यर्थः । तथा कृतधिया

१ 'हे' अ कन पाठ

* भगवाध भास्वान् ।

विश्लिष्यद्विषयानुषङ्गकलुषीभावा घनश्यामले
भक्तिर्मे परिपच्यतामहरहः श्रेयस्करी श्रीधरे ॥ १६ ॥

(इति निष्क्रान्ताः सर्वे)

इति षष्ठोऽङ्कः ।

समाप्तमिदं तपतीसंवरणं नाम नाटकम् ।

---

विदुषाम् । धियः मात्सर्यवन्ध्याः परोत्कर्षेऽसहमानत्वं मात्सर्यं तद्रहिताः । कवेः प्रबन्धकर्तुः । गुणान् प्रतिभादीन् । सङ्गृह्णन्तु अङ्गीकुर्वन्तु । अन्यथा कविभणितीनामरण्यरुदितायमानत्वं भवेत् । पुनश्च श्रीधरे मे भक्तिः परिपच्यताम् । सकलसम्पज्जनन्या लक्ष्म्या समाश्लिष्टे भगवति मे भेदभ्रमेण संसारयन्त्रजाले वर्तमानस्य भक्तिः बहुमतिपूर्वा अहरहः परिपच्यतां दिनेदिने स्वयमेव परिपाकं व्रजतु । तत्रापि विशेषोऽपेक्षितः । विश्लिष्यद्विषयानुषङ्गकलुषीभावा विश्लिष्यन् प्रतिदिनं शिथिलीभवन् विषयानुषङ्गेण (कलुषीभावो यया सा) । विषयेच्छानुषङ्गकलुषीभावविश्लेषस्य च तदाश्रयत्वात् कालुष्यापचये भक्तिवृद्धिर्भवेद् भक्तिवर्धनेन कालुष्यविश्लेष इत्यन्योन्योपकारकत्वम् । अत आत्मनः श्रेयोविघातकविषयानुषङ्गकालुष्यं विना भक्तिरेव वर्धतामित्यर्थः । भक्त्यालम्बनस्य दिङ्मात्रं प्रकाशयति -- घनश्यामले इति । नीरदवत् श्यामले अनुसन्धानवि(ग्रह ? षय)स्य भगवद्विग्रहस्य स्मरणे वर्णस्य प्राथम्यमिति श्यामल इत्युक्तम् । उपलक्षणत्वेन पीताम्बरमकरकुण्डलकिरीटकौस्तुभवनमालाशङ्खचक्रादिपरिशोभिते एवम्भूते श्रीधरे भक्तिः स्वयमेव परिपच्यताम् । स्वफलं प्रकाशयति — श्रेयस्करी । श्रेयःप्राप्तिहेतुभूता संसारार्णवे परिवर्तमानस्य जन्तोः श्रीमन्नारायणपदाम्बुरुहसायुज्यमेव श्रेयः तद्धेतुभूता । अत्र भक्तिज्ञानवैराग्येषु भक्तेरेव प्राबल्यम् । सा ज्ञानवैराग्ये समार्पयतीति भक्तेरेव श्रेयस्करीत्वमुक्तम् । एवं नाटकावसाने जगदनुग्रहाय शुभशंसनं कृतम् ॥ शिवम् ॥

इति षष्ठोऽङ्कः ।

इति तपतीसंवरणविवरणं समाप्तम् ।

---

## कथासारः ।

**प्रथमाङ्के**—श्रीमतो हस्तिनपुराधीश्वरस्य सवरणस्यानपत्यतया दुर्मनायमानस्य देवी साल्वराजपुत्री पुत्रीयान्नियमादभावनिश्चयेन निवर्त्यागते विदूषके पूर्वरात्रे स्वदृष्टस्य स्वप्नस्य निवेदनं, तस्य च शुभोदर्कत्वे विदूषकेण निरूपिते नियमक्लिष्टाया देव्या दर्शनाय प्रस्थितस्य पूर्वमेव स्वस्मिन् निबद्धहृदयायास्तपत्याः कर्णपूरस्याधिगम', तद्दर्शनेनादृष्टायामपि तस्यामनुरागोदयश्च प्रतिपाद्यते ॥

**द्वितीयाङ्के**—मृगयाप्रसङ्गेन तपनवनं गतो राजा विदूषकेण सह विनोदक्षम देशमन्विष्यन् क्वचिद् विविक्ते स्फाटिकमण्डपान्त. काममयमानावस्थां तपती प्रत्यक्षतो दृष्ट्वा समिद्धरागो बभूव । अथ तस्यास्तत्सख्योश्च स्वैरालापेन तदवस्थायाः स्वविषयकत्वे निर्धारिते तद्विषयः संवरणस्यानुरागः परा कोटिमारुरोह ॥

**तृतीयाङ्के**—तत्रैव मण्डपे विदूषकेण शिशिरोपचारैरुपचर्यमाणस्य राज्ञः प्रलाप निशम्य तद्विरहव्यथा स्वविषया तपती निश्चित्यानन्दाम्बुधौ निममज्ज । मेनकामुखाच्च सूर्यमाराध्य तस्मादेव तपत्या ग्रहीतव्यता विज्ञाय राजा स्वस्य सूर्योपस्थान प्रतिजज्ञे ॥

**तुरीयाङ्के**—सूर्यप्रसादादधिगतया तपत्या विहरति राज्ञि वस्तुत उत्पन्नेऽपि पुत्रे रम्भामायया तत्र तपत्या स्वप्नभ्रमः, मोहिनिकाख्यया राक्षस्या राज्ञा व्यापादितपुत्रशतया राजान वञ्चयितु प्रयुक्ताया मायाया वैफल्य च प्रपञ्च्यते ॥

**पञ्चमाङ्के**—सूर्यनियोगाद् देवलोक प्रापिताया तपत्या ततस्तस्तामन्विष्यन् राजा विदूषकेण सहामात्यवसुमित्रप्रार्थनया दुर्भिक्षनिवृत्तये सूर्यसारथिनोपनीत रथमारुह्य हस्तिनपुर जगाम ॥

**षष्ठाङ्के**—मोहिनिकाया मायया मर्तुं व्यवसिताना तपती-सवरण-मेनकारम्भाणा तत्साहसनिवृत्तिपूर्वकमेकत्र मेलन, सवरणपुत्रेण कुरुणा शरपञ्जरनिरुद्धायास्तत्त्वनिवेदनपूर्वकं राजान शरण गताया मोहिनिकाया मोचनं, वसिष्ठप्रसादात् स्वपुत्रस्य कुरोः संप्राप्त्या नायकयो सर्वाभीष्टसिद्धिश्चोपवर्ण्यते ॥

---

# श्लोकानुक्रमणिका ।

# श्लोकानुक्रमणिका।